श्रीहरि

पदवाक्यप्रमाणतत्त्वज्ञ-श्रीनागेशभट्टकृता

# वैयाकरणसिद्धान्तपरमलघुमञ्जूषा

सेयम्

श्रीगुरुवरचरणशरणीकरण-लब्धसर्वतन्त्र-स्वातन्त्र्येण सस्वर्णपदक-व्याकरणा
द्यनेकविषयाचार्येण प्रणयनकाले गयास्थब्रजभूषणसंस्कृतमहाविद्यालयीय
व्याकरणप्रधानाध्यापकेन प्रकाशनकाले भागलपुरस्थ-राजकीय
संस्कृत-महाविद्यालयीय-व्याकरण-प्राध्यापकेन
गयामण्डलस्थ-चन्दौतग्रामवासिना
श्रीवंशीधरशर्ममिश्रेण कृतया
'वंशी'-व्याख्यया
समुल्लसिता



प्रकाशक
पं० वंशीधरमिश्र.
ग्राम चन्दौत, पो० अम्बा, जि० गया।

प्रथम संस्करण ] सं० २०१४

# भूमिका

'प्रमेयसिद्धि प्रमाणात्' इति नियममनुसृत्य भगवता गौतमेन 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इति सूत्रितम्, तत्र प्रमाकरणरूप एव प्रमाणशब्दार्थः, प्रमा च न पदार्थमात्रविषयिणी 'घट' इत्यनेन जायमानस्य घटत्वप्रकारकघटविशेष्यकज्ञानस्य प्रमात्वसम्भवेऽपि तज्ज्ञानस्य प्रवृत्तिनिवृत्त्यप्रयोजकतया शब्दे तादृशप्रमाकरणत्वस्य निष्फलत्वापत्तेः। किन्तु प्रवृत्तिनिवृत्त्यन्यतरोपयोगिविशिष्टज्ञानसम्पत्तिर्विचिकित्सानिवृत्तिश्च शब्दप्रयोगफलम्, तच्च वाक्यार्थज्ञानेनैव सम्भवति, वाक्यञ्च 'एकतिङ् वाक्यम्' इति, 'सुप्तिङन्तचयो वाक्यम्' इति, 'क्रिया वा कारकान्विता' इति वास्तु। एवञ्च तादृशवाक्यघटकानि यानि शक्तानि प्रकृतिप्रत्ययात्मकपदानि तदुपस्थापितानामर्थानां परस्परं कः सम्बन्धः? 'विभक्त्यन्ता पदम्' इति लक्षितपदार्थानाञ्च कः सम्बन्धः? कुत्र च तत्पदानां शक्तिः? कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपवृत्तीनां शक्तपदानाञ्च का शक्तिः? वाक्यार्थे कस्य मुख्यविशेष्यतया भानं कस्य विशेषणतयेत्यादीनां सूक्ष्मेक्षिकया पर्यालोचनम् मीमांसकनैयायिकाद्यभिमतसिद्धान्तविवेचनपुरःसरं वैयाकरणाभिमतसिद्धान्तस्वरूपप्रदर्शनपूर्वकञ्च व्याख्यानं भूषणमञ्जूषयोरेवोपलभ्यते नान्यत्र।

एतत्सर्वं प्रक्रियामात्रविदुषामतिव्युत्पन्नानामपि केवलवैयाकरणानामगम्यमेवेति पर्यालोच्य तर्कमीमांसावेदान्तादिशास्त्रस्थविषयैर्मञ्जूषायाः परिपूर्णतया तद्विवेचनक्षमायाश्च प्रकाशकव्याख्याया अभावात् तान्त्रुटिं दूरीकर्तुं सारल्येनान्तेवासिनां ज्ञानाय प्रगाढविदुषां मानसोल्लासाय च संस्कृतभाषया हिन्दीभाषया च व्याख्यानेन स्वीयन्यायवेदान्तमीमांसादिवैदुष्यमभिव्यक्तम् अतिरोषता मञ्जूषागतरहस्यरत्नमाननीयविद्वत्करदम्बायोपहरता अन्तेवासिहृदये च निदधता गयानगरस्थ प्रजभूषणसंस्कृतमहाविद्यालये व्याकरणप्रधानपदमधिरूढवता भागलपुरीयराजकीयसंस्कृतमहाविद्यालये व्याकरणप्रधानपदमधितिष्ठता व्याकरणाद्यनेकविषयाचार्यत्वमाप्तवता

ऊहापोहे विशिष्टप्रतिभामादधता मदन्तेवासिना श्रीवशीधरमिश्रेणैतद्व्याख्यान कौस्तुभेन विद्वद्धृदयम् अलङ्कुर्वता व्याकरणस्य दर्शनत्व व्यवस्थापितमिति—असकृदनुमोदयन् प्रमाणयति—

सभापतिशर्म्मोपाध्यायः एम. एल. सी.

प्रिंसिपल

विरला संस्कृत कालेज

वाराणसी

लालघाट

२४-५-५७

# विशिष्टविदुषां सम्मतयः

श्रीप०वंशीधरमिश्रप्रणीत'वंशी'नामव्याख्याया आद्या कतिपयेंऽशा वलो-किता । लेखकोऽयं कृतश्रम शब्दखण्डे प्रतिभावांश्च प्रतिभाति—प्रसन्नः स्फुटार्थश्चास्य प्रणयनप्रकार, सुविशदो वृत्तिविवेचनविधि, भावग्राही शाब्दबोधीयकार्यकारणभावपरिष्कार ।

एतदभ्यासेन सुकुमारमतीनामपि जिज्ञासुजनानां मनांसि नूनमधिष्ठातुमर्हन्ति श्रीनागोजिभट्टप्रतिपादिता विषया इति—

हिन्दू विश्वविद्यालय काशी,
मि० मार्गशीर्ष ८
सं० २००४

अनुभवति
कालीप्रसादमिश्र

श्री

श्रीमान् प०वंशीधराख्यो विपश्चित्—श्रीनागेशप्रणीतमञ्जूषां संस्कृत हिन्दी भाषोभयवाग्विन्यासेनालोकिष्ट श्रमेण । साधारणासाधारणसंस्कारवदन्तेवासिजनोपचिकीर्षया संस्कृतासंस्कृतोभयशरीरेयं व्याख्या सर्वेषां विचाररसिकानामीप्सितम् अर्थमनायासेन स्फारयन्ती कथं न समादरविषयतामश्नुवीत । यद्यपि समय संकोचात् स्तोकमेवैनां व्यलोकिषि अतोऽदसीयगुणानां विशिष्य प्रदिदर्शयिषया न प्रायतिषि । सञ्चिक्षिप्सयैव पत्रमलिखम् । एतस्मिन् संस्कृतगिरामपचयकाले एतदपि दुर्दर्शमिति संविदानो नितरां सम्प्रसीदामि आशासे भगवतः परमेशितुः रोदस्य प्रयासः शुभयुः स्यात् इति ।

महामहोपाध्याय
प० श्रीहरिहरकृपालु द्वि०

गयापुरीविराजमानव्रजभूषणमहाविद्यालयाध्यापको ध्वनिना स्फोटस्फोटन पटु पं० वंशीधरमिश्रो महावैयाकरण [ भट्टश्रीनागेशकर्तृकतया प्रथितामप्य ज्ञातनाम्ना केनापि पण्डितेनोपस्थापितां ] परमलघुमञ्जूषां स्वनिर्मितयाऽभिनव टीकया समयोजयत् । साचेयं विद्वज्जनदृष्ट्याऽस्माभिर्निभालिता । वंशीरूपापीयं कुञ्जिकाकार्यं करोतीत्यपि वैचित्र्यमस्याः । मञ्जूषोद्घाटनपटीयसी वंशीरियं काचि त्कहिदीमापामयस्वीयवेषविन्यासभावप्रदर्शनकौशलेरज्ञाजनां विदुषां च मनोवि नोदयन्ती स्वस्यामपि तद्दृष्टिमाकर्षत्वित्याशास्महे ।

घननखसमाने वत्सरे कृष्णमासे तदितरपक्षे नवमाने तिथौ ।

महामहोपाध्याय नारायणशास्त्री खिस्ते
प्रधानाध्यापक
गवर्नमेन्ट संस्कृत कालेज बनारस ।
रामाज्ञापाण्डेयः

अधिगय प्रथितसंस्कृतमहाविद्यालयेऽधिगतप्रधानाध्यापकपदेन व्याकरणा चार्यादिनिरुदालङ्कृतेन पण्डितप्रवरवंशीधरशर्मभारद्वाजेन विन्यस्तां व्याकरण-निष्पन्दरत्नस्य परमलघुमञ्जूषाभिधस्य टीकान्तरानाघ्रातचरस्य वंशीधरस्य भगवतो वंशीमिव वंशीटीकामनितरसाधारणपदार्थोपपादनप्रकारभरमाधुरीं सकृदालोच्य कस्य वा व्याकरणसिद्धान्त संजिघृक्षोर्न पुनरेतद्दिदृक्षाकुलं मानसं स्यात् ! यतो विवेचनीयम् यस्य पदार्थानुगतलक्षणतत्समन्वयादिसरलसरणिरन्यत्रादृष्टचरी । अध्ययनाध्यापनादिकार्यक्षेत्रे पटुप्रायस्यास्य ग्रन्थमणयष्टीकानिरहव्याधि सोऽनया चिकित्सित इति परमं प्रमोदस्थानम् वंशीविभूषितोऽचिरं प्रकाश्यमानोऽनवरत विपश्चितामन्तेवासिनां च मनस्तोषमादधद् निरुक्तकार्यक्षेत्रेऽप्यप्रत्यूहमनवरत् अन्यमविलङ्घ्य जङ्घालो भवेत् येन टीकाकर्तुं वैदुष्यपूर्णं प्रयास फलेग्रहितामश्नु वीतेतिशम् कामयते—

काशी
११-१२-४७

कमलाकान्तमिश्र
काशीस्थ गोयनका महाविद्यालयाध्यक्ष ।

# वक्तव्यम्

अथेदानीं सच्चिदानन्दशिवस्वरूपस्य लीलाविलक्षितशब्दार्थप्रपञ्चस्य श्रीकृष्णस्य सुध्युपास्य चरणारविन्दद्वयं साऽनुरागं प्रणम्य सहृदयसुधीषु सादरमिदं निवेदयते—इयं हि शब्दविद्या सकलपुरुषार्थसाधनविधौ संसारे सर्वोपरि विराजते। सर्वासामपि विद्यानां संस्कृतशब्दात्मकतया, संस्कृतशब्दानां व्याकरणेनैव सुज्ञानतया च सभ्यसंसारे महती खल्वावश्यकता व्याकरणस्य। संस्कृतशब्दाश्च स्वनिष्ठवृत्ति निरूपक भूतानामेवाऽर्थानां बोधाय कल्पन्ते। तस्मात् सिद्धान्तभूतानां पदपदार्थवाक्यार्थानां परमेण लघुनोपायेन निरूपणाय पदवाक्यप्रमाणतत्त्वज्ञः श्रीनागेशभट्ट परमां लघु वैयाकरणसिद्धान्तमञ्जूषामिमां विरचितवान्। किन्तु अद्यत्वे सन्तत विविध प्रपञ्च चञ्चलतरीकृतचेतस्तया अस्य ग्रन्थस्य आवश्यकमहाभाष्यदर्शनादिदुरूहविषये परिपूर्णतया च सुमेधसामपि ग्रन्थोऽयं दुर्बोध इव समभूत्। इति कृत्वा केनाऽपि देवेन प्रेरित इवाऽहं गूढ मञ्जूषापिधानोद्भेद मन्त्रवतीमिमां स्वरचितां 'धर्षी' समवादयम्। अनया च सिद्धान्तरत्न-ग्राहकाणां यावान् उपकारो भवितुमर्हति तत्र विदुषामनुभव एव प्रमाणमस्तु।

सेयं 'धर्षी' सम्प्रति विद्वत्कुलमौलिमाला-लालितचरण कमलस्य सन्तत सूरिसमाज साभापत्याद् वर्धनामधेयस्य काशिकाऽलङ्काररूपस्य गुरुवरस्य ( श्रीमत् सभापतिशर्मोपाध्याय महोदयस्य) मूर्तिमत्येव मय्यनुकम्पया मुद्रितात्मतया प्रकाशमासादयति सुधी-समाजे। अपि च अस्या मुद्रणविधौ, काश्यां ब्रह्मघट्टे निवसता अलमोडामण्डलाभिजनेन सतीर्थ्यतया मम सुहृदा सहृदयेन द्विद्वरेण आचार्य श्रीजनार्दनशास्त्रिपाण्डेयेन एकेनैव सकलोऽपि प्रयासोऽनुष्ठितः। अन्यथा काश्यामस्या मुद्रणं सुदूरे वसता मया कथङ्कारं कारितं स्यात्? केवल धन्यवाददान विदुषाऽनेन निष्कारणमित्रेण कृतानामुपकृतीनां तुलां नारोहति।

विद्वत्कुलकमलदिवाकरोऽयं श्रीनागेश—"पातञ्जले महाभाष्ये कृतभूरिपरिश्रमः शिवभट्टसुतो धीमान् सतीदेव्यास्तु गर्भजः।" "शृङ्गवेरपुराधीशाद्रामतो लब्धजीविकः" सर्वन्त्रार्थतत्त्वज्ञ सर्वत्र च निबन्धकृत् वैयाकरणनागेशः।"

गयापुरीविराजमानअभूषणमहाविद्यालयाध्यापको ध्वनिना स्पोऽस्पोऽन्न पटु प० वशीधरमिश्रो महावैयाकरण [ भट्टश्रीनागेशकर्तृकतया प्रथितामप्य ज्ञातनाम्ना केनापि पण्डितेनोत्स्थापितां ] परमलघुमञ्जूषा स्वनिर्मितयाऽभिनव टीकया समयोजयत् । साचेयं विद्वज्ञमहष्टयाऽस्माभिर्निभाल्लिता । यथोरूपापीय कुञ्जिकाकार्यं करोतीत्यपि वैचित्र्यमस्या । मञ्जूषाद्घाटनपटीयसी न्नञ्जुरियं काचि त्कहिन्दीभाषामयस्वीयवेषविन्यासमावप्रदशनकौशलेश्छात्राणां विदुषा च मनोवि नादयन्ती स्वस्यामपि तद्दृष्टिमाकर्षेत्वित्याशास्महे ।

धननलमाने वत्सरे कृष्णमासे
तदितरपक्षे नकमाने तिथौ ।

महामहोपाध्याय नारायणशास्त्री खिस्ते
प्रधानाध्यापक
गवर्नमेन्ट सस्कृत कालेज बनारस ।
रामाज्ञापाण्डेय

अधिगय प्रथितसस्कृतमहाविद्यालयेऽधिगतप्रधानाध्यापकपदेन व्याकरण न्यायादिविद्यालङ्कृतेन पण्डितप्रवरवशीधरशर्मभारद्वाजेन विन्यस्तां व्याकरण-निबन्धरत्नस्य परमलघुमञ्जूषाभिधस्य टीकान्तरानाघ्रातचरस्य वशीधरस्य भगवतो वशामिव वशीटीकामनितरसाधारणपदार्थोपपादनप्रकारभरभासुरां सकृदालोक्य कस्य वा व्याकरणसिद्धान्त सजिघृक्षोर्न पुनरेतद्दिदृक्षाकुल मानस स्यात् ? यतो विवेचनीयम यस्य पदार्थानुगतलक्षणतत्समन्वयास्तिरलसरणिरन्यत्राहष्टचरी । अध्ययनाध्यापनादिकायक्षेत्रे पट्गुणायमानस्य प्रथमगण्यटीकाविरह पाथि सोऽनया चिकित्सित इति परम प्रमोदस्थानम् यथाविभूषितोऽचिरं प्रकाश्यमानोऽनवरत विपश्चितामन्तेवासिनां च मनस्तोपमादघद् निरस्तकार्यक्षेत्रेऽप्यप्रत्यूहमवतरन् अन्यमतिलक्षण अहालो भवेत् येन टीकाकर्तुं र्बहुव्ययपूर्णं प्रयास फलेग्रहितामस्तु वीतेतिराम् कामयते—

काशी
११-१२-८७

कमलाकान्तमिश्रः
काशीस्थ गोयन्का-महाविद्यालयाध्यक्ष ।

# वक्तव्यम्

अथेदानीं सच्चिदानन्दशिवस्वरूपस्य लीलावलिकलितशब्दार्थप्रपञ्चस्य श्रीकृष्णास्य सुधुपास्य चरणारविन्दद्वयं साऽनुरागं प्रणम्य सहृदयसुधीषु सादरमिदं निवेदयते—इयं हि शब्दविद्या सकलपुरुषार्थसाधनविधौ संसारे सर्वोपरि विराजते। सर्वासामपि विद्यानां संस्कृतशब्दात्मकतया, संस्कृतशब्दानां व्याकरणेनैव सुज्ञानतया च सभ्यसंसारे महती खल्वावश्यकता व्याकरणस्य। संस्कृतशब्दाश्च स्वनिष्ठवृत्तिनिरूपकभूतानामेवाऽर्थानां बोधाय कल्पन्ते। तस्मात् सिद्धान्तभूतानां पदपदार्थवाक्यार्थानां परमेण लघुनोपायेन निरूपणाय पदवाक्यप्रमाणतत्त्वज्ञः श्रीनागेशभट्टः परमां लघुं वैयाकरणसिद्धान्तमञ्जूषामिमां विरचितवान्। किन्तु अद्यत्वे सन्ततविविधप्रपञ्चचञ्चलतरीकृतचेतस्तया अस्य ग्रन्थस्य आवश्यकमहाभाष्यदर्शनादिदुरूहविषये परिपूर्णतया च सुमेधसामपि ग्रन्थोऽयं दुर्बोध इव समभूत्। इति कृत्वा केनाऽपि देवेन प्रेरित इवाऽहं गूढमञ्जूषापिधानोद्भेदमन्त्रवतीमिमां स्वरचितां 'वर्षां' समपादयम्। अनया च सिद्धान्तरत्नग्राहकाणां यावान् उपकारो भवितुमर्हति तत्र विदुषामनुभव एव प्रमाणमस्तु।

सेयं 'वर्षा' सम्प्रति विद्वत्कुलमौलिमालालालितचरणकमलस्य सन्तत-सूरिसमाजसामापत्यादन्वर्थनामधेयस्य काशिकाऽलङ्काररूपस्य गुरुवरस्य ( श्रीमत्-समापतिशर्मोपाध्याय महोदयस्य) मूर्त्तिमत्येव मय्यनुकम्पया मुद्रितालतया प्रकाशमासादयति सुधी-समाजे। अपि च अस्या मुद्रणविधौ, काश्यां ब्रह्मघट्टे निवसता अलमोड़ामण्डलाभिजनेन सतीर्थ्यतया मम सुहृदा सहृदयेन विद्वद्वरेण आचार्य श्रीजनार्दनशास्त्रिपाण्डेयेन एकेनैव सकलोऽपि प्रयासोऽनुष्ठित। अन्यथा काश्या मत्या मुद्रणं सुदूरे वसता मया कथङ्कार कारित स्यात्? केवलं धन्यवादप्रदानं विदुषाऽनेन निष्कारणमित्रेण कृतानामुपकृतीनां तुलां नारोहति।

विद्वत्कुलकमलदिवाकरोऽयं श्रीनागेश—"पातञ्जले महाभाष्ये कृतभूरिपरिश्रमः शिवभट्टसुतो धीमान् सतीदेव्यास्तु गर्भजः।' 'श्रृङ्गवेरपुराधीशाद्रामतो लब्धजीविकः' सर्वतन्त्रार्थतत्त्वज्ञ सर्वत्र च निबन्धकृत् वैयाकरणनागेश"।'

| विषय | पृष्ठे |
|---|---|

॥ श्रीगणेशाय नमः ॥

# परमलघुमञ्जूषा



शिवं नत्वा हि नागेशेनानिंद्या परमा लघुः ।
वैयाकरणसिद्धान्तमञ्जूषेषा विरच्यते ॥ १ ॥

---

श्री ।

*शिवौ नत्वा मुनीशाँस्ता हरी वैयटदीक्षितौ ।*
*श्रीनागेशान् गुरूंश्च श्रीदामोदरसभापतीन् ॥ १ ॥*
*नागेशग्रटमञ्जूषा पिधानोद्भेदमञ्चिकाम् ।*
*वंशीधरोऽधुना वंशी वादयत्येष पण्डिताः ॥ २ ॥*

"मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते" इति महाभाष्यस्मृति शिष्टाचारानुमितश्रुतिसिद्धाऽऽचरणक ग्रन्थसमाप्तितत्प्रचारादिप्रतिबन्धकदुरितप्रशमाय समाचरितं वक्ष्यमाणलक्षणं मङ्गलं शिष्यशिक्षार्थं व्याख्यातृश्रोतृणामनुसङ्गतो मङ्गलाय च ग्रन्थतः कीकुर्वन्नाचार्यो नागेशनामा प्रेक्षावतां प्रवृत्तये प्रवृत्तिप्रयोजकज्ञानजनकज्ञानविषयरूपमनुबन्धचतुष्टयं निरूपयति—शिवं नत्वेति । शिवमिति—ईशमहेश्वरादिपदवाच्यं ब्रह्मेत्यर्थः । पाणिनीयव्याकरणस्य शिवसूत्रमूलकतया पाणिनीयैर्विशेषेण शिव उपास्य इति ध्वनिः । नत्वेति—आशीर्वदनानुकूलव्यापारप्रयोज्यफलाऽऽश्रयत्वेनोद्देश्य कृत्वेत्यर्थः । नम्-धात्वर्थश्चप्रकृते—आशीर्वदनानुकूलो व्यापारः ( करशिरःसयोग विशेषादि रूपः ) अतएव अभिवादनेनास्य पर्यायत्वं प्रत्यभिवादनेनचाशीर्वादस्येति । केचित्तु स्वाऽनधिकोत्कर्षविशिष्टज्ञानाऽनुकूलो व्यापारो नम् धात्वर्थः । वैशिष्ट्यञ्च—

स्वप्रकारकज्ञानविशेष्यसमवेतत्व-स्वप्रकारकत्वैतदुभयसम्बन्धेन । उदासीनस्य कर्मत्व वारणाय वैशिष्ट्यनियामकप्रथमसम्बन्धोपादानमिति वदन्ति । अपरे तु स्वाऽपकर्ष विशिष्टज्ञानानुकूलव्यापारो नम् धात्वर्थः । वैशिष्ट्यञ्च—स्वनिरूपकसमवेतत्व स्व प्रकारकत्वैतदुभयसम्बन्धेनेति तर्कयन्ति । अन्ये तु स्वाऽपकर्षप्रकारकज्ञानाऽऽश्र यत्वप्रकारकस्वविशेष्यकस्वापकर्षनिरूपकसमवेतज्ञानानुकूलव्यापारो नम्-धात्वर्थः नमस्कार । स्व नमनकर्ता, तदपकर्षप्रकारकज्ञानाश्रयत्वप्रकारकं तदपकर्षनिरूपक-समवेतं तद्विशेष्यकम्—'नमनकर्ता स्वापकर्षप्रकारकज्ञानाश्रय' इति ज्ञानम् नमन कर्मनिष्ठम्, तदनुकूलो नमनकर्तृनिष्ठो हस्तसंचलनादिरूपो व्यापारो धात्वर्थ इति समन्वय इति परिष्कुर्वन्ति । शिवं नत्वेत्यनेन मङ्गलमाचरितम् ।

मङ्गलत्वञ्च विघ्नभिन्नत्वे सति विघ्नध्वंसप्रतिबन्धकाऽभावभिन्नत्वे च सति प्रारिप्सितविघ्नध्वंसाऽसाधारणकारणत्वम् । विघ्नेऽतिव्याप्तिवारणाय प्रथमसत्यन्तम्, विघ्नस्याऽपि स्वध्वंसाऽसाधारणकारणत्वात् । प्रतिबन्धकाऽभावेऽतिव्याप्तिनिरासाय द्वितीयसत्यन्तम्, तस्य साधारणकारणत्वमते तु नेदं विशेष्यम् । कारीरीयागेऽतिव्याप्तिनिस्ताराय प्रारिप्सितेति, तस्याऽपि विघ्नभिन्नत्वाद्विघ्नध्वंसप्रतिबन्धकाऽभावभिन्नत्वात्, वृष्टिप्रतिबन्धकानां विघ्नानां यो ध्वंसस्तस्याऽसाधारणकारणत्वाच्च । ईश्वरादिसाधारणकारणे तत्त्वनिवारणाय असाधारणेति । कार्यमात्रं प्रति साधारणकारणानि—ईश्वर, तज्ज्ञानेच्छाकृतय, दिक्कालौ, अदृष्टं, प्रागभावश्चेत्यष्टौ । प्रागभावस्थाने प्रतिबन्धकाऽभाव निवेश्य आकाशमधिकं दत्वा नवेति वदन्तीत्यन्यत्र विस्तर ।

ननु मङ्गलं न विघ्नध्वंसस्य कारणम्, सत्यपि मङ्गले कादम्बर्यादौ विघ्नध्वंसाऽदर्शनात्, असत्यपि तस्मिन् नास्तिकानां ग्रन्थे विघ्नध्वंसदर्शनाच्च कारणत्वेनाऽभिमतस्य मङ्गलस्य कार्यत्वेनाऽभिमतेन विघ्नध्वंसेन सहाऽन्वयव्यतिरेकव्यभिचारेण तस्य कार्यव्यापकत्वरूपकारणत्वाऽनापत्तेरितिचेत्—न, 'मङ्गलं सफलम्, अविगीतशिष्टाऽऽचारविषयत्वात्' 'मङ्गलं विघ्नध्वंसफलकं विघ्नध्वंसाऽव्यापकत्वे सति सफलत्वात्' इत्यनुमानाभ्यां मङ्गलस्य विघ्नध्वंसं प्रति कारणत्वस्य साधनात् । सत्यपि मङ्गले यत्र विघ्नध्वंसो न दृश्यते तत्र बलवत्तरविघ्नसत्त्वाऽनुमानेन बलवत्तरविघ्नध्वंससमर्थमङ्गलस्याऽभावेनाऽन्वयव्यभिचाराऽभावात्, यत्र

वत्तरविघ्नध्वंसं प्रति बलवत्तरस्यैव मङ्गलस्य कारणत्वात्। विनाऽपि मङ्गलं यत्र विघ्नध्वंसो दृश्यते तत्राऽपि जन्मान्तरीयस्य तस्य सत्त्वानुमानेन व्यतिरेकव्यभिचाराऽभावाच्चेत्यन्यत्र विस्तरः।

नागेशेनेति—'आत्मनाम' इतिनिषेधस्तु 'रामो द्विर्नाऽभिभाषते' 'तदुपर्यपि बादरायण-सम्मवात्' इत्यादि शिष्टप्रयोगदर्शनात् प्रतिज्ञाकालिकाऽतिरिक्तनामोच्चारणविषयकः, 'नो शब्दं कीर्तयेदन्ते स्वस्यनाम्नोऽभिवादने' इति स्मृतेरभिवादनाऽतिरिक्तविषयकश्चेति प्रकृते न तन्निषेधोल्लङ्घनप्रयुक्तः स्वल्पोऽपि प्रत्यवाय इति बोध्यम्।

परमा लघुरिति—तत्त्वञ्च शब्दाऽल्पत्वेन। अनुबन्धमाह—वैयाकरणेति—[ अनुबन्धत्वञ्च—प्रवृत्तिप्रयोजकज्ञानविषयत्वम् ]।

अनुबन्धत्वञ्च—प्रवृत्तिप्रयोजकज्ञानजनकज्ञानविषयत्वम्, अथवा अध्ययनजनकप्रवृत्तिजनकचिकीर्षाजनकज्ञानजनकज्ञानविषयत्वम्। "क्रियाऽपि कृत्रिमं कर्म, क्रियाऽपि क्रिययेप्सिततमा भवति। कया क्रियया? सन्दर्शनक्रियया वा, प्रार्थयतिक्रियया वा, अध्यवसतिक्रियया वा। इह य एष मनुष्यः प्रेक्षापूर्वकारी भवति, स बुद्धया तावत्कञ्चिदर्थं सम्पश्यति, सदृष्टे प्रार्थना, प्रार्थनायामध्यवसायः, अध्यवसाये आरम्भः, आरम्भे निर्वृत्तिः, निर्वृत्तौ फलाऽवाप्तिः, एवं क्रियाऽपि कृत्रिमं कर्म" इति "कर्मणायम्" इति सूत्रस्थभाष्यात् "सर्वे इमे स्वभूत्यर्थं यतन्ते" इति हेतुमति चेति सूत्रस्थभाष्याच्च—क्रियां प्रति प्रवृत्तेः, प्रवृत्तिं प्रति चिकीर्षायाः, चिकीर्षां प्रति च इष्टसाधनताज्ञानस्य कारणत्वमिति प्रक्रिया हि लभ्यतेऽनुभवाच्च। तथा च—अध्ययनजनकप्रवृत्तिजनकचिकीर्षाजनकं ज्ञानम्—'अध्ययनं मदिष्टसाधनम् मत्कृतिसाध्यञ्च' इति, तज्जनकं विषयप्रयोजनसम्बन्धाधिकारिचतुष्टयज्ञानम्, तद्विषयत्वञ्च तच्चतुष्टयस्य इति तेषामनुबन्धत्वमिति लक्षणसमन्वयः। 'अध्ययनं मदिष्टसाधनम् मत्कृतिसाध्यञ्च' इति ज्ञानस्य जनकत्वन्तु अनुबन्धज्ञानेऽनया रीत्या बोध्यम्—तथाहि, अध्ययनकर्मीभूतग्रन्थप्रतिपाद्याऽर्थस्य विषयत्वात्, प्रवृत्त्युद्देश्यस्य प्रयोजनत्वात्, अध्ययनकर्मीभूतग्रन्थार्थधारणसमर्थस्याऽधिकारित्वात्, अध्ययनप्रयोजनयोर्योजनाहेतोश्च सम्बन्धत्वात्,—मञ्जूषाऽध्ययनस्य वैयाकरणसिद्धान्ता विषयाः, तज्ज्ञानं यथाशब्दज्ञानजन्यवेदरक्षादि भाष्योक्तं प्रयो

षोढा। अखण्डपदस्फोटोऽखण्डवाक्यस्फोटश्चेति सकलनयाष्टौ स्फोटाः। तत्र वाक्यस्फोटो मुख्यः तस्यैव लोके ऽर्थबोधकत्वात्तेनैवार्थसमाप्तेश्चेति। तदाह न्यायभाष्यकारः। पदसमूहो वाक्यमर्थसमाप्ताविति। अस्य समर्थमिति शेषः। तत्र प्रतिवाक्यं सङ्केतग्रहासम्भवात् वाक्यान्वाख्यानस्य लघूपायेनाशक्यत्वाच्च। कल्पनया पदानि प्रविभज्य पदे प्रकृतिप्रत्ययभागान्प्रविभज्य कल्पिताभ्यामन्वयव्यतिरेकाभ्यां तत्तदर्थविभागं शास्त्रमात्रविषयं परिकल्पयन्तिस्माचार्याः। तत्र शास्त्रप्रक्रियानिर्वाहको वर्णस्फोटः। प्रकृतिप्रत्ययास्तत्तदर्थवाचका एवेति तदर्थः। उपसर्गनिपातधात्वादिविभागापि काल्पनिकः स्थानिनो लादय आदेशास्तिबादयः कल्पिता एव। तत्र ऋषिभिः स्थानिना कल्पिता यथा कण्ठरवेणैवोक्ता। आदेशाना च स्थान्ययाभिधानसमर्थस्यैवादेशतेतिन्यायात्तऽर्थाः। एवं च स्थानिना वाचकत्वमादेशाना वेति विचारो निष्फल एव। कल्पितवाचकत्वस्योभयत्र सत्त्वात् मुख्य वाचकत्वं तु कल्पनया बोधितसमुदाय

---

यागदिरिति बोध्यम्। अष्टौ स्फोटा इति—वर्णः, सखण्डपद, सखण्डवाक्यम्, अखण्डपदम्, अखण्डवाक्यञ्चेति पञ्च व्यक्तय स्फोटाः। वर्णत्व, सखण्डपदत्व, सखण्डवाक्यत्वञ्चेति तिस्रो जातय स्फोटाः, इतिसङ्कलनयाऽष्टौ स्फोटास्सन्ति। अखण्डपदवाक्ययोस्तु न जातिः, तयोरेकत्वात्, जातेश्चानेकसमवेतत्वात्, इति न जातिस्फोटस्याऽपि पञ्चत्वम्। वर्णस्तु अखण्ड एव सर्वदा, इति न व्यक्तिस्फोटस्य षड्विधत्वम्, न वाऽखण्डेति विशेषणमपि तत्राऽऽवश्यक, व्यभिचाराऽभावादिति सारम्। तस्यैव लोक इति—अनेन वाक्यस्फोटे लोकव्यवहारस्य प्रामाण्यमिति दर्शितं भवति, वृद्धव्यवहारेण वाक्य एव प्रथमं शक्तिग्रहादिति भाव। वर्णपदस्फोटयोरपि स्वीकारे प्रमाणमाह—तत्र प्रतिवाक्यमिति—वर्णपदयो स्फोटत्वे व्याकरणशास्त्रमेव प्रमाणमिति सारम्। व्याकरणेन प्रकृतिप्रत्ययभागव्युत्पादनेन वर्णस्य स्फोटत्वसिद्धिः, प्रकृतिप्रत्ययौ तत्तदर्थवाचकाविति 'वर्णस्फोट' इत्यस्य हि तात्पर्यम्, वर्णशब्दस्य पदाऽवयवप्रकृतिप्रत्ययभागपरत्वात्। प्रकृतिप्रत्ययभागव्युत्पादनद्वारा पदव्युत्पादनमिति पदस्फोटस्याऽपि सिद्धिरिति भाव।

रूपे पदे वाक्ये वा लोकानां तत एवार्थबोधात् उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता इति न्यायेन व्याकरणभेदेन स्थानिभेदेऽपि न क्षतिः । देशभेदेन लिपिभेदवद्विदिक् । तत्र प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति गौतमसूत्रे शब्दश्चाप्तोपदेशरूपः प्रमाणम् । आप्तो नामानुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः स

---

उपेयप्रतिपत्त्यर्थेति—पूर्वार्धेन सह श्लोकोऽयं यथा—

*पञ्चकोशादिवत्तस्मात्कल्पनैषा समाश्रिता ।*
*उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता ॥ इति भूषणसारे ।*

*अस्यार्थः*—यथा आनन्दवल्लीनामोपनिषद्विशेषे अन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयात्मकपञ्चकोशा अपारमार्थिकब्रह्मप्रतिपादनपराः पुच्छं सर्वाधारभूतं ब्रह्मेति वास्तवब्रह्मणो बोधायोपायतयाऽऽश्रिताः । आदिशब्दात् यथा वा अरुन्धतीज्ञानार्थं स्थूलनक्षत्रे अपारमार्थिकारुन्धतीत्वबोधनमुपायस्तथैव वास्तविकाऽखण्डवाक्यस्फोटव्युत्पादनार्थम् । एषा प्रकृतिप्रत्ययादिकल्पना समाश्रिता, यत उपेयस्य बोद्धव्यस्य प्रतिपत्त्यर्था ज्ञानार्थं उपाया साधनानि—अव्यवस्थिता अनन्ता भवन्तीति ।

तत्र कीदृशः स्फोटः प्रमाजनक इति जिज्ञासायां प्रसङ्गात् सर्वाण्यपि प्रमाजनकानि उक्त्वा आप्तोपदेशरूपस्य स्फोटस्य प्रमाजनकत्वं निरूपयति—तत्र प्रत्यक्षेत्यादि । तत्र लोके वेदे च यथासम्भवमित्यर्थः । प्रत्यक्षं चक्षुरादीन्द्रियम्, अनुमानं व्याप्तिज्ञानम्, उपमानं सादृश्यज्ञानम्, शब्दः प्रतीतपदार्थको ध्वनिः, स्फोटात्मकश्चेति द्वन्द्वः । प्रमीयते प्रमा क्रियतेऽनेनेति प्रमाणम्, करणे ल्युट् । तद्वति तत्प्रकारकं ज्ञानं प्रमा तत्करणानीत्यर्थः । अत्रेदं बोध्यम्—एकं प्रत्यक्षमेव प्रमाणमिति चार्वाकाः, प्रत्यक्षमनुमानञ्चेति वैशेषिकाः, प्रत्यक्षमनुमानमागम इति साङ्ख्याः, प्रत्यक्षानुमानोपमानशब्दा इति नैयायिकाः, अर्थापत्त्यनुपलब्धिभ्यां सह षडिति भाट्टवेदान्तिनौ, सम्भवैतिह्याभ्यां सहाष्टाविति पौराणिकाः, चेष्टया सह नवेति आलङ्कारिका आहुः । तत्र नैयायिकमत एव प्रपञ्चिता नियोगाद[illegible]ाति । विस्तरस्त्वन्यत्र द्रष्टव्यः । आप्तोपदेशेति—आप्तस्योपदेशः, आप्तश्चा

इति चरके पतञ्जलिः ॥ तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः । अत एव नागृहीतवृत्तिकस्य शाब्दबोधः । अत एव च नहि गुड इत्युक्ते मधुरत्वं प्रकारतया गम्यत इति समर्थसूत्रभाष्यं सगच्छते । गुडादिशब्देन गुडत्वजात्यवच्छिन्नो गुडपदवाच्य इत्येव बोधो जातिप्रकारकः । मधुरत्वं तु गुडो मधुरः ऐक्षवत्वादित्यनुमानरूपमानान्तरगम्यम् । विशेष्यविशेषणभावव्यत्यासेन गृहीतशक्तिकस्य पुंसो घटपदात् घटत्वविशिष्टघटबोधवारणाय

---

साधुरदेश इति तन्त्रेण समासद्वयं द्रष्टव्यम्, तेन वेदानामपौरुषेयत्वेऽपि न क्षतिः । आप्तोपदेशस्यैव शब्दस्य प्रामाण्यमित्यत्र "यस्त्वप्रमत्तगीतस्तत्प्रमाणम्" इति पतञ्जलिभाष्यमेव प्रमाणमिति बोध्यम् ।

ननु शब्दस्य प्रामाण्ये स्थिते घटशब्दात् पटविषयिणी प्रमा कस्मान्न जायते ? कस्माद्वा घटत्वप्रकारकघटविशेष्यकज्ञानं नोत्पद्यते ? कस्माद्वा वृत्तिज्ञानशून्यस्य, विस्मृतवृत्तिकस्य वा तच्छब्दज्ञानरहितस्य वा चैत्रादेर्ज्ञानं नाविर्भवति ? कस्माच्च घटपदाश्रयत्वेनोपस्थितस्याकाशस्य जनकतयोपस्थितस्य चैत्रादेर्वा शब्दजन्यज्ञाने विषयतया भानं न भवति ? कस्माद्वाऽगृहीतवृत्तेरपि पदान्न ज्ञानम् ? इत्याद्याशङ्का परिजिहीर्षन् शिष्टाऽनुभवसिद्धं कार्यकारणभावमेकं प्रदर्शयति—तद्धर्मेत्यादि । अत्राऽयं परिष्कारः—वृत्तिज्ञानशून्यस्य शाब्दबोधवारणाय शाब्दबुद्धिं प्रति वृत्तिज्ञानं हेतुरित्युक्ते यत्किञ्चिच्छाब्दबोधव्यक्तेर्वारणेऽपि तदितरशाब्दबोधव्यक्त्यापत्तिर्दुर्वारा । तद्वारणाय शाब्दबुद्धित्वाऽवच्छिन्नं प्रति वृत्तिज्ञानं हेतुरिति कथने सकलशाब्दबोधव्यक्तीनां सङ्ग्रहेण सकलशाब्दबोधव्यक्तीः प्रति वृत्तिज्ञानस्य हेतुत्वकथनेन वृत्तिज्ञान-शून्यस्य हेत्वभावे कार्याऽभावेन पूर्वोक्तदोषनिरासेऽपि न निस्तारः, घटविषयकशाब्दबुद्धित्वाऽवच्छिन्नं प्रति पटनिरूपितवृत्तिज्ञानस्यापि हेतुत्वापत्तेः । तद्वारणाय 'वह्निविषयकशाब्दबुद्धित्वाऽवच्छिन्नं प्रति तन्निरूपितवृत्तिज्ञानं हेतु'रिति वाच्यम् । एवञ्च घटविषयकशाब्दबुद्धित्वाऽवच्छिन्नं प्रति पटनिरूपितवृत्तिज्ञानस्य हेतुत्वापत्तिर्न । अपि च घटपदात् समवायेनोपस्थिताकाशस्य जनकतयोपस्थितचैत्रादेश्च शाब्दबोधापत्तिर्न । किन्तु एवं सत्यपि घटप्रकारकघटत्वविशेष्यकवृत्तिज्ञानादपि घटत्वप्रकारकघटविशेष्यकशाब्द-

तद्धर्मावच्छिन्नेनेति। ज्ञाने वृत्तिवैशिष्ट्यं च स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्यस्वाश्रयपदविषयकत्वोभयसम्बन्धेन बोध्यम्। अतो नागृहीतवृत्तिकस्य नापि विस्मृतवृत्तिकस्य नापि तत्पदमजानतः नापि घटपदाश्रयत्वेनोपस्थिताकाशस्य नापि जनकतयोपस्थितचैत्रादेश्च बोधः। संस्कारफलिका च वृत्तिः स्मृतिरेव शाब्दबुद्धिरेव वेत्यन्यदेतत्। सा च वृत्ति

---

बोधापत्तिः, एवं घटत्वप्रकारकघटविशेष्यकशाब्दबुद्धित्वावच्छिन्नं प्रति घटप्रकारकघटत्वविशेष्यकवृत्तिज्ञानस्यापि हेतुत्वापत्तिः। तद्वारणाय 'तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिज्ञानस्य हेतुत्वमित्युक्तौ' प्रकारीभूतधर्मस्यावच्छेदकत्वेन घटत्वप्रकारकघटविशेष्यकशाब्दबुद्धित्वावच्छिन्नस्य घटत्वावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नतया घटत्वावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति 'घटत्वावच्छिन्नघटः घटपदवाच्यः' इत्याकारकस्य घटत्वावच्छिन्ननिरूपितवृत्तिज्ञानस्यैव हेतुत्वेन 'घटावच्छिन्नघटत्वं घटपदवाच्यम्' इत्याकारकस्य घटावच्छिन्नघटत्वनिरूपितवृत्तिज्ञानस्य हेतुत्वाभावात्, तदपि द्वयवारणेऽपि न शिवम्, अनुभवात्मके तादृशवृत्तिज्ञाने सत्यपि उपेक्षया वृत्तिविस्मृतवतो वृत्त्याश्रयीभूतपदोपस्थानहीनस्य वा जनस्य शाब्दबोधादर्शनेन हेतौ सत्यपि कार्याभावे हेतौ कार्यान्वयसहचाराभावप्रसङ्गात्। तद्वारणाय तादृशवृत्तिविशिष्टज्ञानस्यैव हेतुत्वं वाच्यम्। वै०—स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्यस्वाश्रयपदविषयकत्वोभयसम्बन्धेनेति। तथा च मूलोक्तः कार्यकारणभावो युक्त एव। अत्र शिष्टानुसारः, 'नहि गुड इत्युक्ते मधुरत्वं प्रकारतया गम्यते' इति समर्थसूत्रस्थं भाष्यञ्च प्रमाणमिति दिक्।

नन संस्कारस्यातीन्द्रियत्वेनाऽप्रत्यक्षत्वेन तत्सत्त्वे किं मानम्? अत आह—संस्कारफलिकेति—फलिका अनुमापिका इत्यर्थः वृत्तिस्मृतिरूपकार्येण संस्काररूपकारणस्यानुमानमिति भावः। ननु वृत्तिस्मृतावेव किं मानम्? अत आह—शाब्दबुद्धिरेव वेति। शाब्दबोधेन वृत्तिस्मरणानुमानं, वृत्तिस्मरणेन संस्कारानुमानमिति तात्पर्यम्। अन्यदेतत् इति—नात्र कश्चित् विवाद इति भावः। वृत्तिरिति—वृत्तित्वञ्च शक्तिलक्षणान्यतमत्वम् इति।

द्विधा। शक्तिर्लक्षणा व्यञ्जना च। तत्र शक्तिः कः पदार्थ इति चेत्? अत्र तार्किकाः। अस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारा इदं पदमिममर्थं बोधयत्वित्याकारा वेश्वरेच्छा शक्तिः लाघवात्। सैव सङ्केतः सम्बन्धः। शक्तेर्यद्यपि विषयत्वलक्षणः सम्बन्धः पदेऽर्थे बोधे च तथापि बोधनिष्ठजन्यतानिरूपितजनकतावत्त्वेनशक्तिविषयो वाचकः शक्तिजन्यबोधविषयत्वेन

अस्मादिति—इदन्तु सम्प्रदायानुगतम्, 'घटपदात् घटो बोद्धव्य' घटपदात् घटो बोद्धव्य' इत्यादिविशेषाकारैवेच्छा विवक्षिता, अन्यथाऽतिप्रसङ्गात्। इदं शब्दार्थस्याऽभेदेन शब्दपदार्थेऽन्वयः, शब्दपदोत्तरपञ्चम्या जन्यत्वमर्थः, तत्र प्रकृत्यर्थस्य निरूपितत्वसम्बन्धेनाऽन्वयः, जन्यत्वस्य च बुधधात्वर्थबोधे स्वरूपसम्बन्धेनाऽन्वयः, बोधस्य च निरूपितत्वसम्बन्धेन तव्यप्रत्ययार्थ-विषयतायामन्वयः, विषयतायाश्च स्वरूपसम्बन्धेन अर्थपदार्थेऽन्वयः। तथा च—इदमर्थाऽभिन्नशब्दनिरूपितजन्यतावद्बोधनिरूपितविषयतावानर्थ इत्यर्थविशेष्यिकेच्छा। विनिगमनाविरहादाह—इदं पदमिति—इदम्पदार्थस्य अर्थपदार्थेऽभेदेनाऽन्वयः, अर्थपदार्थस्य विषयतारूपाऽमर्थे निष्ठत्वसम्बन्धेनान्वयः, विषयत्वस्य च निरूपकत्वसम्बन्धेन 'बुध' धात्वर्थबोधेऽन्वयः, बोधस्य च निरूपितत्वसम्बन्धेन जनकत्वरूपेण्यर्थेऽन्वयः, तस्य च निरूपितत्वसम्बन्धेन आख्यातार्थे आश्रयत्वेऽन्वयः, तस्य च स्वरूपेण प्रथमान्तपदार्थेऽन्वयः। तथा च—इदमर्थनिष्ठविषयतानिरूपकबोधनिरूपितजनकतानिरूपिताश्रयतावदिदं पदमिति पदविशेष्यिका ईश्वरेच्छा। लाघवादिति शक्ति-सङ्केतयोरैक्ये हि लाघवम्, ईश्वरेच्छारूपसङ्केतात्, अन्यादृशशक्तिस्वीकारे तु पदार्थद्वयकल्पनाप्रयुक्तगौरवमिति भावः। सैव सङ्केतः सम्बन्ध इति—ईश्वरेच्छैव सङ्केतपदवाच्यः, पदपदार्थयोः सम्बन्धश्चेत्यर्थः। 'यद्यपि' घटितवाक्येन शङ्कते—शक्तेर्यद्यपीति—ननूक्तेच्छाया घटकीभूता पदं, जन्यजनकभावः, अर्थः, बोधः, (तव्यप्रत्ययार्थः) विषयता, यथायथं सम्बन्धाश्चेतामे सर्वेऽपि पदार्था इच्छाया विषयीभूताः सन्ति तथा चेच्छाविषयत्वं वाच्यत्वम्, इच्छाविषयत्वं वाचकत्वमिति वाच्यवाचकलक्षणयोरतिप्रसङ्ग इति शङ्काभिप्रायः। मूले त्रयाणामेव पदतदर्थबोधानामिच्छाविषयत्वकथनन्तु प्राधान्याऽभिप्रायेणेति बोध्यम्। समाधत्ते—तथापीति। ननु वृद्धव्यवहारदर्शनेन वाक्य एव शक्तिग्रहो न तु पदे

शक्तिविषयो वाच्य इति नातिप्रसङ्गः । यद्यपि प्रथमं शक्तिग्रहो वाक्य एव तथाप्यावापोद्वापाभ्यां शास्त्रकृत्कल्पिताभ्यां तत्तत्पदशक्तिग्रह इत्याहुः ।

---

इति तत्र शक्तिर्नस्यादित्यत आह—यद्यपीत्यादि । आवापः = निक्षेपः, उद्वापः = निःसारणम् । यथा—घटमानयेत्यत्र घटपदस्यावापः, पटमानयेत्यत्र घटपदस्योद्वापः पटपदस्यावापः इति । ननु नैयायिकानां मतेऽपि वाक्येनैवार्थसमाप्तेर्वाक्यस्यैव वास्तवबोधकत्वेन पदीयशक्तिग्रहार्थमावापोद्वापयोः कथं सत्यत्वमिति चेदाह—शास्त्रकृत्कल्पिताभ्यामिति । इत्याहुरिति—ननु ईश्वरेच्छाया 'घटशब्दात् घटो बोद्धव्यः,' 'पटशब्दात्पटो बोद्धव्यः' इत्यादि समूहालम्बनात्मकत्वेनैकत्वात् 'घटशब्दात्, घटो बोद्धव्य' इतीच्छीयविषयता पटेऽप्यस्तीति पटोऽपि घटपदवाच्यः स्यात् ! यदि आश्रयत्वसम्बन्धावच्छिन्नघटपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन येश्वरेच्छा सैव शक्तिरिति नातिप्रसङ्गः, तादृशसम्बन्धेनेश्वरेच्छाया घट एव सत्त्वेन पटेऽभावादित्युच्यते, तथापि गङ्गापदात्तीरबोधस्यापि जायमानत्वेन तादृशसम्बन्धनिरूपकेश्वरेच्छायास्तीरेऽपि सत्त्वेन शक्यत्वे निरूढलक्षणोच्छेदापत्तिरिति चेन्—न, आश्रयत्वसम्बन्धावच्छिन्नगङ्गादिपदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपकेश्वरेच्छाया एव शक्तित्वाङ्गीकारात् गङ्गां तरतीत्यादौ तीरबोधस्याऽभावेन गङ्गायां घोष इत्यादौ तीरनिष्ठविशेष्यताया आश्रयत्वसम्बन्धावच्छिन्नगङ्गापदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितत्वविरहात् इतिदिक् ।

तत्र, इच्छाया इत्यादि—सम्बन्धिनोरिति सप्तम्यन्तम्, सम्बन्धित्वेनाभिमतयोः इत्यर्थः । आश्रयतानियामकस्याऽभावेनेति—आश्रयतानियामक—(आधाराधेयभावनियामकवृत्तिनियामक-) सम्बन्धस्याऽभावेनेत्यर्थः । अस्य तादृशसम्बन्धेन वृत्तित्वाऽभावेनेति शेषः, इदञ्चेच्छान्वयि । तथा च आधाराधेयभावनियामकसम्बन्धाऽभावेनेच्छायाः सम्बन्धित्वेनाभिमतपदार्थयोः तादृशसम्बन्धेन स्थितत्वाऽभावेन सम्बन्धत्वाऽसम्भवात् इति योजना फलति । यथाश्रुतयोजनायां तु आधाराधेयभावनियामकस्यैव सम्बन्धत्वाङ्गीकारे 'राज्ञः पुरुषः' इत्यादौ स्वस्वामिभावादेरपि सम्बन्धत्वाऽनापत्त्या महदसामञ्जस्यं स्यात् । एवमग्रेऽपि सम्बन्धलक्षणे आश्रयतापदं

सबधो हि सबधिद्वयभिन्नत्वे सति द्विष्ठत्वे च सति आश्रयतया विशिष्ट बुद्धिनियामक इत्यभियुक्तव्यवहारात्। यथा घटवद्भूतलमित्यादौ सयोग रूप सबध सम्बन्धिभ्या भिन्नो द्विष्ठो घटनिरूपितसयोगाश्रयो भूतल मिति विशिष्टबुद्धिनियामकश्च नात्र तथा घटश द इच्छावान् तदर्थो वा इच्छावानिति व्यवहार । तस्मात्पदपदार्थयो सम्बन्धान्तरमेव शक्ति

---

पूर्वान्वयि, आश्रयतया आश्रयतानियामकसम्ब धेन ( आधाराधेयभावनियामक सम्ब धेन ) द्विष्ठत्वे च सतीति योजना द्रष्ट या । आधाराधेयभावनियामकेतर-सम्ब धेन द्विष्ठत्वेऽपि सम्ब धत्व नास्तीतितात्पर्यम् । विषयतासम्ब धेन उक्तेश्व रेच्छाया पदपदार्थयोरुभयो स्थितत्वेऽपि 'पदमिच्छावत्', 'अर्थो वा इच्छावान्' इति व्यवहाराभावेन विषयताया आधाराधेयभावनियामकत्वाऽभावेन तेन सम्ब धेन द्विष्ठत्वेऽपि इच्छाया सम्ब धत्व नेष्टमेवेति भाव । सम्ब धलक्षणमाह—सम्बन्धो हीत्यादि—अभेदस्य तन्निवारणाय प्रथमसत्यन्तविशेषणम्, केवलजनकत्वादेस्त न्निवारणाय द्वितीयसत्यन्तविशेषणम्, तथैव वृत्यनियामकसम्ब धेन द्विष्ठत्ववारणाय आश्रयतानियामकसम्ब धेनेति। इदञ्चोपलक्षणमिति नात्माश्रय । घटपटयोर्द्रव्य त्वादेस्तत्त्ववारणाय विशिष्टबुद्धिनियामक इति। विशेष्यविशेषणतत्सम्ब धेतित्रि तयावगाहिनी बुद्धिर्विशिष्टबुद्धि । सम्ब धपदार्थस्येदंलक्षणसत्त्वे किं मानमित्यत आह—अभियुक्तव्यवहारादिति—इत्यादिव्यवहार प्रमाणमिति भाव । सयोगरूप सम्बन्ध इति—इद परमतवासनयोक्तम्, वस्तुतस्तु सयोगस्य सम्ब न्धत्व नास्तीति सुवर्णवादे निरूपयिष्यते। इच्छाया द्विष्ठत्वाऽभावमेवोपपादयति—नात्र तथेति। तस्मात्—इच्छाया सम्ब धत्वाऽसमवात्, पदपदार्थयो सम्ब-न्धान्तरमेव शक्ति —इच्छातिरिक्तसम्ब धविशेष एव शक्तिपदव्यवहार्य । वाच्यवाचकभाव इत्यपर पर्यायो यस्या इत्यर्थ । तत्र वाच्यत्वे वाचकत्वे च न बोधविषयत्वबोधजनकत्वरूपे आत्माश्रयापत्ते, किन्त्वखण्डोपाधिरूपपदार्थान्तरे इति।

नन्वीश्वरेच्छाया सम्ब धत्व मास्तु तथापि तस्या शक्तित्व कस्मान्न ? सम्ब न्धस्यैव शक्तित्वाङ्गीकार कस्मात् ? इति चेदत्रोच्यते—

वाच्यवाचकभावापरपर्याया । तद्ग्राहकञ्चेतरेतराध्यासमूलकं तादात्

प्रयोज्यप्रयोजकवृद्धव्यवहारेण वाक्यस्यार्थबोधकत्वं निश्चीयते । यथा उत्तमवृद्धेन मध्यमवृद्धमुद्दिश्य 'घटमानये'त्युक्ते घटमानयन्तं मध्यमवृद्धं पश्यता बालेन 'अस्य मध्यमवृद्धस्य चेष्टा घटानयनविषयकप्रवृत्तिजन्या चेष्टात्वात् मदीयचेष्टावत्' इति चेष्टाकारणीभूता तदीयप्रवृत्तिरनुमीयते । ततः—"अस्य मध्यमवृद्धस्य प्रवृत्तिः 'घटानयनं मत्कार्यमि'तिज्ञानजन्या मदीयस्तन्यपानादिविषयकप्रवृत्तिवत्" इत्यनुमानेन बालस्तदीयप्रवृत्तिकारणीभूतं कार्यताज्ञानमनुमिनोति । ततः—"अस्य मध्यमवृद्धस्य घटानयनकार्यताज्ञानं 'घटमानयेति' प्रयोजकवृद्धप्रयुक्तवाक्यजन्यं तदन्वयव्यतिरेकसहचारित्वात्, यो यदन्वयव्यतिरेकसहचारी स तज्जन्यो यथा दण्डान्वयव्यतिरेकसहचारी घटो दण्डजन्यः" इति वाक्यमेव तत्कारणत्वेन निश्चिनोति । ततः आवापोद्वापाभ्यामन्वयव्यतिरेकाभ्यां पदादिष्वप्यर्थबोधकत्वं निश्चीयते । तच्च पदे वाक्ये वा ज्ञानजनकत्वं ज्ञानकारणीभूतपदवाक्यबोध्यज्ञानविषयीभूतार्थेन सह सम्बन्धं विना नोपपद्यते, प्रमेयेण घटादिना सह सम्बद्धानामेव प्रमाणानां चक्षुरादीनां ज्ञानजनकत्वदर्शनात् ततश्च—प्रमाणभूतः शब्दः प्रमेयेणार्थेन सह सम्बद्धः प्रमाणत्वात् चक्षुरादिवत्" इत्यनुमानेन कल्प्यमानो ज्ञानजनकताऽवच्छेदकीभूतः पदपदार्थयोः सम्बन्ध एव शक्तिरिति भवितु पुरुषस्यैवबोधजनकताऽवच्छेदकीभूतत्वात्, बोधजनकताऽनवच्छेदकत्वेनैव शक्तेः कल्पनाऽऽवश्यकत्वात् । हरिरप्याह—

*इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।*
*अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ॥*

अस्यार्थः—यथा चक्षुरादीनां रूपादिविषयकज्ञानजनने अनादिः पुरुषप्रयत्नाऽनपेक्षा योग्यता ज्ञानजनकताऽवच्छेदकरूपा तथा शब्दानामर्थैरनादिः सम्बन्ध एव योग्यता ज्ञानजनकताऽवच्छेदको धर्मः शक्तिरूप इति भावः । एतेन बोधजनकत्वमेव शक्तिरित्यपि परास्तमितिदिक् ।

तद्ग्राहकञ्च—शक्तिग्राहकञ्च । इतरेतराध्यासमूलकम्—इतरेतरस्मिन्नध्यासो मूलं कारणं यस्य तत् । अध्यासो नाम यस्मिन् अन्यपदार्थभासः, तदभाववति तत्प्रकारकं ज्ञानमिति यावत्—यथा शुक्तौ 'रजतम्' इति ज्ञानम् । अध्यास

तदेव सम्बन्ध'। उभयनिरूपित तादात्म्यमानुभय इत्यर्थपदयोर्व्यवहा रात् शक्तेरपि कार्यजनकत्वे सम्बन्धस्यैव नियामकत्वात् दीपादिगतप्रका

मूलक यथा—इदपदार्थ-(शुक्ति) रजतपदार्थयोस्तादात्म्यम्—इद रजतमिति ज्ञाने वर्तते, तथैव पदपदार्थयोरपि तादात्म्यम् अय (घटोऽयं) घट (घटशब्दाऽभिन्न) इत्यध्यासमूलमेव नतु वास्तविकम् 'क शब्द ?' 'कोऽयं ?' इति प्रश्ने 'घट इत्यय शब्द' 'घट इत्ययमर्थ' इत्येकाकारोत्तरदर्शनात् शब्दार्थयोर ध्यासमिद्धि घट इत्याकारक ज्ञानमितिव्यवहाराच्छब्दज्ञानयोरपि स 'इति'शब्दस्य शब्दस्वरूपपरतातात्पर्यग्राहकत्वात्। अतएव 'ओमित्येकाक्षर ब्रह्म' (ब्रह्मविद्याप० १) 'वृद्धिरादैच्' इति श्रुतिस्मृत्यो सामानाधिकरण्येन प्रयोग। अध्यासात्मकज्ञानविषयीभाव एवाध्यासमूलकता तादात्म्यस्य। 'सङ्केतस्तु पदपदार्थयो रितरेतराध्यासरूप' इत्यादिना पातञ्जलभाष्ये स्पष्टमिदम्। अध्यासपदार्थोऽपि ब्रह्मसूत्रशाङ्करभाष्ये स्पष्ट—'स्मृतिरूप परत्रपूर्वदृष्टावभास' इत्यादिना 'सर्वथाऽपि तु अन्यस्यान्यधर्माऽवभासता न व्यभिचरती'त्यनेन ग्रन्थेन।

तदेव सम्बन्ध इति—तादात्म्यमेव वाच्यवाचकभावात्मकसम्बन्धद्योतकमित्यर्थ, अत्र सम्बन्ध इत्यस्य सम्बन्धद्योतकमित्यर्थात्। अत्र मञ्जूषायामय पाठ—तद्ग्राहकश्चेतरेतराध्यासमूल तादात्म्यम्। तच्च सङ्केत। तस्यापि पदनिष्ठशक्त्युपकारकत्वाच्छक्तिरिति व्यवहारः, तस्य सम्बन्धत्वाऽभावात्। भेदाऽभेदरूपस्य तस्य तत्त्वाऽसम्भवात्। तद्घटकस्यभेदस्याऽभेदस्य वा तत्त्वाऽदर्शनात्। अभेद स्यापि तच्च खण्डयिष्यते।" इति तस्मादत्रापि सम्बन्ध इत्यस्य स्थाने 'सङ्केत' इत्येव पाठ्यम्, लेखकादिप्रमादात्तथाऽपपाठो भवेत्। अथवा मदुक्तार्थ एव कार्य मञ्जूषाया सुबर्थवादेऽपि तादात्म्यस्य सम्बन्धत्वखण्डनात्। अथवा परमतवासन येदमुक्त स्यात्, तदुक्त मञ्जूषायामेव सुबर्थवादे—'क्वचित्तादात्म्यस्य सम्बन्धत्व परमतवासनयोक्तम्।' सम्बन्धत्वाऽभावेऽपि तादात्म्यस्य सम्बन्धग्राहकत्व नाऽनुपपन्न वृद्धव्यवहारादिवदितिदिक्।

शक्तेरपीति—अस्मात्पूर्व "यत्तु पदपदार्थयोर्बोध्यबोधकभावनियामिका शक्तिरेव सम्बन्ध इति, तन्न" इति पाठस्त्रुटितो भाति मञ्जूषायां तथापाठात्। अस्यार्थ,—बोध्यबोधकभावनियामिका = बोधजनकताऽवच्छेदिका, दीपादिगत

शक्तत्वशक्तावपि आलोकविषयसम्बन्धे सत्येव वस्तुप्रकाशकत्वं नान्यथेति दृष्टत्वात्। तदुक्तं हरिणा—

उपकारः स यत्रास्ति धर्मस्तत्रानुगम्यते।
शक्तीनामप्यसौ शक्तिर्गुणानामप्यसौ गुणः॥ इति

उपकार इति–उपकार्योपकारकयोर्बोधशक्त्योरुपकारकभावः सम्बन्धो यत्रास्ति तत्र धर्मः शक्तिरूपः कार्यं दृष्ट्वाऽनुमीयते। असौ सम्बन्धः शक्तीनामपि कार्यजनने उपकारकः गुणानामपि द्रव्याश्रितत्वनियामक इति हेलाराजः। स सम्बन्धः पदे वाक्ये च। तदाह वाक्यभाष्यकारः "समयज्ञानार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणं वाक्यलक्षणाया वाचोऽर्थलक्षणमिति"। अनेन पदेष्विव वाक्ये

---

प्रकाशकताऽवच्छेदकसामर्थ्यविशेषरूपशक्तिरिव पदगता सामर्थ्यविशेषरूपा शक्तिरेव सम्बन्धः सम्बन्धत्वेनाभिमता शक्तिरिति यत्केषाञ्चिन्मतम्, तन्न युक्तम् इति। शक्तेरपि = सामर्थ्यविशेषस्यापि, कार्यजनकत्वे = प्रकाशज्ञानादिकार्यकारित्वे सम्बन्धस्यैव = सामर्थ्यातिरिक्तस्य संयोगवाच्यवाचकभावादिसम्बन्धस्यैव, नियामकत्वात् उपकारकत्वादित्यर्थः। दीपादिगतेति—दीपादिगतप्रकाशकताऽवच्छेदकसामर्थ्यस्यापि आलोकवस्तुनोः संयोगादिसम्बन्धस्य सत्त्व एव दृष्टत्वात् तद्वदेव पदगतबोधकताऽवच्छेदकसामर्थ्यविशेषस्य नियामकं सम्बन्धान्तरमेव शक्तिः वाच्यवाचकभावाख्यमित्यङ्गीकार्यमिति भावः। तदुक्तं हरिणेति—उपकार = उपकार्योपकारकयोर्बोधसामर्थ्ययोरुपकारस्वभावो नियामकः सहायको वा, वाच्यवाचकभावो लोकविषययोस्संयोगसमवायादिः सम्बन्धो यत्र पदे दीपादौ गुणिनि चाऽस्ति, तत्र धर्मः = बोधजनकताऽवच्छेदकसामर्थ्यविशेषरूपः कार्यं = बोधं (शाब्दं प्रत्यक्षादि च) दृष्ट्वा, अनुमीयते गम्यते। असौ वाच्यवाचकभावसंयोगसमवायादिः सम्बन्धः, शक्तीनां पदस्थ-सामर्थ्यविशेषाणामपि कार्यजनने = शाब्दप्रत्यक्षादिज्ञानजनने शक्तेः उपकारकः, गुणानां रूपादीनामपि घटादिद्रव्याश्रितत्वनियामक इति हेलाराजीयो भावः।

स सम्बन्ध इति—स वाच्यवाचकभावाख्यः इत्यर्थः। समयज्ञानार्थम् समयः = संकेतः (वाच्यवाचकभावप्रयोजकः आदानप्रदानात्मकः ईश्वरेच्छारूपः) तज्ज्ञानार्थम् पदलक्षणायाः = पदरूपायाः, अन्वाख्यानं = ज्ञापकं (प्रकृतिप्रत्यय

ष्वपीश्वरसमय इति स्पष्टमेवोक्तम् ॥ तस्मादितरेतराध्यासः सङ्केतस्तन्मूलक तादात्म्य च सम्बन्ध इति सङ्घातार्थं । तदुक्त पातञ्जलभाष्ये, सङ्केतस्तु पदार्थयोरितरेतराध्यासरूप स्मृत्यात्मको योऽयशब्द सोऽर्थोयो

---

व्युत्पादनद्वारेणेति शेष ) । इदमुपलक्षणम्—एङ पदान्तादतीत्यादिना वाक्यस्यापि व्याकरणेनाऽन्वाख्यानात् । अर्थलक्षणम् = अर्थप्रतिपादकशास्त्र तर्कमीमांसादि ।

स्पष्टमेवोक्तम् इति—एतेन वाक्यस्फोटो नैयायिकाऽसम्मत इति परास्तम् ।

तस्मादितरेतराध्यास इति तस्मात् = इच्छाया सम्बन्धत्वनिराकरणात्, इच्छात्मकसंकेतस्य सम्बन्धतो भेदप्रतिपादनादित्यर्थं । सङ्घातार्थ = प्रकरणार्थं । अत्र मञ्जूषातो विरोध तत्र संकेतस्येतरेतराध्यासमूलकत्वमुक्तम्, अत्र तूभयोरभेद इति । किञ्च 'संकेतस्तु पदपदार्थयोरितरेतराध्यासरूप' इति वक्ष्यमाणपातञ्जलभाष्यादपि विरोधोऽत्र । तत्र रूप्यतेऽनेनेतिकरणघञन्तरूपशब्देन इतरेतराध्यासो रूप साधको यस्येति बहुव्रीहिणा, इतरेतराध्यासेन रूप्यते साध्यत इतिकर्मघञन्तरूप शब्देन तत्पुरुषसमासेन वा संकेतस्याध्यासमूलकत्वमुक्त भवतीति मञ्जूषाया मुक्तम् । परेतु "इतरेतराध्यासः = लक्षणया इतरेतराध्यासविषय सङ्केत, तन्मूलकम् इतरेतराध्यासमूलक ( सङ्केताऽभिन्न ) तादात्म्यञ्च सम्बन्धः सम्बन्धग्राहकमित्यर्थ । सङ्केतस्तु द्विविध, ईश्वरेच्छारूप, तादात्म्यरूपश्च । आद्यो न्यायशास्त्रप्रसिद्धः, अन्त्य पातञ्जलभाष्यप्रसिद्ध —"सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूप स्मृत्यात्मको योऽयं शब्द सोऽर्थो योऽर्थ ■ शब्द " इति । अत्र 'योऽयं शब्द' इत्यादिना तादात्म्यमेव प्रदर्शितम् । द्विविधोऽप्यय शक्तिग्राहक । तदुक्त पातञ्जलभाष्ये 'तस्य वाचक प्रणव' इति सूत्रे—"स्थितोऽस्य वाच्यस्य वाचकेन सम्बन्ध, सङ्केतस्तु ईश्वरस्य स्थितमेवार्थमभिनयति, यथाऽवस्थित पितापुत्रयो सम्बन्ध सङ्केतेनाऽवद्योत्यते 'अयमस्य पिता' 'अयमस्य पुत्र ', इति । "याख्याय मञ्जूषाया विरोध परिहरन्ति । केचितु—अल क्लिष्टकल्पनया । अध्यासाऽभिन्नत्व मेव सङ्केतस्य । पातञ्जलेऽपि इतरेतराध्यासरूप इत्यस्य इतरेतराध्यासो रूप स्वरूपम् आत्मा यस्येति प्रसिद्ध एवाऽर्थ । सङ्केतमूलकत्वमेव तादात्म्यस्य, नतु सङ्केतरूपत्वम् । मञ्जूषाविरोधोऽप्यकिंचित्कर इत्याहु । अत्र पण्डिता एव प्रमाणम् । स्मृत्यात्मक इति—स्मृतौ आत्मा स्वरूप यस्य स, स्मृतिविषय इत्यर्थं ।

व्यवहारस्य तुल्यत्वाद्व्यवहारदर्शनेन च पूर्वजन्मानुभूतशक्तिस्मरणम्। अत एव बालानां तिरश्चां चान्वयबोधः। न हि तेषां तदैव तत्सम्भवः। यत्तु तार्किकाः—असाधुशब्देन साधुस्मरणद्वारार्थबोध इत्याहुस्तन्न। साधुस्मरणं विनापि बोधानुभवात् तद्वाचकसाधुशब्दमजानतां बोधानापत्तेश्च। न च शक्तिभ्रमाद्बोधोऽसाधुशब्देष्विति वाच्यम्। निस्सन्देहप्रत्ययस्य बाधकं विना भ्रमत्वायोगात्। अत एव स्त्रीशूद्रबालादीनामुच्चरिते साधावर्थसंशये तदपभ्रंशेनार्थनिर्णयः। अत एव समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियम इति भाष्यम्, "वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः" इति हरिकारिका च सङ्गच्छते। अत एवार्यम्लेच्छाधिकरणं सङ्गच्छते। तत्र हि यद्यपि आर्या यवशब्दं दीर्घशूके प्रयुञ्जते म्लेच्छास्तु प्रियङ्गौ प्रयुञ्जते तमेव च बुध्यन्ते तथाप्यार्यप्रसिद्धेर्बलवत्त्वात् वेदे दीर्घशूकपरत्वमिति सिद्धान्तितम्। तव तु म्लेच्छबोधस्य शक्तिभ्रममूलकत्वेन भ्रान्तिविषयकरजतज्ञानस्येव म्लेच्छप्रसिद्धेर्बलवत्त्वसाधकतयार्यम्लेच्छप्रसिद्ध्योः परस्परं बलाबलविचारासङ्गतिः स्पष्टैव। साधुत्वं च व्याकरणव्यङ्ग्यजातिः पुण्यजनकतावच्छेदकधर्मवत्त्वं वा। तद्भिन्नत्वमसाधुत्वम्। सा च

---

कालिकत्वेनानादित्वमूलकम्। प्रयोज्यप्रयोजकवृद्धव्यवहारस्य यथा शक्तिग्राहकत्वं तथा प्राक् प्रदर्शितम्। अयं व्यवहारः पूर्वानुभूतशक्तिस्मारक एव, शक्तेरनुभावकस्तु अस्माच्छब्दादित्याद्याकारकस्यार्थसङ्केतरूपोपदेश एव। एतच्च आद्यबोधकाले बालानां तादृशसङ्केतोपदेशग्रहणाऽभावाच्छक्तेरनुभवो नास्ति, किन्तु पूर्वजन्मानुभूतशक्तिस्मरणमेव व्यवहारदर्शनरूपाद्धेतोर्भवतीति केचिन्मन्यन्ते। तन्मतेनैव प्रपञ्चयति—व्यवहारदर्शनेनेत्यादि। तदैव = आद्यबोधकाल एव। तत्सम्भवः = शक्त्यनुभवसम्भवः।

अत्र तार्किकाः व्युत्पन्नानामपभ्रंशेन साधुशब्दस्मरणादर्थप्रतीतिः। तत्र शक्तिभ्रमाद्बोधो भवति, अपभ्रंशेषु शक्तिर्नास्तीति वदन्ति तदेतन्मतं निराकरोति—यत्त्वित्यादिना। पुण्यजनकतावच्छेदकधर्मेति—साधुशब्दानां पुण्यजनकत्वं "समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः" इत्यादिना पस्पशाह्निके महाभाष्ये स्पष्टम्। अत एव भाष्यात् अपभ्रंशे शक्तिः स्वीक्रियतेऽपि।

शक्तिस्त्रिधा। रूढिर्योगो योगरूढिश्च। शास्त्रकल्पितावयवार्थभानाभावे समुदायार्थनिरूपितशक्ती रूढि,यथा मणिनूपुरादौ। शास्त्रकल्पितावयवार्थनिरूपिता शक्तिर्योग,यथा पाचकादौ। शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपिता शक्तिर्योगरूढि, यथा पङ्कजपदे पङ्कजनिकर्तृपद्ममिति बोध। पद्मेऽनुपपत्तिप्रतिसन्धान सम्बन्धप्रतिसन्धान च विना न लक्षणा प्रसर। क्वचित् तात्पर्य्यग्राहकवशात्केवलरूढ्यर्थस्य केवलयोगार्थस्य बोध। भूमौ पङ्कजमुत्पन्न कह्लारकैरवमुखेष्वपि पङ्कजेष्वित्यादौ, स्पष्ट चेदमाहादितिसूत्रे भाष्ये। अश्वगन्धादिपदमोषधिविशेषे रूढम्। अश्वस्यैव गन्धवत्तया वाजिशालाबोधे यौगिकम्। इद यौगिकरूढमित्युच्यते। एव मण्डपपद गृहविशेषे रूढ मण्डपानकर्त्तरि यौगिकम्। सैषा शक्ति सयोगादिभिर्नानार्थेषु नियम्यते। तदुक्त हरिणा—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरण लिङ्ग शब्दस्यान्यस्य सन्निधि॥
सामर्थ्यमौचिती देश कालो व्यक्ति स्वरादय।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव॥ इति।

---

ननु पङ्कजपदे लक्षणया पद्मबोधोऽस्तु कृत योगरूढिकल्पनयेत्यत आह—पद्मेऽनुपपत्तीत्यादि। योगरूढिर्द्विधा-अशतो योगार्थबोधकत्वे सति अशतो रूढ्यर्थबोधिका प्रथमा, यथा 'पङ्कज' पदे। केवलयोगार्थबोधिनी केवलरूढ्यर्थबोधिनी वा द्वितीया, यथा तत्रैव पदे। तदाह—क्वचिदित्यादि। नचात्र केवल पद्मबोधकाले रूढिरेव केवलपङ्कोत्पन्नबोधकाले योग एवेतिवाच्यम् नानार्थतापत्ते, मम [illegible] तात्पर्यग्राहकवशादेका योगरूढिरेव तादृग्बोध निर्वाहयतीति तद्विनास्ति। आहादितिसूत्रे भाष्ये—तत्र हि सर्वतो मानार्थकस्य 'परिमाण' शब्दस्य प्रत्यादौ योगरूढिरित्युक्त्वा 'तदस्य परिमाणम्' इत्यादौ विशेष्यविशेषणभावानुपपत्तिमाशङ्क्य 'वचनादीयती विवक्षा भविष्यती'त्युक्तम्। रूढिपरित्यागेन परिच्छेदकत्वमानमाश्रयिष्यत इति तद्भाव।

शक्तिभेदान्निरूप्य तत्तात्पर्यनिर्णायकानाह—सयोगेति। अत्र सामर्थ्यमेवैव मुख्य निर्णायक सयोगादयस्तद्व्यञ्जकप्रपञ्च तै सामर्थ्यस्यैवाऽभिव्यक्तेरिति परे।

व्यवहारस्य तुल्यत्वाद्व्यवहारदर्शनेन च पूर्वजन्मानुभूतशक्तिस्मरणम्। अत एव बालानां तिरश्चां चार्थबोधः। न हि तेषां तदैव तत्सम्भवः। यत्तु तार्किकाः—असाधुशब्देन साधुस्मरणद्वारार्थबोध इत्याहुस्तन्न। साधुस्मरणं विनापि बोधानुभवात् तद्वाचकसाधुशब्दमजानतां बोधानापत्तेश्च। न च शक्तिभ्रमाद्बोधोऽसाधुशब्देष्विति वाच्यम्। निस्सन्देहप्रत्ययस्य बाधकं विना भ्रमत्वायोगात्। अत एव स्त्रीशूद्रबालादीनामुच्चरिते साधावर्थसंशये तदपभ्रंशेनार्थनिर्णयः। अत एव समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियम इति भाष्यम्, "वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः" इति हरिकारिका च सङ्गच्छते। अत एवार्यम्लेच्छाधिकरणं सङ्गच्छते। तत्र हि यद्यपि आर्या यवशब्दं दीर्घशूके प्रयुञ्जते म्लेच्छास्तु प्रियङ्गौ प्रयुञ्जते तमेव च बुध्यन्ते तथाप्यार्यप्रसिद्धेर्बलवत्त्वात् वेदे दीर्घशूकपरत्वेति सिद्धान्तितम्। तत्र तु म्लेच्छबोधस्य शक्तिभ्रममूलकत्वेन भ्रान्तिविषयकत्वज्ञानस्यैव म्लेच्छप्रसिद्धेर्बलवत्त्वसाधकत्वयार्यम्लेच्छप्रसिद्ध्योः कस्या बलवत्त्वमिति विचारासङ्गतिः स्पष्टैव। साधुत्वं च व्याकरणाबाध्यत्वं पुण्यजनकतावच्छेदकधर्मवत्त्वं वा। तद्भिन्नत्वमसाधुत्वम्। सा च

---

कालिकत्वेनान्तरङ्गत्वमूलकम्। प्रयोज्यप्रयोजकवृद्धव्यवहारस्य यथा शक्तिग्राहकत्वं तथा प्राक् प्रदर्शितम्। अयं व्यवहारः पूर्वानुभूतशक्तिस्मारक एव, शक्तेरनुभावकस्तु अस्माच्छब्दादित्याद्याकारकस्मार्तसङ्केतरूपोपदेश एव। एवञ्च आद्यबोधकाले बालानां तादृशसङ्केतोपदेशग्रहणाऽभावाच्छक्तेरनुभवो नास्ति, किन्तु पूर्वजन्मान्तरानुभूतशक्तिस्मरणमेव व्यवहारदर्शनरूपोद्बोधकवशादिति केषाञ्चिन्मतम्। तन्मतेनैव ग्रन्थकृन्निरूपयति—व्यवहारदर्शनेनेत्यादि। तदैव = आद्यबोधकाल एव। तत्सम्भवः = शक्त्यनुभवसम्भवः।

अत्र तार्किकाः व्युत्पन्नानामपभ्रंशेन साधुशब्दस्मरणाद् अव्युत्पन्नानां तत्रैव शक्तिभ्रमाद्बोधो भवति, अपभ्रंशेषु शक्तिर्नास्तीति वदन्ति तदेतत्क्रमशो निराकरोति—यत्त्वित्यादिना। पुण्यजनकताऽवच्छेदकेति—साधुशब्दानां पुण्यजनकत्वञ्च "समानायामर्थाऽवगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः" इत्यादिना पस्पशाह्निके महाभाष्ये स्पष्टम्। अतएव भाष्यात् अपभ्रंशे शक्तेः स्वीकारोऽपि।

शक्तिस्त्रिधा। रूढिर्योगो योगरूढिश्च। शास्त्रकल्पितावयवार्थभानाभावे समुदायार्थनिरूपितशक्ती रूढि,यथा मणिनूपुरादौ। शास्त्रकल्पितावयवार्थनिरूपिता शक्तिर्योग,यथा पाचकादौ। शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपिता शक्तिर्योगरूढि, यथा पङ्कजपदे पङ्कजनिकर्तृपद्ममिति बोध। पद्मेऽनुपपत्तिप्रतिसन्धान सम्बन्धप्रतिसन्धान च विना न लक्षणावसर। क्वचित् तात्पर्यग्राहकवशात्केवलरूढ्यर्थस्य केवलयोगार्थस्य बोध। भूमौ पङ्कजमुत्पन्न कह्लारकैरवमुखेष्वपि पङ्कजेष्वित्यादौ, स्पष्टं चेदमाहादितिसूत्रे भाष्ये। अश्वगन्धादिपदमोषधिविशेषे रूढम्। अश्वस्येव गन्धवत्तया वाजिशालाबोधे यौगिकम्। इद यौगिकरूढमित्युच्यते। एव मण्डपपद गृहविशेषे रूढ मण्डपानकर्तरि यौगिकम्। सैषा शक्ति सयोगादिभिर्नानार्थेषु नियम्यते। तदुक्त हरिणा—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थ प्रकरण लिङ्ग शब्दस्यान्यस्य सन्निधि॥
सामर्थ्यमौचिती देश कालो व्यक्ति स्वरादय।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव॥ इति।

---

ननु पङ्कजपदे लक्षणया पद्मबोधोऽस्तु कृत योगरूढिकल्पनयेत्यत आह—पद्मेऽनुपपत्तीत्यादि। योगरूढिर्द्विधा-अशतो योगार्थबोधकत्वे सति अशतो रूढ्यर्थबोधिका प्रथमा, यथा 'पङ्कज' पदे। केवलयोगार्थबोधिनी केवलरूढ्यर्थबोधिनी वा द्वितीया, यथा तत्रैव पदे। तदाह—क्वचिदित्यादि। नचात्र केवलपद्मबोधकाले रूढिरेव केवलपङ्कोत्पन्नबोधकाले योग एवेतिवाच्यम् नानार्थतापत्ते, मम तु तात्पर्यग्राहकवशादेका योगरूढिरेव तादृग्बोध निर्वाहयतीति क्षतिनास्ति। आहादितिसूत्रे भाष्ये—तत्र हि सर्वतो मानार्थकस्य 'परिमाण' शब्दस्य प्रस्थादौ योगरूढिरित्युक्त्वा 'तदस्य परिमाणम्' इत्यादौ विशेष्यविशेषणभावानुपपत्तिमाशङ्क्य 'वचनादीयती विवक्षा भविष्यती'त्युक्तम्। रूढिपरित्यागेन परिच्छेदकत्वमानमाश्रयिष्यत इति तद्भाव।

शक्तिभेदान्निरूप्य तत्तात्पर्यनिर्णायकानाह—सयोगेति। अत्र सामर्थ्यमेवैक मुख्य निर्णायक सयोगादयस्तद्व्यञ्जकप्रपञ्च ते सामर्थ्यस्यैवाऽभिव्यक्तेरिति परे।

एते संयोगादयो नानार्थेषु शब्देषु शब्दार्थस्यानवच्छेदे सन्देहे तदपाकरणद्वारा विशेषार्थनिर्णायका इति तदर्थः। संयोगविप्रयोगयोरुदाहरणे सवत्सा धेनुरवत्सा धेनुरिति। साहचर्यस्य रामलक्ष्मणाविति,साहचर्यं सादृश्य सदृशयोरेव सहप्रयोगनियमात्। रामार्जुनगतिस्तयोरित्यत्रविरोधेन तत्। अञ्जलिना जुहोति,अञ्जलिना सूर्यमुपतिष्ठत इत्यत्र जुहोतीत्यादिपदार्थवशादञ्जलिपदस्य तत्तदाकाराञ्जलिपरत्वम्। सैन्धवमानयेत्यादौ प्रकरणेन तत्। अक्ता शर्करा उपदधातीत्यादौ तेजो वै घृत स्तुतिरूपाल्लिङ्गादक्ता इत्यस्य घृतसाधनाञ्जनपरत्वम्। रामो जामदग्न्य इति जामदग्न्यपदसन्निधानाद्रामः परशुरामः। अभिरूपाय कन्या देया इत्यादौ अभिरूपतरायेति सामर्थ्यात् प्रतीयते।

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा।
यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः॥

इत्यत्रौचित्यात् परशुनेत्यस्य छेदनार्थत्वम्, मधुसर्पिषा इत्यस्य सेचनार्थत्वम्, गन्धमाल्याद्यैरित्यस्य पूजनार्थत्वम्। भात्यत्र परमेश्वर इत्यत्र राजधानीरूपदेशात्परमेश्वरपदं राजबोधकम्। चित्रभानुर्भातीत्यादौ रात्रावग्नौ दिवा सूर्ये। व्यक्तिर्लिङ्गम्। मित्रो भाति मित्रं भातीत्यादावाद्ये सूर्योऽन्त्ये सुहृत्। स्थूलपृषतीमित्यादौ स्वरात्तत्पुरुषबहुव्रीह्यर्थनिर्णयः। इति शक्तिनिरूपणम्॥

ननु लक्षणा कः पदार्थ इति चेत्? अत्र तार्किकाः, स्वशक्यसम्बन्धो

---

रामलक्ष्मणावित्यादौ साहचर्येणोभयोर्युगपदेव नियमनमिति नाऽन्योऽन्याश्रयः। स्वरादय इत्यादिना पत्वसत्वणत्वनत्वादि। सुषिक्तमित्यत्रोपसर्गो निन्दार्थं, सुसिक्तमित्यत्र पूजाऽर्थः। प्रणायकः प्रणयनक्रियाकर्त्ता, प्रनायकः प्रगतनायको देश इति पुञ्जराजः। सम्बन्धसामान्यसत्त्वे भाष्येऽपि स्फुटमेतत्। इति शक्तिवादः।

शक्तिनिरूपणानन्तरं लक्षणानिरूपणे सङ्गतिं सूचयितुं तज्ज्ञपदार्थघटकीभूतजिज्ञासामादौ प्रदर्शयति–ननु लक्षणेति। इदमत्र बोध्यम्—अनर्थकत्वापत्तिवितत्वादिप्रक्रियानिरासद्वारेण मेधावनामवधेयवचनत्वाय निरूपणीयताऽवच्छेदकाऽवच्छेदेन

लक्षणा। सा च द्विधा। गौणी शुद्धा च। स्वनिरूपितसादृश्याधिकरणत्व-सम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका गौणी। तदतिरिक्तसम्बन्धेन शक्यसम्बन्ध्यर्थप्रतिपादिका शुद्धा। प्रकारान्तरेणापि सा द्विविधा। अजहत्स्वार्था जहत्स्वार्था च। स्वार्थसवलितपरार्थाभिधायिकाऽज

---

सङ्गतिमत्त्वस्याऽऽवश्यकतया यन्निरूपणानन्तरं यन्निरूप्यते तस्मिन् तन्निरूपित सङ्गतिमत्त्वप्रदर्शनमावश्यकमेव भवति। सङ्गतिपदार्थश्च—अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वम्। अत्र जिज्ञासाजनकज्ञानविषयत्वञ्च—जिज्ञासाजनकीभूतेष्टसाधनत्वप्रकारकज्ञानीयज्ञाननिष्ठविशेष्यतानिरूपितविषयित्वसम्बन्धावच्छिन्नाऽवच्छेदकतानिरूपिताऽवच्छेदकतारूपं विवक्षितम्। जिज्ञासा च सङ्गतित्वव्याप्यधर्मवत्प्रकारिका ग्राह्या, तत्तत्सङ्गतिप्रकारिका 'उपेक्षानर्हज्ञानं जायताम्' 'उपपादकज्ञानं जायताम्' इत्याद्याकारिकेति यावत्। तज्जनकज्ञानञ्च-'उपेक्षानर्हज्ञानं मदिष्टसाधनम्' 'उपपादकज्ञानं मदिष्टसाधनमि'त्याद्याकारकम्। तादृशज्ञानीयज्ञाननिष्ठविशेष्यतानिरूपितविषयित्वसम्बन्धाऽवच्छिन्नाऽवच्छेदकता उपेक्षानर्हादिनिष्ठा, तन्निरूपिताऽवच्छेदकतोपेक्षानर्हत्वादाविति लक्षणसमन्वयः। सा च सङ्गतिः षोढा। तदुक्तम्—

*सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा।*
*निर्वाहकैक्यकार्यैक्ये षोढा सङ्गतिरिष्यते॥* इति।

तत्र—स्मृतिकालाऽवच्छिन्नोपेक्षानर्हताऽवच्छेदकधर्मवत्त्वं प्रसङ्गः, प्रकृतसिद्ध्यनुकूलचिन्ताकालाऽवच्छिन्नप्रकृताऽनुकूलत्वमुपोद्घातः। उपजीव्योपजीवकभावो हेतुता, प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तिकालाऽवच्छिन्नाऽवश्यवक्तव्यत्वमवसरः, एकप्रयोजकप्रयोज्यत्वं निर्वाहकैक्यम्, एककार्यानुकूलत्वं कार्यैक्यम्, इत्याद्यन्यत्र विस्तरः। प्रकृते च शक्तिनिरूपणेन प्रतिबन्धकीभूतशिष्यजिज्ञासाया निवृत्तौ लक्षणाया पूर्वोद्देशवाक्यानुसारमवश्यवक्तव्यत्वात्तयाऽवसरसङ्गतिरेवेत्यलम्।

स्वशक्येति—लाक्षणिकत्वेनाभिमतं पदं स्वं, यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदम्, तच्छक्यो मधुरस्वरप्रवाहाऽवच्छिन्नप्रवाहः तत्सम्बन्धश्च सामीप्यं तीरे इति स एव सम्बन्धो लक्षणा। यद्यपि सामीप्यमाश्रयत्वसम्बन्धेन तीरेऽस्ति न गङ्गापदे तथापि स्वप्रतियोगिवाचकत्वसम्बन्धेन गङ्गापद एवेति द्रष्टव्यम्। स च लक्षणाभूतः सम्बन्धोऽनेकस्तथापि प्रसिद्धाः पञ्च—तात्स्थ्यम्, ताद्धर्म्यम्,

हत्वार्थो तेन छत्रिणो यान्ति, कुन्ताः प्रवेशय, यष्टीः प्रवेशय, काकेभ्यो दधि रक्ष्यतामित्यादौ छत्रिसहितसेना कुन्तास्रसहितपुरुष-यष्टिसहितपुरुष काक सहितसर्वदध्युपघातकबोध स्वार्थपरित्यागेनेतरार्थाभिधायिकान्या । तत्परित्यागश्च शक्यार्थस्य लक्ष्यार्थान्वयिनाऽनन्वयित्वम् । तेन गां वाहीकं पाठयेत्यादौ गोसदृशलक्षणायामपि न गोस्तदन्वयिपाठनक्रियान्वयित्वम् । सा च लक्षणा तात्स्थ्यादिनिमित्तिका । तदाह—

तात्स्थ्यात्तथैव ताद्धर्म्यात्तत्सामीप्यात्तथैव च ।
तत्साहचर्यात्तादर्थ्याज् ज्ञेया वै लक्षणा बुधैः ॥ इति ।

तात्स्थ्यान्मञ्चा हसन्ति, ग्रामः पलायितः । ताद्धर्म्यात्सिंहो माणवकः गौर्वाहीकः । तत्सामीप्याद्गङ्गायां घोषः । तत्साहचर्याद्यष्टीः प्रवेशय । तादर्थ्यादिन्द्रार्था स्थूणा इन्द्रः । अन्वयाद्यनुपपत्तिप्रतिसन्धानञ्च लक्षणाबीजम् । वस्तुतस्तु तात्पर्यानुपपत्तिप्रतिसन्धानमेव तद्बीजम् । अन्यथा गङ्गायां घोष इत्यादौ घोषादिपदे एव मकरादिलक्षणापत्तिस्तावताप्यन्वयानुपपत्तिपरिहारात् । गङ्गायां पापी गच्छतीत्यादौ गङ्गापदस्य नरके लक्षणापत्तेश्च । अस्माकं तु भूतपूर्वपापावच्छिन्नलक्षकत्वे तात्पर्यान्न दोषः । नक्षत्रं दृष्ट्वा वाचं विसृजेदित्यत्रान्वयसम्भवेपि तात्पर्यानुपपत्त्यैव लक्षणास्वीकारात् । एकानुगमकस्वीकारेण निर्वाहेऽनेकानुगमकस्वीकारे गौरवाच्च । विशिष्टार्थबोधकशब्दस्य पदार्थैकदेशे लक्षणायां जहदजहल्लक्षणेति व्यवहरन्ति वृद्धाः । वाच्यार्थे किञ्चिदंशत्यागः किञ्चिदंशपरिग्रहश्च । अत्र ग्रामैकदेशे पटैकदेशे च दग्धे ग्रामो दग्धः पटो दग्ध इति व्यवहारः । तत्त्वमसीत्यत्र सर्वज्ञत्वाल्पज्ञत्वयोस्त्यागः शुद्धचैतन्ययोरभेदान्वयः ।

---

तत्सामीप्यम्, तत्साहचर्यम्, तादर्थ्यञ्चेति । तदाह—तात्स्थ्यात्तथैवेति । स्वस्मिन् स्वनिमित्तत्वमारोप्याऽत्र सर्वत्र पञ्चमी बोध्या । वस्तुतस्तु स्वार्थ एव पञ्चमीति तत्त्व माधान्यात्स्थानेन स्फुटीभविष्यति । अन्वयाद्येति—आदिना तात्पर्याऽनुपपत्तिपरिग्रहः । वस्तुतस्तु प्रावल्यात् तात्पर्याऽनुपपत्तिप्रतिसन्धानमेव लक्षणाबीजं, तदाह—वस्तुत इति । ग्रामैकदेश इति—अयं व्यवहार'ऽपरत्वे'माध्यमरीत्या दग्धादिपदानामर्थो आयातस्तेन 'दग्धग्रामैकदेशः ग्रामः' इति बोधे शब्दस्येतरस्य

स्वबोध्यसम्बन्धो लक्षणेति केचित्। गभीरायां नद्यां घोष इत्याद्यनुरोधात्। तथा हि न तावद्गभीरपदं तीरलक्षकं नद्यामित्यनन्वयापत्तेः। न हि तीरं नदी अत एव न नदीपदेऽपि गभीरपदार्थानन्वयात्। न हि तीरं गभीरम्। न च प्रत्येकं पदद्वये सा, विशिष्टनदीबोधानापत्तेः। तस्मात्समुदायबोध्यं गभीरत्वविशिष्टनदीपदार्थं तत्सम्बन्धो लक्षणेति। द्विरेफपदस्य स्वलक्ष्यभ्रमरशब्दवाच्यार्थे लक्षणाया लक्षितलक्षणेति व्यवहारः। स्वबोध्यपदवाच्यस्य सम्बन्धः। प्रकारान्तरेण पुनर्लक्षणा द्विधा। तथा हि प्रयोजनवती निरूढा लक्षणा द्विविधा मता इति। असति प्रयोजने शक्यसम्बन्धो निरूढलक्षणा। त्वचा ज्ञानमित्यादौ यथा त्वचस्त्वगिन्द्रिये। इयं तु शक्तिपर्यायैवेति बोध्यम्। गङ्गायां घोष इत्यत्र तीरे गङ्गागतशैत्यपावनत्वादिप्रतीतिः प्रयोजनम्। गौर्वाहीक इत्यत्र सादृश्यलक्ष्यतावच्छेदकं गवाभेदप्रत्ययः प्रयोजनम्। कुन्ताः प्रविशन्तीति भीतिपलायमानवाक्ये कुन्तविशिष्टपुरुषे कुन्तगततैक्ष्ण्यप्रतीतिः प्रयोजनमित्याहुः।

---

इति परे। स्वबोध्येति—एतन्मते वाक्यशक्त्यनभ्युपगमेन शक्यपदस्थाने बोध्यपदनिवेश आवश्यकः। केचित्=मीमांसका इत्यर्थः। द्विरेफ इति—द्वौ रेफौ यस्मिन्निति बहुव्रीहौ तार्किकमते एकार्थीभावानभ्युपगमेन शक्त्या रेफद्वयमात्रस्यैव बोधः, लक्षणया रेफद्वयघटितभ्रमरशब्दस्य बोधः, इति स्वलक्ष्यो भ्रमरशब्दस्तस्य वाच्यार्थे या लक्षणा सा लक्षितलक्षणेति। यः शक्यार्थस्य परम्परासम्बन्धः स्वघटितपदवाच्यत्वरूपः सा लक्षितलक्षणेति तत्त्वम्। परे तु नाऽत्र लक्षणा, रूढिशक्त्यैव रथन्तरादिवत् बोधात्। अतएव कोशेऽपि भ्रमरशब्दपर्याये तत्पाठः, न हि लाक्षणिकानां तत्र पाठ इत्यामनन्ति। इत्याहुरिति—मञ्जूषाकर्तारस्तु स्वशक्यताऽवच्छेदकारोप एव लक्षणेति व्यवहारः। अत एव पुंयोगादाख्यायामिति सूत्रे भाष्ये—"चतुर्भिः प्रकारैरतस्मिन् स इत्येतद्भवति तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्यात्। 'मञ्चा हसन्ति' 'सिंहो माणवकः' 'गङ्गायां घोषः,' 'यष्टीः प्रवेशय' इत्युक्तम्। गौतमोऽप्याह—"सहचरण-स्थान-तादर्थ्य-वृत्त मान-धारण सामीप्य-योग-साधनाधिपत्येभ्यो ब्राह्मण बाल-कट राज-सक्तु-चन्दन-गङ्गा शकटान्न-पुरुषेष्वतद्भावेऽपि तदुपचारः" इति। तदुपचारः = तच्छब्दव्यवहारः, स च तद्धर्मा

तन्न । सति तात्पर्ये 'सर्वे सर्वार्थवाचका' इति भाष्याल्लक्षणाया अभावात् ।

---

रोपे । आरोपनिमित्तानि च सहचरणादीनि । यष्टीः प्रवेशय, मञ्चाः क्रोशन्ति, वीरपोऽयमास्ते, अयं राजा यमः, सक्तु, चन्दनं तुला, गङ्गायां घोषः, कृष्णः शकटः, अन्नं प्राणाः, अयं कुलस्य राजा, इत्युदाहरणानि । यष्टित्वारोपे ब्राह्मणे साहचर्यादित्यादीनि तद्व्याख्यातारः । शक्यतावच्छेदकप्रकारक एव बोधः । अतएव गङ्गायां मीनघोषौ इति द्वन्द्वस्य साधुत्वम् । परमते मीनस्य नीरत्वावच्छिन्ने घोषस्य तीरत्वावच्छिन्नेऽन्वयेन एकधर्मावच्छिन्नेऽन्वयरूपसाहित्यस्याभावेन द्वन्द्वोऽसाधुरेव स्यात् । मम तु गङ्गात्वेनैव तीरबोधादेकधर्मावच्छिन्नेऽन्वयसत्त्वेन न क्षतिः । अतएव च नीरे शैत्यपावनत्वादिप्रतीतिर्व्यञ्जनावृत्त्याऽलङ्कारिकाणाम् । अत्र सर्वत्र तद्धर्मविशिष्टे शक्यतावच्छेदकधर्मारोपः । अतएव 'कच त्वत्स्यति यदनमि'त्यादौ कचत्वादिना राहुत्वादिविशिष्टस्य बोधान्न मात्राद्यन्वयाऽनुपपत्तिरित्यामनन्ति । सोऽयमारोपो लक्षणाभूतः स्वकर्माऽवच्छिन्नवाचकत्वसम्बन्धेन लाक्षणिकत्वेनाभिमतपदे तिष्ठतीति द्रष्टव्यमित्यलम् ।

सर्वेसर्वार्थवाचकेति—वाचका इत्यस्य शक्त्या बोधजनका इत्यर्थः, तेन लक्षणाया अभावः फलति । नन्वेवं व्यञ्जनाया अप्यभावः स्यात्, न चेष्टापत्तिरितिवाच्यम्, वैयाकरणानामप्येतत्स्वीकार आवश्यक इति वक्ष्यमाणग्रन्थेन विरोधादितिचेत्—न, उक्तभाष्ये सति तात्पर्ये इति विशेषणात्, तात्पर्यञ्चेश्वरं देवतामहर्षिलोकवृद्धपरम्परातोऽस्मदादिभिर्लभ्यमिति वक्ष्यमाणत्वाद्व्यङ्ग्यार्थे शक्तिग्राहकव्यवहाराऽभावेन तादृशपरम्परातोऽस्मदादिभिर्लभ्यत्वाऽभावेन तदंशे तात्पर्याऽभावानुमानात् । इति भाष्यादिति—भुवत्यमिदं भाष्यमित्यन्वेषणीयम् । योगराजस्यत्येतदेव दृश्यते—"सर्वे च शब्दाः सर्वार्थाऽभिधानसमर्थाः, इति सर्वेषां सर्वेषां शब्दानां सम्बन्धः, ईश्वरसङ्केतस्तु प्रकाशकः, अतएव नित्यः शब्दार्थसम्बन्ध इति तान्त्रिका" इति तत्रोक्तम् । अत्र तान्त्रिका इत्यस्य वैयाकरणा इत्यर्थः । वाक्यपदीयस्यैयं कारिका, पूर्णा यथा—

*"नित्याः शब्दार्थसम्बन्धास्तत्राम्नाता महर्षिभिः ।*
*सूत्राणां सानुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः ॥" इति ।*

वृत्तिद्वयावच्छेदकद्वयकल्पने गौरवाज्जघन्यवृत्ति कल्पनाया अन्याय्यत्वाच्च। कथं तर्हि गङ्गादिपदात्तीरप्रत्यय ? भ्रान्तोसि ! सति तात्पर्ये सर्वे सर्वार्थवाचका इति भाष्यमेव गृहाण। तथाहि। शक्तिर्द्विविधा। प्रसिद्धाऽप्रसिद्धा च। आमन्दबुद्धिवेद्यात्व प्रसिद्धात्वम्। सहृदयमात्राऽवेद्यात्वम प्रसिद्धात्वम्। तत्र गङ्गादिपदाना प्रवाहादौ प्रसिद्धा शक्ति तीरादौ वा प्रसिद्धेति किमनुपपन्नम्। ननु यदि सर्वे सर्वार्थवाचका इति चेदूम्पे तर्हि घटपदात्पटप्रत्यय किन्नस्यादितिचेन्न। सति तात्पर्ये इत्युक्त्वाचार्य्याभावादिति गृहाण। तात्पर्यं चात्र ऐश्वर देवतामहर्षिलोकवृद्ध परम्परातोऽस्मदादिभिर्लभ्यमिति सर्वं सुलभम्॥

ननु व्यञ्जना क पदार्थ। उच्यते। मुख्यार्थबाधनिरपेक्षबोधजनको

---

गौरवादिति—लक्षणास्वीकारे वृत्तिद्वयकल्पनम्, तदवच्छेदकद्वयकल्पनम्, शाब्दबोधं प्रति शक्तिज्ञानजन्योपस्थितेर्लक्षणाज्ञानजन्योपस्थितेश्च कारणत्वे कार्यकारणभावद्वयकल्पनम्, परस्परव्यभिचारवारणाय कार्यताऽवच्छेदककोट्योरव्यवहितोत्तरत्वनिवेशेऽव्यवहितोत्तरत्वस्य स्वध्वंसाधिकरणक्षणानुत्पत्तिकत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणक्षणोत्पत्तिकत्वरूपतया (लक्षणाज्ञानजन्यपदार्थोपस्थितिप्राग्वर्तिशक्तिज्ञानजन्यपदार्थोपस्थितिजन्यशाब्दबोधे व्यभिचारवारणाय विशेष्यम्, शक्यशाब्दबोधाऽनन्तरभाविलक्षणाज्ञानजन्योपस्थितिजन्यशाब्दबोधे व्यभिचारवारणाय सत्यन्तम्) स्वत्वस्य तत्तद्व्यक्तिविश्रान्ततया तद्घटिताऽव्यवहितोत्तरत्वघटितत्वेऽनन्तकार्यकारणभावकल्पनम्, पदार्थोपस्थितिं प्रत्यपि शक्तिज्ञानस्य लक्षणाज्ञानस्य च कारणत्वे पुन कार्यकारणभावद्वयकल्पनम्, अत्रापि परस्परव्यभिचारवारणायाव्यवहितोत्तरत्वनिवेशेऽनन्तकार्यकारणभावकल्पनम् इतीमानि गौरवाणि सन्ति। न च तव मतेऽपि प्रवाहतीरावयमभेदेन कार्यकारणभावद्वयकल्पनम्, परस्परव्यभिचारवारणायाऽव्यवहितोत्तरत्वनिवेशे च तादृशमेवानन्त्यमिति वाच्यम्, शक्तिभ्रमाऽनुरोधेन लक्षणावादिमतेऽपि अस्य गौरवस्य सत्त्वात्। पूर्वोक्तगौरवस्य तु तन्मते आधिक्यमेवेति तत्त्वम्। इति लक्षणावाद।

मुख्यार्थबाधनिरपेक्षबोधजनक इति—नानार्थकशब्दस्य प्रकरणादिनैकार्थे नियमिते तात्पर्यवशाद्योऽन्यार्थबोध राजत्युमावल्लभ इत्यादौ तत्र शक्यार्थस्य

मुख्यार्थसम्बन्धासम्बन्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवै शिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना। अत एव निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यता च हर्यादिभिरुक्ता। द्योतकत्वं च स्वसम

---

बाधाभावेऽपि व्यञ्जनासत्त्वात्। लक्षणामूलव्यञ्जनास्थले गङ्गायां घोष इत्यादौ मुख्यार्थबाधस्य नान्तरीयकत्वेऽपि व्यञ्जनाया साक्षात्तस्यानपेक्षणमेव। मुख्यार्थ सम्बन्धेति—मुख्यार्थसम्बन्धो यथा—'भ्रम धार्मिक विश्रब्धः' इत्यादौ भ्रमणाऽ भावस्य व्यङ्ग्यत्वे शक्यार्थेन सह वैपरीत्यलक्षणः सम्बन्धः। 'राजत्सुमावल्लभम' इत्यत्र सादृश्यं सम्बन्धः। असम्बन्धो यथा—गङ्गायां घोष इत्यत्र शीतत्वपावन त्वादेस्तटवृत्तिधर्मस्य व्यङ्ग्यस्य प्रवाहेन सह नास्ति सम्बन्धः। प्रसिद्धार्थविषय कत्वं तत्रैव शक्तिमूलव्यञ्जनाया 'राजत्सुमावल्लभम' इत्यादौ। अप्रसिद्धार्थविषय कत्वन्तु लक्षणामूलव्यञ्जनास्थले गङ्गायां घोष इत्यादौ। अथादिगतव्यञ्जनायाः मुख्यार्थबाधमुख्यार्थसम्बन्धप्रसिद्धार्थविषयकत्वाऽभावः सुतरां द्रष्टव्यः। वक्त्रादीति वक्त्रादिवैशिष्ट्यज्ञानञ्च प्रतिभादि च ताभ्यामुद्बुद्ध इत्यर्थः। अत्र वक्त्रादिपदेन—

*वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः।*
*प्रस्तावदेशकालादेर्वैशिष्ट्यात्प्रतिभाजुषाम्॥*
*योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा॥*

इति काव्यप्रकाशोक्ता गृह्यन्ते। प्रतिभादिपदेन च—शक्तिनिपुणताऽभ्यासानां काव्यप्रकाशोक्तानामेव संग्रहः। अत्र लक्षणे प्रथमविशेषणद्वयेन लक्षणाया वैलक्षण्यं लक्ष्यते, तृतीयविशेषणेन च शक्तितः पार्थक्यं प्रतिभाति लक्षणातश्च, एवं चतुर्थेनापि। *संस्कारविशेष इति—यद्यपि समवायेनाऽयं सहृदये वर्तते तथापि परम्परया शब्दादावपि वर्तत एव।* अत्र शक्तिलक्षणयोरिव साक्षात्सम्बन्धेन शब्दाद्यनिष्ठत्वं विहाय सहृदयनिष्ठधर्मविशेषरूपसंस्कारविशेषत्वस्य प्रतिपादनाद् व्यञ्जनायाः सहृदयहृदयवेद्यत्वनिवेदनद्वारेण तस्याः किमपि चमत्कारचुञ्चुत्वमा वेदितं भवति। यथोक्तं ध्वनिकृता—

*प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।*
*यत्तत्प्रसिद्धाऽवयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥*

भिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वमिति, वैयाकरणानामप्येतत्स्वीकार आवश्यक । एवा च शब्दतदर्थपदपदैकदेशवर्णरचनाचेष्टादिषु सर्वत्र तथैवानुभवात् । वक्त्रादिवैशिष्ट्यज्ञान च व्यङ्ग्यविशेषबोधे सहकारीति न सर्वत्र तदपेक्षेत्यन्यत्र विस्तर । यत्तु तार्किकाः लक्षणयैव गतार्था व्यञ्जनेति न सा स्वीकार्येत्याहु । तन्न । लक्षणाया मुख्यार्थबाधपूर्वक लक्ष्यार्थबोधकत्वात् । मुख्यार्थसम्बन्धार्थस्यैव लक्षणया बोधकत्वात् । व्यञ्जनाया अतथात्वेन तदन्तर्भावाच्चेति दिक् ॥

ननु कोऽय वृत्त्याश्रयश्शब्द । वर्णा प्रत्येकमिति चेत्, न । द्वितीयादिवर्णोच्चारणवैयर्थ्यापत्ते । नापि वर्णसङ्घात । उच्चारितप्रध्वंसित्वेन यौगपद्यासम्भवात् । अभिव्यक्तेरुत्पत्तर्वा क्षणस्थायित्वात्क्षणात्मककालस्य प्रत्यक्षायोग्यत्वेन तदवच्छिन्नवर्णस्याप्यप्रत्यक्षत्वात् । उच्चारणाधिकरण

---

वैयाकरणानामपीति—निपातानां द्योतकत्वस्य, स्फोटस्य व्यङ्ग्यतायाश्च सिद्धान्तभूतत्वेन तत्र तत्र विलक्षणार्थप्रतीत्यन्यथाऽनुपपत्त्या च वैयाकरणा अपि एनामङ्गीकुर्वन्ति । अपिना—सान्द्रानन्दनिर्भररसास्वादरसिका कवयस्तु तां धारयन्त्येव, किन्तु शुष्कपदपदार्थविवेचनरूक्षीकृतहृदया वैयाकरणा अपि एनामुररीकुर्वन्ति, इति गम्यते । एषा न केवल शब्द एव किन्तु तदर्थादिष्वपीत्याह—एषा च शब्देत्यादि । काव्यप्रकाशादावुदाहरणानि द्रष्टव्यानि । व्यङ्ग्यविशेषेति—अर्थगतव्यञ्जनाप्रतिपाद्यव्यङ्ग्यबोधे श्यालकादिप्रयुक्तशब्दगतव्यञ्जनास्थलीयव्यङ्ग्यबोधे च क्वचित् इत्यर्थ । दिगिति—विस्तरस्तु साहित्यदर्पण काव्यप्रकाशध्वन्यालोकादितो द्रष्टव्य इतितात्पर्यम् । इति व्यञ्जनावाद ।

प्रसङ्गसङ्गतिं सूचयितुमाह—ननु कोऽयमिति । क्षणस्थायित्वादिति—एतदुत्तरमय पाठश्शुद्धो भाति—"क्षण शब्देन तदाधार काल । मुख्यक्षणस्य प्रत्यक्षायोग्यत्वेन तदवच्छिन्नवर्णस्याऽपि अप्रत्यक्षत्वापत्ते" इति, मञ्जूषायां तथा पाठात् । अस्याय भाव —वर्णानां क्षणस्थायित्वमित्यत्र क्षणो गौण एव, वर्णाधारभूत कालविशेषो विवक्षित, मुख्य क्षणपदवाच्यस्तु कल्पितखण्डसमूहरूप कालस्याऽवयवधारायाश्चरमाऽपकर्षावधि पृथिव्यादे परमाणुरिव कश्चिदतिसूक्ष्मतर प्रत्यक्षाऽयोग्य कालखण्डविशेष । एकैकस्य वर्णस्य तु प्रत्यक्षमनुभूयते,

कालोत्तरकालवृत्तिध्वंसप्रतियोगित्वमुच्चरितप्रध्वंसित्वम् । इको यणचीत्यादौ तस्मिन्निति परिभाषोपस्कृतवाक्यार्थेऽयं पूर्वोऽयं पर इति नष्टस्य प्रत्यक्षविषयेदंशब्देन पौर्वापर्यव्यवहारायोगाच्च । यत्तु तार्किका वर्णानामनित्यत्वेऽपि उत्तरोत्तरवर्णे पूर्वपूर्ववर्णवत्त्वमव्यवहितोत्तरत्वसम्बन्धेन संस्कारवशाद् गृह्यत इति पदप्रत्यक्षात्तत्राच्छाब्दबोध । यद्वा पूर्वपूर्ववर्णजा शब्दा शब्दजशब्दन्यायेन चरमवर्णप्रत्यक्षपर्यन्तं जायमाना एव सन्त इति न पदप्रत्यक्षानुपपत्ति । यद्वा पूर्वपूर्ववर्णानुभवजन्यसंस्कारसध्रीचीनचरमवर्णानुभवत शाब्दबोध इत्याहुः । तन्न । आद्येऽयं पूर्वोऽयं पर इत्यभिलापासंभवेनाऽव्यवहितोत्तरत्वसंबन्धायोगात् । नष्टविद्यमानयोरव्यवहितोत्तरत्वसम्बन्धस्य वक्तुमशक्यत्वाच्च । द्वितीये शब्दजश

---

तस्मात् वर्णाधारभूत क्षणपदवाच्य कश्चिद्गौण पदार्थो ग्राह्य । अन्यथा (मुख्य क्षणस्य तदाधारत्वे) आधारस्याऽप्रत्यक्षत्वे आधेयस्य सुतरामप्रत्यक्षत्वाऽऽपत्तिः स्यादनिष्टेति । एतच्च अग्रेऽपि परमलघुमञ्जूषायां क्षणस्थायित्वादित्यनन्तरं क्षणात्मकेत्यारभ्याऽप्रत्यक्षत्वादित्यन्तस्य स्थाने स एव पाठो युक्तः, तत्रयुक्ते । लेखकादिप्रमादाच्च परिवर्तितो भवेत् ।

उच्चरितप्रध्वंसित्वमिति—तत्त्वञ्च वर्णानां 'परः सन्निकर्षः' इति सूत्रे भाष्य उक्तम्—"एकैकवर्णवर्तिनी वाग्, न द्वौ युगपदुच्चारयति । 'गौः' इति गकारे यावद् वाग्वर्तते नौकारे न विसर्जनीये, यावद्विसर्जनीये न गकारे नौकारे, उच्चरितप्रध्वंसित्वात् । उच्चरितप्रध्वंसिनः खल्वपि वर्णाः" इति । अत्र वाग् = वागिन्द्रियम् । अत्र एकक्षणस्थायित्वमेव प्रमाणवर्णानामित्युक्तं भवति, तथा च 'योग्यविभुविशेषगुणानां द्वितीयक्षणस्थायित्वमिति' तार्किकोक्तनियमो बाध्यते ।

गृह्यत इति—स्मर्यत इत्यर्थः । शब्दजशब्देति—उच्चरितो वर्णः क्षणस्थाय्यपि क्षणाऽवस्थितिकाल एव स्वसमानाकारं वर्णान्तरमुत्पाद्य तथा नश्यति । सोत्पन्नस्तादृगेन स्वसमानाकारमुत्पाद्य नश्यतीत्येव क्रमेण श्रोतृदेशे चरमवर्णस्य श्रवणं यावत् पूर्वपूर्ववर्णोत्पन्नो वर्णो जायमान एव तिष्ठतीति न्यायस्तार्किकाणां मत । दृश्यतेऽद्यत्वे लोकेऽपि यत् बहुदूरस्थजनोच्चरित शब्दः कतिपयक्षणोत्तरमेव यन्त्रसंस्कारेण श्रोतुः श्रवणविषयो भवतीति । तच्च स्वसमानाकारवर्णोत्पादकत्वाऽ

ध्वन्यायेन पदप्रत्यक्षोपपादनेऽपि पदस्याविद्यमानत्वेन तत्र शक्त्याश्रयत्व स्य ग्रहानुपपत्ते । अविद्यमाने आश्रयत्वाङ्गीकारे नष्टो घटो जलवानित्या- द्यापत्तेश्च । तृतीये येन क्रमेणानुभवस्तेनैव क्रमेण तत्संस्कारस्थितिरित्यत्र विनिगमकाभावात् सरो रसो नदी दीन इत्यादौ विपरीतसंस्कारोद्बोधेन प्रत्येकमन्यार्थप्रत्ययापत्ते । सत्यचिचिनाशवद्वर्णसमुदायरूपपदस्य मनु प्यादिवद्भेदे एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतो युगपत्सर्वयागेष्वङ्ग भव तीति भाष्यविरोधापत्तेश्च । प्रादुर्भूतोऽभिव्यक्त । ननु कस्तर्हि शक्त्या श्रयश्शब्द । स स्फोटात्मक इति गृहाण ।

ननु कोऽयं स्फोट । उच्यते । चतुर्विधा हि वागस्ति । परा पश्यन्ती

---

भावे न सङ्गच्छते, वर्णानां द्वितीयक्षणे ध्वंसात् । तेनैव क्रमेण तत्संस्कारस्थिति रित्यत्र विनिगमकाऽभावादिति—चिन्त्यमिदम्—सिद्धान्तपक्षेऽपि स्फोटस्य व्यञ्जकरूपत्वोपगमे त्वाङ्गीकारेण वर्णायसंस्काराणामेव स्थिरतरत्वेन स्फोटे प्रतिबिम्ब समर्पकत्वोपगमात् क्रमिकसंस्काराऽनभ्युपगमे सरो रस इत्यादौ तादृशापत्तेस्तुल्यत्वात् संस्काराणां प्रतिबिम्बाऽसमर्पकत्वे तु क्षणस्थायिनां वर्णानां साहित्याऽभावेन तत्प्रतिबिम्बे स्फोटस्य पदवाक्यात्मकत्वं भज्येत । अतएव मञ्जूषायां स्फोटनिरूपण- प्रस्तावे—"येन क्रमेण च चित्ते संस्कारस्तेनैव क्रमेण व्यञ्जकरूपरूपितता तस्येति स्वीकारान्न 'सरो रस' इत्यनयोरविशेष" इत्युक्तम् । क्रमिकाऽनुभवस्यैव संस्कार क्रमिकत्वे विनिगमकत्वाच्च । तस्मात्—तेनैव क्रमेण तत्संस्कारस्थितावपि तेनैव क्रमेण तदुद्बोधके इत्यत्र विनिगमकाऽभावादिति पाठ" स्तस्य स्थाने न्याय्योऽनभा तीति सुधीभिर्विभावनीयम् ।

मूलाधारस्थेति—मूलाधारो नाम—

*गुदात्तु द्व्यङ्गुलादूर्ध्वं मेढ्रात्तु द्व्यङ्गुलादध ।*
*चतुरङ्गुलविस्तारमाधारं वर्तते समम् ॥*

इति शिवसंहितोक्ते गुदमेढ्रान्तराले गुदाद्द्व्यङ्गुलादूर्ध्वं मेढ्रात् द्व्यङ्गुला- दधश्चतुरङ्गुलपरिमाण पद्मचक्राऽपरपर्याय स्थानविशेष ।

इदमत्र तत्त्वम्—इडा, पिङ्गला, सुषुम्णेति तिस्रो नाड्य, पवनवाहिन्य ।

मध्यमा वैखरी च । तत्र मूलाधारस्थपवनसंस्कारीभूता मूलाधारस्था शब्दब्रह्मरूपा स्पन्दशून्या बिन्दुरूपिणी परावागुच्यते । नाभिपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता मनोगोचरीभूता पश्यन्ती वागुच्यते । एतद्द्वयं वाग्ब्रह्म योगिनां समाधौ निर्विकल्पकज्ञानविषयः इत्युच्यते ।

तत्र मूलाधारादारभ्य वामनासापुटं गता इडा नाम । तत एव च दक्षिणनासापुटं गता पिङ्गला नाम । तयोर्मध्ये विद्यमाना मूलाधारादेवोर्ध्वं गच्छन्ती इडापिङ्गले आश्लिष्य नासापुटद्वयं गता सुषुम्णा नाम । चन्द्रसूर्याग्निनामभिश्च क्रमशस्ता व्यवह्रियन्ते । आद्ये द्वे क्रियाकलापप्रेरिके, अन्त्या केवलं समाधिसाधिनी । आसां नाडीनां षट् स्थानविशेषाश्चक्रपद्माऽपरनामधेयाः सन्ति मूलाधार, स्वाधिष्ठानम्, मणिपूर, अनाहतम्, विशुद्ध, आज्ञा चेति । तत्र गुदमेढ्रान्तराले 'गुदात्तु द्व्यङ्गुलादूर्ध्वं मेढ्रात्तु द्व्यङ्गुलादधः, चतुरङ्गुलविस्तारमाधारं वर्तते समम्' इत्युक्तदिशा प्रथमं । लिङ्गमूले व्यवस्थितो द्वितीयः, नाभौ तृतीयः, हृदये चतुर्थं, कण्ठे पञ्चमं, भ्रुवोर्मध्ये षष्ठश्चेति योगशास्त्रे विस्तरः ।

मूलाधारस्थपवनसंस्कारीभूता—शतमयं विवक्षो पुरुष इच्छया यादृशं प्रयत्नेन मूलाधारस्थपवनस्य योग एव तदीयसंस्कारः, तदभिव्यक्तीभूतेत्यर्थः । शब्दब्रह्मरूपेति—ब्रह्मरूपस्य जगदुपादानत्वात् । तदुक्तं हरिणा—

*अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।*
*विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥* इति ।

स्पन्दशून्या = क्रियाशून्या । बिन्दुरूपिणी—त्रिगुणात्मिका प्रकृतिः 'बिन्दु'रिति, तद्रूपा । मनोगोचरीभूता=मानसप्रत्यक्षविषयीभूता । समाधाविति—हठयोगप्रदीपिकायां समाधिलक्षणं यथा—

*सलिले सैन्धवं यद्वत्साम्यं भजति योगतः ।*
*तथात्ममनसोरैक्यं समाधिरभिधीयते ॥*
*यदा संक्षीयते प्राणो मानसञ्च प्रलीयते ।*
*तदा समरसत्वञ्च समाधिरभिधीयते ॥* इति ।

योगदर्शनेऽपि—"तदा द्रष्टुः स्वरूपेऽवस्थानम् ।" "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधि"रिति । निर्विकल्पकेति—निर्विकल्पकज्ञानत्वञ्च निष्प्र

ततो हृदयपर्यन्तमागच्छता तेन वायुनाऽभिव्यक्ता तत्तदर्थवाचकशब्द स्फोटरूपा श्रोत्रग्रहणायोग्यत्वेन सूक्ष्माजपादौ बुद्धिनिर्ग्राह्या मध्यमावागुच्यते । तत आस्यपर्यन्तमागच्छता तेन वायुनोर्ध्वमाक्रमता च मूर्धानमाहत्य परावृत्य च तत्तत्स्थानेष्वभिव्यक्तापरश्रोत्रेणापि ग्राह्या वैखरीवागुच्यते । तदाह—

> परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता ।
> हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ॥
> वैखर्या हि कृतो नादः परश्रवणगोचरः ।
> मध्यमया कृतो नादः स्फोटव्यञ्जक उच्यते ॥ इति ।

युगपदेव मध्यमावैखरीभ्यां नाद उत्पद्यते । तत्र मध्यमानादोऽर्थवाचकः स्फोटात्मकशब्दव्यञ्जकः । वैखरीनादो ध्वनिः सकलजनश्रोत्रमात्रग्राह्यो भेर्यादिनादवन्निरर्थकः । मध्यमानादश्च सूक्ष्मतरः । कर्णपिधाने च जपादौ च सूक्ष्मतरवायुव्यङ्ग्यः शब्दब्रह्मरूपः स्फोटव्यञ्जकश्च ।

---

अविषयकज्ञानत्वम् । चित्=ब्रह्म । इदं वेदान्तप्रसिद्धम् । तार्किकप्रसिद्धं निर्विकल्पज्ञानन्तु—यत् केवलं धर्मं धर्मिणं वा विषयीकरोति यथा—घटत्वमिति, 'घट' इति वा । सविकल्पकज्ञानन्तु—अचिद्विषयकम्, अचित्=अविद्या । तार्किकाणामिदन्तु विशेष्यविशेषणभावावगाहीतिकथ्यते । परा निर्विकल्पकज्ञानविषयीभूता, पश्यन्ती च सविकल्पकज्ञानविषयीभूतेति विशेषः । तत्तदर्थवाचकस्फोटरूपेति—मध्यमावागेव स्फोटात्मा इति भावः । अथवा स्फोटं रूपयति व्यञ्जयतीतिव्युत्पत्त्या स्फोटव्यञ्जिकेत्यर्थः । इदमत्रसारम्—मध्यमाया अशब्दयम् एकः स्फोटात्मकः अपरस्तद् व्यञ्जकध्वनिरूप इति । अत एव वक्ष्यमाणग्रन्थेनैकवाक्यतेति ।

परावाङ्मूलचक्रेति—उक्तस्वरूपो मूलाधार एव मूलाधारचक्रम् । नाभिसंस्थिता=नाभिदेशीय मणिपूरसञ्ज्ञकचक्रसंस्थितेत्यर्थः । हृदिस्था=हृदयदेशीयाऽनाहतचक्रस्था । कण्ठदेशगा=कण्ठदेशस्थविशुद्धचक्रगेत्यर्थः । वैखर्येति—वागपि 'वैखरी' नाम, वागिन्द्रियमपि 'वैखरी' नाम । अत्र वैखर्या=वागिन्द्रियेणेत्यर्थः । नादः=ध्वनिः कादिवर्णरूपः । निरर्थक इति—स्वं प्रति निरर्थक इत्यर्थः, परं प्रति तु परकीयमध्यमानादस्य प्रेरकत्वेन सार्थकः, तथापि स्वतः स्फोट

ताद्दशमध्यमानादव्यङ्ग्य शब्द स्फोटात्मकः ब्रह्मरूपो नित्यश्च। तदाह हरि—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥ इति।

स च यद्यप्येकोऽखण्डश्च तथापि पदं वाक्यं जपाकुसुमादिलौहित्य पीतत्वादिव्यञ्जकोपरागवशात् लोहितः पीतः स्फटिक इति भानवद् वर्णादिव्यङ्ग्य वर्णरूप पदरूपो वाक्यरूपश्च। यथा च मुखे मणिकृपा

---

व्यञ्जकत्वाऽभावात् साक्षाद्भिप्रयोजन एव। अथवा निरर्थक इत्यस्य वाच्यार्थशून्य इत्यर्थः। यद्यपि मध्यमानादोऽपि स्वयं तच्छून्य एव तथापि स्फोटस्य व्यञ्जकत्वेन तद्व्यङ्ग्यस्फोटद्वारा वाच्याद्यर्थबोधक इति भावः। ताद्दशमध्यमानादव्यङ्ग्य इति—कादिवर्णात्मकमध्यमानादेन व्यङ्ग्य तत्प्रतिबिम्बरूपित इत्यर्थः। अयं भाव, स्फोट एक एवाऽखण्ड सकलार्थबोधनक्षमो मध्यमाया कादिवर्णरूपानादाद्योऽशो ब्रह्मरूपश्चेतन। किन्तु मध्यमाया अपरांशस्य कादिवर्णरूपस्य तस्मिन् प्रतिबिम्बपातो भवति स्फटिकादौ जपाकुसुमादीनामिव। ताद्दशवर्णपदाद्यात्मकप्रतिबिम्बवशादेव एकोऽप्यखण्डोऽपि स्फोटो नानेव भाति यथाऽनेकपात्रस्थजलप्रतिबिम्बितसूर्यवत्। स्वप्रतिबिम्बसमर्पणमेव नादस्य स्फोटव्यञ्जकत्वमिति गीयते। वैखरीनादस्तु परम्परया व्यञ्जको मध्यमानादस्योत्पादकत्वादिति सोऽपि व्यञ्जको भाक्त इति बोध्यते। ध्वनेरपि भेदद्वयम्-प्राकृतवैकृतात्मकमित्यग्रे वक्ष्यते। तत्र प्राकृत एव स्फोटव्यञ्जक इत्यग्रे स्पष्टीभविष्यति इति। विवर्तत इति—स्फोटस्यैकत्वे प्रतीयमानवर्णाद्यात्मकाऽनेकत्वस्यौपाधिकत्वमिति बहुभिर्दृष्टान्तैर्द्रढयितु-मयेत्यादि। 'पदं वाक्यम्', इति—'इत्यभिधीयते' इति शेषोऽत्र द्रष्टव्य। वर्णादिव्यङ्ग्य इति—अत्र पदं वाक्यमादिशब्दार्थः। तेन वर्णरूपमध्यमानादव्यङ्ग्यो वर्णस्फोट, पदरूपमध्यमानादव्यङ्ग्य पदस्फोट, वाक्यरूपमध्यमानादव्यङ्ग्यो वाक्यस्फोट इति तदर्थः। स्थितश्च रज्जूरगवद्वास्तविकोऽन्यथाभाव, तस्मात् कारणस्वरूपस्याऽविरोधेन कार्यप्रतिभास इति ब्रह्मणो निर्विकारत्वान्न नित्यत्वहानिरितिभाव। पूर्वोक्तमेव परिष्करोति—किञ्चेति।

नतु पदवाक्ययोः सखण्डत्वमते सर्वेषां वर्णानां पृथक्-पृथक् प्रतिविम्बाभ्युपगमे कर्ते

णादर्पणव्यञ्जकोपाधिवशाद्दैर्घ्यवर्तुलत्वादिमान् तद्वत्। तदुक्तम्—

पदे न वर्णा विद्यन्ते वाक्येष्ववयवा न च।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन॥ इति।

किंच व्यञ्जकध्वनिगतं कत्वगत्वादिकं स्फोटे भासते। बिम्बगतधर्मवैशिष्ट्येनैव प्रतिबिम्बस्य लोकेऽवधारणाद् व्यञ्जकरूपरूपितस्यैव स्फटिकादेर्भानाच्च। यथा चैकस्याकाशस्य घटाकाशो महाकाश इत्यौपाधिको भेदः। यथा चैकस्यैव चेतनस्यौपाधिको जीवेश्वरभेदो जीवानां च परस्परं भेदः। एवं स्फोटे व्यञ्जकध्वनिगतकत्वादिभानात्ककारो घुद्ध इत्यौपाधिको भेदव्यवहारः। औपाधिको भेद इत्यत्रोपाधि कत्वादिभिन्न रूपधेयस्तु आकाशस्फोटादिरेक एवेति तात्पर्यम्। पदवाक्ययोरखण्डत्वपक्षे त्वन्तिमवर्णव्यङ्ग्यः स्फोट एक एव। पूर्वपूर्ववर्णास्तु तात्पर्यग्राहकाः। न्यायनये चित्रगुरित्यादौ चित्रादिपदवत्। ध्वनिस्तु द्विविधः प्राकृतो वैकृतश्च॥ प्रकृतार्थबोधनेच्छया स्वभावेन वा जातः स्फोटव्यञ्जकः प्रथमः प्राकृतः। तस्मात्प्राकृताज्जातो विकृतिविशिष्टश्चिरस्थायी निवर्तको वैकृतिकः। हरिरप्याह—

---

स्फोटस्याऽनन्त्यमित्याशङ्क्य समाधत्ते—पदवाक्ययोरित्यादि। सर्ववर्णानां प्रतिबिम्बसमर्पकत्वेऽपि चरमवर्णप्रतिबिम्बानन्तरमेवास्यैव स्फोटस्याऽभिव्यक्तिरिति भावः।

पदे न वर्णा इति—अत्र श्लोके 'वाक्येष्ववयवा न चे'त्यस्य स्थाने वर्णाष्ववयवा न चेति पाठो भूषणसारपुस्तके समुपलभ्यते।' दृष्टान्तव्याजेनाह—वर्णेष्विति। एकारौकारऋकारादिवर्णेष्ववयवा प्रतीयमाना अपि यथा नेत्यर्थः। क्वचिदिवेत्येव पाठः। एवं वाक्येऽप्याह—वाक्यादिति—पदानामपि वाक्याद्विवेको भेदो नास्तीत्यर्थः" इति तद्विवरणञ्च सारेऽवलोक्यते। एतेन स्फोटस्य पदवाक्यात्मकस्यापि अखण्डत्वमिति सिद्धं भवति।

ध्वनिस्तु द्विविध इति—मध्यमानादाऽपरपर्यायो ध्वनिर्द्विविध इत्यर्थः, तस्यैव प्राकृतात्मकस्य स्फोटव्यञ्जकत्वम्। 'मध्यमानादभिव्यङ्ग्यः स्फोट' इति पूर्वग्रन्थेनैकवाक्यत्वायाऽत्र मध्यमानादरूपध्वनेरेव ग्रहणमुचितम्।

स्फोटस्यग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।
शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः ॥
ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते । इति ॥

शब्दस्याभिव्यक्तेरूर्ध्वं वैकृता ध्वनयो जायन्त इति शेषः । वृत्तिभेद इति ।

अभ्यासार्थे द्रुता वृत्तिर्मध्या वै चिन्तने स्मृता ।
शिष्याणामुपदेशार्थं वृत्तिरिष्टा विलम्बिता ॥

विसृष्टेषु वृत्तिषु समुपोहन्ते कारणानि भवन्ति स्फोटस्तु तैर्न भिद्यते इत्यर्थः । अत्रेदं बोध्यम् । केनचिद्घटमानयेति वैखरीनादः प्रयुक्तः स केनचिच्छ्रोत्रेन्द्रियेण गृहीतः स नाद इन्द्रियद्वाराबुद्धिस्थत्वं स्वसन्नर्थबोधकं शब्दं स्वनिष्ठकत्वादिना व्यञ्जयति तस्मादर्थबोधः । स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या स्फोटः । उच्चारयितुस्तु युगपदेव मध्यमावैखरीभ्यां नाद उत्पद्यते । तत्र वैखरीनादो वक्ष्ये फूत्कारादिवन्मध्यमानादोत्साहकः, मध्यमानादः स्फोटं व्यञ्जयतीतिशीघ्रमेव ततोऽर्थबोधः परस्य विलम्बेनाऽनुभवसिद्धत्वात् । अतएव श्रोत्रोपलब्धिर्बुद्धि

---

स्फोटस्य ग्रहण इति—ग्रहणे=अभिव्यक्तावित्यर्थः । अस्योत्तरार्धम्—'स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते' इति । स्थितिभेदे=चिराऽचिरोपलब्धिभेदे । वैकृतत्वञ्च ध्वनेर्वायस्यादिकृतत्वात् । स्फोटात्मा तैर्नभिद्यत इति—वैकृतध्वनिना स्फोटस्य चिराचिरोपलब्धेरेव भेदो न तु स्वात्मन इति भावः । वृत्तिभेदे=द्रुतादिवृत्तिभेदे । वृत्तिः=स्थितिः । बुद्धि हृद्गत इति—बुद्धिश्च हृदयद्गत इत्यर्थः ।

एकमप्यन्तःकरणं वृत्तेर्भेदाच्चतुर्विधम् । वृत्तिश्च परिणतिः । संशयनिश्चयगर्वस्मरणात्मिकाश्चतस्रो वृत्तयः । तथा च संशयात्मकं 'मनः' इति, निश्चयात्मिका 'बुद्धि'रिति, गर्वात्मको'ऽहङ्कार'इति, स्मरणात्मकं 'चित्त'मिति व्यपदिश्यते । तदुक्तम्

*मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम् ।*
*संशयो निश्चयो गर्वः स्मरणं विषया इमे ॥ इति ।*

अन्तःकरणमन्तरिन्द्रियमित्यर्थः । चित्तमेव तु हृदयम् इति विशेषोऽत्र द्रष्टव्यः ।

अर्थबोधकः शब्दः=स्फोटः । व्यञ्जयति—मध्यमानादोदीरणद्वारेति

निर्माह्य प्रयोगेणाऽभिज्वलित आकाशदेश शब्द इत्याकरग्रन्थस्संग च्छते करणादिना श्रोत्रोपलब्धिरत्न स्फोटात्मकपदादिरूपेण बुद्धिनिर्ग्राह्यत्वम् । स च प्रयोगेण वैखरीरूपेणाभिज्वलित स्वरूपकपित कृत इति तदर्थ । तत्रापि शक्यत्वस्येव शक्ततावच्छेदिकाया वर्णपदवाक्य निष्ठजातेर्वाचकत्वम् । तदुक्तम्--

अनेकव्यक्त्यभिव्यङ्ग्या जाति स्फोट इति स्मृता ॥ इति ।

तस्मादष्टविधस्फोटात्मकश्शब्दो वृत्त्याश्रय । वस्तुतस्तु वाक्यस्फोटो वाक्यजातिस्फोट एव वा वृत्त्याश्रय । तत एव लोकेऽर्थबोध इत्याद्युक्त स्यादिति सर्वं सुस्थम् ॥ इति स्फोटनिरूपणम् ॥

---

शेष,। अत एवाग्रिमग्रन्थेनैकवाक्यता । आकर ग्रन्थ इति—तच्च 'अइउण्' सूत्रे महाभाष्यम् । प्रयोगेण वैखरीरूपेणेति—यद्यपि मध्यमानादेनैव स्वरूप प्रतिबिम्बसमर्पणेन स्वरूपकपितः क्रियते, तथापि परश्रवणगोचरेण वैखरीरूपेणैव व्यक्ततरीकरणात् तेनापि स्वरूपकल्पितः क्रियते, तस्यापि व्यञ्जकत्वात् । आकाशदेशस्य इति—तत्तत्प्राणिहृदयदेशाऽवच्छिन्नाकाशदेशस्य, सर्वसमष्टेर्विराजो हृदयरूपमाह्याकाशदेशस्यश्चेत्यर्थ ।

स्फोटे औपाधिकपदाद्यात्मकभेदवत् अनुगतप्रतीतिज्ञापिता वर्णपदवाक्यात्मक स्फोटनिष्ठा जातिरेव लाघवात् वाचिकाऽस्तु, स्फुटति प्रकाशतेऽर्थो यस्मादिति व्युत्पत्त्या जातिरेव वा स्फोटोऽस्तु इत्याह—तत्रापिशक्यत्वस्येवेति—लाघवाय यथा अर्थनिष्ठजातेरेव शक्यत्वमिति केषामपि सिद्धान्तस्तथैव शब्दनिष्ठ जातेरपि शक्तत्वमस्तु इति भाव । अनेकव्यक्त्यभिव्यङ्ग्येति-अनेकया वर्णव्यक्तिभिरभिव्यङ्ग्या न त्वेक्याऽपीति नैकवर्णश्रवणाद्बोध इत्येकोऽर्थ, भूयसासारानुसारेण । 'इद पदम्' 'इद पदम्' इत्येकव्यक्तिषु एकाकारप्रत्ययात् व्यज्यमाना या जातिस्सा स्फोट इत्यर्थ इति तु मिश्रा ।

वस्तुतस्तु—अष्टविधत्वन्तु स्फोटस्य व्यञ्जकोपरागात् स्फटिकवत् । वस्तुतस्तु अखण्ड एवैक स इति व्याख्यातपूर्वमित्याशय ।

अत्राऽय प्रकरणस्यास्य परिष्कार —

तद्धर्माऽवच्छिन्नविषयकशाब्दबुद्धित्वाऽवच्छिन्नं प्रतीत्यादिकार्यकारणभावे इदन्तु चिन्त्यते—कोऽयं वृत्त्याश्रयीभूत शब्दो नाम? न तावद्घटादीनां प्रत्येकं वर्णाः, एकवर्णोच्चारणाऽनन्तरमर्थप्रतीतेरदर्शनात्, द्वितीयादिवर्णोच्चारणवैयर्थ्यप्रसङ्गाच्च। नाऽपि सहिताः, उच्चरितप्रध्वंसिनां तेषां साहित्याऽसम्भवात्, उच्चरितप्रध्वंसित्वञ्च तेषां 'परः सन्निकर्षः' इति सूत्रे भाष्ये स्पष्टम्। तेषामुत्पत्तेरभिव्यक्तेर्वा क्षणस्थायित्वात्। न च वर्णानां तादृशत्वेऽपि तदीयसंस्काराणां यावत्कार्यं स्थिरत्वेन तद्बलात् उत्तरवर्णप्रत्यक्षकालेऽव्यवहितोत्तरत्वसम्बन्धेन पूर्ववर्णवत्त्वं तदुत्तरवर्णे स्मर्यते, एवं तदुत्तरवर्णप्रत्यक्षकाले स्मृतपूर्ववर्णविशिष्टतद्वर्णवत्त्वं तदुत्तरवर्णे स्मर्यते इत्येवं क्रमेण सकलवर्णात्मकपदवाक्यविषयकस्मृतिसभिन्नप्रत्यक्षात्मकं ज्ञानं सुगममिति वाच्यम्, नष्टस्य प्रत्यक्षविषयेदमा परामर्शाऽयोगेन 'अयं पूर्वोऽयं परः' इतीदंशब्दघटिताऽभिलापाऽभिलप्यमानपौर्वापर्यज्ञानस्याऽसम्भवेन नष्टविद्यमानयोरव्यवहितोत्तरत्वाऽयोगात्, नष्टविद्यमानयोरव्यवहितोत्तरत्वस्य सम्बन्धताया अननुभवत्वाच्च। एवञ्च 'इकोयणचि' इत्यादौ 'तस्मिन्निति' परिभाषोपस्कृतवाक्यार्थाऽसङ्गतिश्च पौर्वापर्याऽयोगात्। न च शब्दजशब्दन्यायेन उच्चार्यैकेन पदवाक्यप्रत्यक्षोपपत्तिरिति वाच्यम्, एवं तस्य प्रत्यक्षसंभवेऽपि नष्टत्वेन तत्र (पदे, वाक्ये च) शक्त्याश्रयत्वस्य ग्रहानुपपत्ते, अविद्यमाने आश्रयत्वाङ्गीकारे 'नष्टो घटो जलवान्' इति व्यवहारस्य प्रमात्वाऽऽपत्ते। न च पूर्वपूर्ववर्णाऽनुभवजन्यसंस्कारसहकृतचरमवर्णाऽनुभवजन्यसंस्कारस्तावद्वर्णगोचरं समूहालम्बनं स्मरणं जनयतीति स्मृतौ साहित्यसंभव इति वाच्यम्, येन क्रमेणाऽनुभवस्तेनैव क्रमेण तत्संस्कारस्थितावपि तेनैव क्रमेण तदुद्बोधोऽपीत्यत्र मानाऽभावात् सरो रसो यजन्ता नदी दीन इत्यादौ कदाचित् विपरीतसंस्कारोद्बोधे विपरीतस्मरणेन प्रत्येकमन्यार्थप्रत्ययाऽऽपत्ते, दृश्यते च लोके दृढतरसंस्काराऽभावे व्युत्क्रमेणाऽपि स्मृतिः, इहापि वक्रदयभरने दृढतरसंस्काराऽभावस्य सत्वात्। ननु कस्तर्हि वृत्त्याश्रयः शब्दः? इति चेत्—स्फोटात्मा स इति गृहाण। कोऽयं स्फोट इति चेत्, श्रूयताम्—सर्गादौ भगवत सिसृक्षात्मिका माया जायते, ततो बिन्दुरूपमव्यक्तं त्रिगुणं सञ्जायते इति शाक्तानां प्रसिद्धं जायते। अस्माद्बिन्दोः शब्दब्रह्माऽपरनामधेयं वर्णादिविशेषरहितं नादमात्रमुत्पद्यते। एतञ्च तदुपादानमेव 'रव' 'परा' इतिशब्दैर्व्यपदिश्यते—

*"बिन्दोस्तस्माद्भिद्यमानाद्रवोऽव्यक्तात्मकोऽभवत् ।
स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते ॥"* इति प्रपञ्चसारोक्ते ।

एतत्सर्वगतमपि प्राणिनां मूलाधारे शतमयं निवसद्वो पुंस इच्छया जातेन प्रयत्नेन योगरूपसंस्कारवत पवनस्य चलनेनाऽभिव्यज्यते । तदभिव्यक्तं शब्दब्रह्म 'परा' वाग् इत्युच्यते । तदेव नाभिपर्यन्त ( मणिपूरचक्रम् ) आगच्छता तेन वायुनाऽभिव्यक्तं मनोविषयं 'पश्यन्ती'त्युच्यते । एतद्द्वयं सूक्ष्मतमसूक्ष्मतरमीश्वराधिदैवं योगिनां समाधौ क्रमशो निर्विकल्पकसविकल्पकज्ञानविषयं इत्युच्यते । ततो हृदयपर्यन्तम् ( अनाहतचक्रम् ) आगच्छता तेन वायुना हृदयदेशेऽभिव्यक्ताऽजपादौ तत्तद्यविशेषतत्तच्छन्दविशेषोल्लेखिन्या बुद्ध्या विषयीकृता हिरण्यगर्भदैवत्या परश्रोत्रग्रहणाऽयोग्यत्वेन सूक्ष्मा 'मध्यमावाग्' इत्युच्यते । स्वयं तु कर्णपिधाने उपांशुप्रयोगे च श्रूयमाणा सेत्याहुः । एतदवस्था त्रयमपि क्रमशः सूक्ष्मतमसूक्ष्मतरसूक्ष्मप्रणवरूपम् । तेन च आस्यपर्यन्त ( सहस्रारचक्रपर्यन्तम् ) आगच्छता तेन वायुना कण्ठदेशं ( विशुद्धाख्यचक्रं ) गत्वा ऊर्ध्वमाक्रामता च मूर्धानमाहत्य परावृत्य च तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या विराडधिदैवत्या 'वैखरीवाग्' इत्युच्यते । प्रणव एव व्यानोदानाभ्यां वायुभ्यां सह वैखरीरूपं प्रतिपद्यते, सर्वासामेव वाचां प्रणवोपादानकत्वात्, तथाग्रे स्पष्टीभविष्यति ।

तत्र मध्यमायां यश्चेतनांशो मध्यमाया एव ध्वन्यंशप्रतिबिम्बेन रूपितः स एव स्फोटात्मा वृत्त्याश्रयो वाचकश्च । न च वर्णातिरिक्तस्य तस्याऽनुभवविषयत्वाभाव इति वाच्यम्, 'गौः' इत्येकं पदम्, 'गामानये'त्येकं वाक्यम्, इति नानावर्णातिरिक्तैकपदवाक्याऽनुगते सार्वजनीनत्वात् । नायमसति बाधके एकपदवाक्याऽनुभवो भ्रम इति शक्यं वक्तुम् । नाप्यौपाधिकः, उपाधिः खल्वेकधीग्राह्यत्वम्, एकार्थधीजनकत्वं वा स्यात् । न तावदेकधीग्राहकाणां घटपटादिरपलाशानामेकत्वप्रत्ययोऽस्ति, तथा सति घटपटादिरपलाशा इति न कदापि स्यात् । एकार्थधीजनकत्वन्तु करीत्या वृत्त्याश्रयत्वाऽज्ञानात्खण्डितमेव । तद्धेतुत्वेन तु वृत्त्याश्रयत्वज्ञानेऽन्योऽन्याश्रयः वृत्त्याश्रयत्वज्ञानादर्थधीजनकत्वज्ञानम्, अर्थधीजनकत्वज्ञानाच्च वृत्त्याश्रयत्वज्ञानमिति । न च 'वनम्' 'सेना' 'शतम्' इतिवत् साहित्यौपाधिकमेकत्वज्ञानमिति वाच्यम्, तत्र स्थिराणां वृक्षादीनां साहित्यसम्भवेऽप्यत्रोच्चरितप्रध्वंसिनां

वर्णानां साहित्याऽसम्भवस्योपपादितत्वात्। तस्मादयमबाधितोऽनुभवसिद्धश्च पदवाक्यगोचर एकत्वनिर्भासो वर्णातिरिक्तं तत्समूहातिरिक्तञ्च कञ्चनैकं शब्दमालम्बते स एव स्फोटः।

तपरसूत्रे भाष्यकृताऽपि वृत्त्यन्तरे ऐसोऽनापत्तिं तत्तद्वृत्तिजनकयत्नभेदेन वर्णानां तत्तत्कालत्वस्यैवौचित्यादित्याशङ्क्य—"एवं तर्हि स्फोटः शब्दः, ध्वनिः शब्दगुणः" इत्याद्युक्तम्। 'ऋलृक्' सूत्रेऽपि—'अथवोभयतः स्फोटमात्रं निर्दिश्यते, रश्रुतेर्लश्रुतिर्भवती'त्युक्तम्। तरप्सूत्रेऽपि—"एक इन्द्रशब्दः क्रतुशते प्रादुर्भूतो युगपत्सर्वयागेष्वङ्गं भवती"ति प्रोक्तम्। तत्त्वञ्च—स्फुटति प्रकाशतेऽर्थो यस्मादिति योगरूढ्या अर्थनिष्ठविषयताप्रयोजकशब्दत्वम्। स चैकोऽखण्डश्च यद्यप्येकैकवर्णेनाऽपि अभिव्यज्यते तथापि पूर्वपूर्ववर्णाऽनुभवाहितसंस्कारसहकृतचरमवर्णाऽनुभवजन्यसंस्कारेणैव स्फुटमवभासते, अतो नैकवर्णेनाऽभिव्यक्तस्य तस्य प्रत्ययः। ब्रह्मात्मकस्य तस्यैकत्वेऽपि व्यञ्जकवर्णादिध्वनीनामानन्त्यादानन्त्याध्यासः। यथा जलचाञ्चल्येन चन्द्रप्रतिबिम्बस्य चलत्वेन ग्रहणम्, यथा च स्फटिकादेर्जपाकुसुमाद्युपाधिवशाल्लोहितरूपवत्त्वस्य भानम्, यथा च मुखे मणिकृपाणदर्पणाद्यभिव्यञ्जकवशाद्दैर्घ्यवर्तुलत्वादिभानं तद्वत्। उच्चरितप्रध्वंसिनां वर्णानां साहित्याऽसंभवेऽपि यावत्कार्यं स्थिरत्वेन तदीयसंस्काराणामेव स्फोटे प्रतिबिम्बसमर्पकत्वम्। येन क्रमेण च चित्ते संस्कारास्तेनैव क्रमेण व्यञ्जकरूपकल्पितक्रमवत्त्वं तस्येति स्वीकारान्न 'सरो रसः' इत्यनयोरविशेषः। स्फोटे स्फोटान्तराऽनधिकरणीभूतपौर्वापर्यग्रहणञ्च चित्रभित्तौ देशिकक्रमेण। अतएव 'परः संनिकर्षः' इति सूत्रे भाष्यम्—

बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तन्वन्नीतिः।
शब्देनार्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यम्॥ इति।

ननूपाध्यभावे कदाचित् शुद्धस्फटिकादिवत् केवलस्य स्फोटस्य भानं कस्मान्न? इति चेत्—न, स्फटिकादेरुपाधेरभावे सामग्र्यन्तरेणोपलम्भेऽपि स्फोटस्योपाधिभिन्नोपलम्भकाऽभावान्निरुपाधिकस्य इव न कदापि वर्णादिराहित्येनोपलम्भः, व्यञ्जकरूपप्रतिबिम्बनात् व्यञ्जकरूपकल्पितस्यैव तस्योपलम्भ इति स्वीकारात्। न च वर्णादिसंस्काराणां स्थिरत्वात्सर्वदा स्फोटभानापत्तिरिति वाच्यम्, ———नाऽहङ्कारवृत्त्यतिरिक्तवृत्त्या तदुद्बोधनाभावात्। व्यञ्जकरूपकल्पितस्यैव स्फो-

अथ शाब्दबोधसहकारिकारणानि आकाङ्क्षायोग्यताऽऽसत्तितात्पर्याणि। वाक्यसमयग्राहिकाऽऽकाङ्क्षा। सा चैकपदार्थज्ञाने तदर्थान्वययोग्यार्थस्य यज्ज्ञानं तद्विषयेच्छा 'अस्याऽन्वय्यर्थः कः' इत्येवरूपा पुरुषनिष्ठैव, तथापि तस्या स्वविषयेऽर्थे आरोप। अयमर्थोऽर्थान्तरमाका

---

ट्स्य मानेन यादृशव्यञ्जकाऽभिव्यक्ते शक्तिग्रहस्तादृशव्यञ्जकाऽभिव्यक्तादेव शाब्दबोध, अतो घटपदाभिव्यक्ते स्फोटे गृहीतशक्तिकस्य पुंसो न कलशपदाऽभिव्यक्तादर्थबोध। अयञ्चान्तरत्वात् श्रोत्रग्राह्यवैखरीसंस्कृतान्तःकरणग्राह्य एवेति न वैखरीं विनाऽस्योपलब्धि परस्य, स्वस्य तु भवत्येव। अस्य च व्यञ्जक प्राकृत एव मध्यमानादाख्यो ध्वनि—"स्फोटस्य ग्रहणे हेतु प्राकृतो ध्वनिरिष्यते" इति ह्युक्ते। अतो वृत्तिभेदाय वैकृतात्मकध्वन्युपाधिको नाऽस्मिन्भेद, तस्माद्वृत्त्यन्तरेऽपि पैसादि सिध्यति। तस्य चोपाधिभेदादुक्ता अष्टौ भेदा। तस्य च नित्यत्व सूर्यादीनामिव कल्पादिकल्पान्तावधिसापेक्षत्व, प्रवाहनित्यत्ववादात् ब्रह्मत्वञ्च तस्य जगदुपादानत्वात्।

स चाऽयं स्फोट आन्तरप्रणव एव—"ओङ्कार एव सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवतीति" श्रुते। बह्वी=वाक्यपदादिरूपा, नानारूपा=घटपटाद्यर्थरूपा चेत्यर्थ। 'अकार एवे'ति श्रुत्यन्तरे पाठ, तत्राप्यवयवद्वारा प्रणवोपलक्षणत्वमितिदिक्। इति वृत्त्याश्रयवाद।

शाब्दबोधे वृत्तिविशिष्टज्ञानरूपस्य मुख्यकारणस्य निरूपणानन्तरं सहकारिकारणनिरूपणे प्रसक्तस्य सङ्गतित्वं सूचयन्नाह—अथेत्यादि। कारणानीति—कारणताऽवच्छेदकानीत्यर्थ अथवा तात्पर्याणीत्यस्य तात्पर्यज्ञानानीत्यर्थ। आकाङ्क्षादिभ्रमेणापि शाब्दबोधदर्शनेन स्वरूपतस्तेषां कारणत्वाऽभावेन तज्ज्ञानानामेव कारणत्वस्वीकारात्। अतएव मुक्तावल्याम्—"आसत्तिज्ञानं, योग्यताज्ञानम्, आकाङ्क्षाज्ञानं, तात्पर्यज्ञानञ्च शाब्दबोधे कारणम्" इत्युक्तम्। वाक्यसमयेति—समय शक्तिः। पुरुषनिष्ठैवेति—इच्छारूपाऽऽकाङ्क्षाया आत्मधर्मत्वेन समवायसम्बन्धेन पुरुषनिष्ठत्वात्। स्वविषयेऽर्थे आरोप इति—यद्यपि विषयतासम्बन्धाऽवच्छिन्नेच्छानिष्ठप्रकारतानिरूपिताऽर्थनिष्ठविशेष्यताशालिज्ञानस्य प्रमात्वेन बाधकालिकत्वविरहान्नाऽऽरोपत्वम् तथापि, आकाङ्क्षतीतिप्रतीतेः समवायसम्बन्धाऽ-

ङ्क्षत इति व्यवहारात्। इदमेवाभिधानापर्यवसानमित्युच्यते। पदं तु नारोपः अर्थबोधोत्तरमेवाऽऽकाङ्क्षोदयात्। पदं साकाङ्क्षमिति तु साकाङ्क्षार्थबोधकमित्यर्थकम्। तदुक्तं समर्थसूत्रे भाष्ये परस्परव्यपेक्षां सामर्थ्यमेके। का पुनः शब्दयोर्व्यपेक्षा। न ब्रूमः शब्दयोरिति किं तर्हि अर्थयोरिति। ईदृशजिज्ञासोत्थापकं चैकपदार्थेऽपरपदार्थव्यतिरेकप्रयुक्तमन्वयबोधाजनकत्वस्य ज्ञानमिति, तद्विषये तादृशान्वयबोधजनकत्वेऽप्याकाङ्क्षेति व्यवहारः। यद्वा उत्थापकताविषयतान्यतरसम्बन्धेनोभयसम्बन्धेन वाऽर्थान्तरजिज्ञासा आकाङ्क्षा। आद्यं पश्य मृगो धावतीत्यत्र दर्शनार्थस्य कारकभावनाकाङ्क्षोत्थापकत्वं धावनं तु तद्विषय एव। अन्त्यं पचति तण्डुलं देवदत्त इत्यादौ क्रियाकारकयोर्द्वयोरपि परस्परं तदुत्थापकत्वात् तद्विषयत्वाच्च। अतएव घटः कर्मत्वम् आनयनं कृतिरित्यतो घटमानयेतिवन्नान्वयबोधः। आकाङ्क्षाविरहात्। घटमानयेति विभक्त्यन्तवाख्या तान्वयोरेव साकाङ्क्षत्वाच्च।

---

यद्विशेष्यकेच्छानिष्ठप्रकारतानिरूपितकर्तृनिष्ठविशेष्यत्वाऽवगाहित्वेन तादृशविशेष्यत्व याश्च प्रथमयाऽर्थान्तरमाकाङ्क्षतीत्यत्र कर्तृभूतेऽर्थे बाधेन मुख्यमेवात्र तादृशज्ञानस्यारोपत्वमिति नैयायिकाः। इदमेवेति—इदमेव—आकाङ्क्षैव, अभिधानस्य = वाचकत्वस्य, अपर्यवसानम् = अपूर्णतेत्यर्थः।

ननु 'अस्याऽन्वय्यर्थः कः?' इत्येवरूपाऽऽकाङ्क्षा शाब्दबोधे कारणताऽवच्छेदिका चेत्तर्हि—"घटः कर्मत्वम् आनयनं कृतिः" इत्यत्रापि घटमानयेतिवत् शाब्दबोधः स्यात्तादृशाऽऽकाङ्क्षायास्तत्र सत्त्वादित्यत आह—यद्वा उत्थापकेत्यादि। अतएवेति—उक्ताकाङ्क्षाज्ञानस्य शाब्दबोधं प्रति हेतुत्वादेवेत्यर्थः। अनेनाकाङ्क्षाज्ञानस्य शाब्दबोधकारणत्वस्वीकारेऽपि मानं दर्शितं भवति, उक्तमग्रे प्रपञ्चयिष्यते। अयमत्र परिष्कारः—

पदार्थविशिष्टस्मारकाऽऽकाङ्क्षा। सं० च—स्वघटितसमुदायघटकस्वेतरपदार्थविषयकजिज्ञासोत्थापकत्व—स्वघटितसमुदायघटकस्वेतरपदार्थोत्थापितजिज्ञासाविषयत्वैतदन्यतरवत्त्वम्, स्वघटितसमुदायघटकस्वेतरपदार्थविषयकजिज्ञासोत्थापकत्व-स्वघटितसमुदायघटकस्वेतरपदार्थोत्थापितजिज्ञासाविषयत्वैतदुभयवत्त्वम्—एतदन्य

योग्यता च परस्परान्वयप्रयोजकधर्मवत्त्वम्। तेन पयसा सिञ्चतीति वाक्यं योग्यम्। अस्ति च सेकान्वयप्रयोजकद्रवद्रव्यत्वं योग्यता जले, करणत्वेन जलान्वयप्रयोजकार्द्रीकरणत्वं योग्यता सेकक्रियायाम्। अतएव वह्निना सिञ्चतीति वाक्यमयोग्यम्। वह्नौ सेकान्वयप्रयोजकद्रवद्रव्यत्वाभावात्। एतादृशस्थलेषु नान्वयबोधः किं तु प्रत्येकं पदार्थबोधमात्रमिति नैयायिकास्तन्न, बौद्धार्थस्यैव सर्वत्रबोधविषयत्वेन बाधस्याभावात्। हरिरप्याह। "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति चेति"। अतो वन्ध्यासुतादिशब्दानां प्रातिपदिकत्वम्। वह्निना सिञ्चतीत्यतो बोधाभावे तद्वाक्यप्रयोक्तारं प्रत्यद्रवेण वह्निना कथं सेकं करोषी

---

तरसम्बन्धेन। पश्य मृगो धावतीत्यत्र दर्शनपदार्थे स्वान्वितसमुदायघटकस्वेतरधावनपदार्थविषयकजिज्ञासोत्थापकत्वम्, धावनपदार्थे च स्वान्वितसमुदायघटकस्वेतरदर्शनपदार्थोत्थापितजिज्ञासाविषयत्वम्। 'पचति तण्डुलं देवदत्तः' इत्यत्र तु क्रियाकारकयोर्द्वयोरपि तदुभयवत्त्वम्। एवं पूर्वोक्तवाक्ये मृगपदार्थेऽपि तदुभयवत्त्वमिति समन्वयः। घटः कर्मत्वम् आनयनं कृतिरित्यत्र तु न केनापि सम्बन्धेन घटादीनां पदार्थनैयिष्टयमिति नाऽतिप्रसङ्गः। अत्रैवोदासीनामस्त्यादिक्रियामादाय प्राप्तस्यातिप्रसङ्गस्य वारणार्थं स्वान्वितसमुदायघटकत्वविशेषणमितिदिक्।

अन्ये तु अमन्तघटशब्दसमभिव्याहृतलोडन्तनीशब्दस्य घटकर्मकानयनार्थबोधे आकाङ्क्षेति तत्तद्वाक्यार्थभेदेन भिन्नमाकाङ्क्षालक्षणं परिष्कुर्वन्तीत्यलम्। इत्याकाङ्क्षावादः।

अवसरसङ्गत्या योग्यतां निरूपयति योग्यता चेति। नैयायिका इति—योग्यताया शाब्दबोधे नैयायिका एव कारणत्वं जानन्ति, न वैयाकरणादय इति भावः। एतेनाऽरुचिः सूचिता। तदाह—तन्नेति। बाधस्याऽभावादिति—"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इत्युक्तपातञ्जलसूत्रेण शब्दप्रयोज्ये बोधे बाधज्ञानस्याऽप्रतिबन्धकत्वाऽङ्गीकारात् तथाऽनुभवाच्च। अत्रार्थे हरिमपि प्रमाणयति—हरिरप्याहेति। "वस्तुतो बाधज्ञानं न क्वाऽपि ज्ञाने प्रतिबन्धकम्, तत्कालेऽपि हि स्वस्वसामग्र्या जायत एव ज्ञानम्। तत्र स्वस्वसामग्रीवशाद् द्वयोरपि ज्ञानयोर्जातयोर्यत्र ज्ञाने सदोषसामग्रीजन्यत्वग्रहस्तत्राऽप्रामाण्यग्रह इत्येव मर्यादा ज्या-

त्युपहासानापत्तेश्च। वाक्यार्थबोधे जाते शुद्धार्थविषये प्रवृत्तिस्तु न भवति शुद्धार्थेऽप्रामाण्यग्रहादित्यन्यत्र विस्तरः।

प्रकृतान्वयबोधानुकूलपदाव्यवधानमासत्तिः। गिरिरग्निमानित्यादौ सा। अनासन्नं च गिरिर्भुक्तमग्निमान्देवदत्तेनेति। आसत्तिरपि मन्दबुद्धेरविलम्बेन शाब्दबोधे कारणम्। अमन्दबुद्धेस्त्वासत्त्यभावेऽपि पदार्थोपस्थितौ आकाङ्क्षादितोऽविलम्बेनैव बोधो भवतीति न बोधे तस्याः कारणत्वम्। अत एव न पदान्तसूत्रे भाष्ये। स्थाल्यामोदनं पचतीत्यादौ स्थाल्यामित्यस्यौदनपदेन व्यवधानेऽपि प्रकृतान्वयबोधानुकूलत्वादासन्नत्वमस्ति।

एतद्वाक्यं पदं वा एतदर्थबोधायोच्चारणीयमितीश्वरेच्छाया

---

यस्ती, यथा 'गेहे घटोऽस्ति' 'गेहे घटो नास्ती'ति परस्परविरुद्धे द्वाभ्यां प्रयुक्ते" इति लघुमञ्जूषायां विस्तरः। तदाह—इत्यन्यत्र विस्तर इति। तथा च योग्यताज्ञानस्य शाब्दबोधे कारणत्वं नास्तीति तत्त्वम्। इति योग्यतावादः।

अवसरसंगत्याऽऽसत्तिं निरूपयति—प्रकृतेति। मन्दबुद्धेरविलम्बेनेति—एतेन अनासन्नस्थले योजनावाक्यान्मन्दस्य बोधेऽपि विलम्बोऽस्त्येवेति सूचितम्। न च तत्र योजनावाक्यान्मन्दस्य यदि बोधस्तर्हि अस्मात् पदादयमर्थो बुद्ध इति अनुभवो विरुध्येतेति वाच्यम्, योजनावाक्यसम्पादनद्वारेण तस्यापि बोधे उपयोगेनाऽदोषात्। वस्तुतो योजनावाक्यकल्पना व्यर्था, तत्कल्पनाऽऽकाङ्क्षादिनाऽर्थयोजनाकल्पनस्यैवौचित्यात्। परन्तु मन्दस्य सा विलम्बेन, अमन्दस्य तु सा शीघ्रमिति तत्त्वम्। तथा चासत्तेर्न बोधे कारणत्वमिति भावस्तदाह—न बोध इति।

भाष्य इति—तत्र हि—"अनानुपूर्व्येणापि सन्निविष्टानां यथेष्टमभिसम्बन्धो भवति। तद्यथा—अनड्वाहमुदहारि, या त्वं हरसि शिरसा कुम्भं भगिनि, साचीनमभिधावन्तमद्राक्षी'रिति। तस्य यथेष्टमभिसम्बन्धो भवति—उदहारि भगिनि, या त्वं कुम्भं हरसि शिरसा, अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति" इत्युक्तम्। अत्राऽऽनुपूर्व्यम् पदान्तरेणाऽव्यवधानरूपाऽऽसत्तिरेव। एवञ्च आसत्त्यभावेऽपि अन्वयबोध इति स्पष्टतया भाष्यकथनेन आसत्तेरपि कारणत्वं निरस्तं वेदितव्यम्। इत्यासत्तिवादः।

अवसरसंगत्या तात्पर्यं निरूपयति—एतद्वाक्यमिति। ईश्वरेच्छा तात्पर्यं-

त्पर्य्यम्। अत एव सति तात्पर्य्ये सर्वे सर्वार्थवाचका इति शाब्दिकनये घटशब्दात्पटप्रत्ययो नेत्याद्युक्तम्। नानार्थस्थले लोके तात्पर्य्यन्तु एत त्पद वाक्य वा एतदर्थप्रत्ययाय मयोच्चार्य्यते इति प्रयोक्तुरिच्छारूप, तात्पर्य्यनियामक च लोके प्रकरणादिकमेव अतो भोजनप्रकरणे सैन्ध वमानयेत्युक्ते सैन्धवपदेन लवणप्रत्यय। युद्धाऽवसरेऽश्वप्रत्यय। वेद वाक्ये ऐश्वरतात्पर्य्यादर्थबोध। ननु प्रकरणादीना शक्तिनियामकत्वे शक्त्यैव निर्वाहे किन्तात्पर्य्येणेति चेन्न। अस्माच्छब्दादर्थद्वयविशेष्यको बोधो जायते अर्थद्वये शक्तिसत्त्वात्तात्पर्य्यं तु क्वेति न जानीम इत्यनु

मिति—इयमिच्छैव नैयायिकाऽभिमतसङ्केतोऽपि, पूर्वोक्तेश्वरेच्छात्मकसङ्केतताऽस्या मविशेषत्वलाभात्। तथा च इदमीश्वरेच्छात्मकतात्पर्यज्ञान 'घटशब्दो घटत्वाऽवच्छिन्ने शक्त' इतिशक्तिज्ञानजनकमेव, न तु तस्य शाब्दबोधे कारणत्वम्, शक्तिज्ञानेनाऽन्यथासिद्धत्वात्, कुलालजनकवत्। तत्तात्पर्यज्ञानञ्चास्माकं देवता महर्षिलोकवृद्धपरम्परातो भवतीत्युक्तपूर्वम् व्याकरणकोशादितश्चेति तत्त्वम्। अतएव = ऐश्वरतात्पर्यज्ञानस्य शक्तिग्राहकत्वादेव। शाब्दिकनयेति—शाब्दि
५ कानां मते स्फोटस्यैव वृत्त्याश्रयत्वात् तस्य ऐक्येन तस्यैकस्यैव वस्तुत सर्वार्थ वाचकत्वम्। नैयायिकादीना मते तु स्फोटाङ्गीकाराऽभावात् तत्तच्छब्दानां विधिध्येय तत्तदर्थवाचकत्वमिति भाव। नानार्थस्थले लोकेति—लोके नानार्थस्थले ऐश्वरतात्पर्यज्ञानादन्यदपि प्रयोक्तृतात्पर्यज्ञानमन्यतरार्थविषयकज्ञाने प्रामाण्यनिश्चयोपयोगितयाऽऽवश्यकम्। वेदे तु प्रयोक्तुरभावान्नेदमावश्यकमिति भाव। नानार्थत्वञ्च—नानाधर्माऽवच्छिन्न शक्यतानिरूपितवाचकताऽवच्छेदकैकधर्मवत्त्वम्। वेदवाक्ये चैश्वरेति—ऐश्वरतात्पर्यादिति = ऐश्वरतात्पर्यादेवेत्यर्थ। ऐश्वर तात्पर्यन्तु द्विविधम्, पूर्वोक्तसङ्केतरूप लोकवेदसाधारणमेकम्, नानार्थस्थलीयवेदमात्रविषयक द्वितीयम्। अन्यतरार्थविषयकज्ञाने प्रामाण्यनिश्चायकतया च द्वितीयोपयोग। अर्थबोध = शक्तिग्रह, तदर्थविषयकज्ञाने प्रामाण्यग्रहश्चेत्यर्थ।

प्रकरणादीनामिति—संयोगो विप्रयोगश्चेतिश्लोकोक्तानामित्यर्थ। शक्तिनियामकत्वे=एकतरार्थविषयकज्ञाने प्रामाण्यनिश्चायकत्व इत्यर्थ। बोधो जायते, तात्पर्य तु क्वेति न जानीम इति—एतेन तात्पर्यज्ञानमन्तरेणापि शाब्दबोधो

भ्रमनिरोधात्। अतएव च पय आनयेत्युक्तेऽप्रकरणज्ञस्य दुग्ध जलं वा आनेयमिति प्रश्न सङ्गच्छते। इत्याकाङ्क्षादिविचारः।

---

जायत इति न तात्पर्यज्ञानस्य शाब्दबोध कारणत्वमिति सूचितम्। इत्यनु भवेति—तथा च तात्पर्यज्ञान केवलमेकतरार्थविषयकज्ञाने प्रामाण्यनिश्चायकम्। प्रकरणादिज्ञानात्तात्पर्यज्ञान, तात्पर्यज्ञानादेकतरार्थविषयकज्ञाने प्रामाण्यनिश्चयरूप इति तदर्थं तात्पर्यज्ञानमावश्यकमेवेतिलभ्यतेऽनुभवानुरोधादिति तात्पर्यम्। अतएव च प्रयोक्तृतात्पर्यज्ञानस्यैकतरार्थज्ञाने प्रामाण्यनिश्चायकत्वमावश्यकत्वादेव। प्रश्न सङ्गच्छत इति—एतेनाऽपि तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वाऽभाव सूचि- पूर्वं सूच्यते।

अथाऽयं परिष्कार —तात्पर्यज्ञानस्य न शाब्दबोध कारणत्वम्, अ्यापा- नुभवप्रश्नानुरोधात्। शुकादिवाक्यात्, देवताप्रसादेन, पूर्वजन्मसंस्कारेण वा मूकभाजकस्य बोधमकाव्याद् वक्तृतात्पर्यव्यतिरेकनिश्चयेऽपि शाब्दबोधोदयेन तात्पर्य ज्ञानस्य बोधे हेतु त्वाऽसम्भवाच्च। तद्व्यतिरेकनिश्चयश्च वक्तुस्तदर्थाऽज्ञानात्। न चेश्वर तत्र तात्पर्यमितिचेन्न तस्य शाब्दबोधरूपफलीकोपयत्वेन बोधाव्याप्तुरेव स्यात्। स्पष्टञ्चेदं संग्रामसूत्रभाष्ये। तत्र हि—"अत्र हि—भवान् मार्ग पांशुलपादमप्रकरणज्ञमागत ब्रवीतु—'गोपालकमानय, कटजकमानय'ति, उभय गतिस्तस्य भवति, साधीयो वा यष्टिहस्तं गमिष्यति" इत्युक्तम्। अत्र 'उभयगति स्तस्य भवति' इत्यनेन तात्पर्यज्ञानाऽभावेऽपि शाब्दबोधप्रदर्शनाचात्तात्पर्यज्ञानस्या- कारणत्व स्पष्टमेव सूचितम्।

तात्पर्यनिर्णयोपयोगस्तु नानार्थस्थले अन्यतरार्थविषयकज्ञाने प्रामाण्यनिश्चय द्वारा प्रवृत्तौ। यथा 'गेहे सैन्धवमस्ति' इत्युक्ते तात्पर्यज्ञानमन्तरेण अश्वलवणो- भयविषयकं ज्ञानं जायते, प्रकरणादिना लवणविषयकज्ञाने तात्पर्यनिर्णयेन तद्वि षयकज्ञाने प्रामाण्यनिश्चयं तदितरविषयकज्ञानेऽप्रामाण्यबुद्धौ प्रतिनियतविषयां प्रवृत्तिर्भवति लोकस्येति। तथा तत्तच्छब्दार्थविषयकज्ञाने प्रामाण्यग्रहे तदग्रहे भ्रान्तोपरतज्ञानमपि तात्पर्यज्ञानमिव [illegible]। आसत्तिश्च—भ्रमप्रमाद विप्रलिप्सा शून्यत्वम्। तत्र भ्रम = वाक्यार्थभ्रमः, प्रमाद = अन्यथाशब्दभ्रम, विप्रलिप्सा = प्रतारणा = मदीयविरोधाभिलाषितदपिता। तथाऽन्यच्च—'अयं मत्तजिरदे द्रष्टा

अथ सकलशब्दमूलभूतत्वाद्धात्वर्थो निरूप्यते। तत्र फलानुकूलो यत्नसहितो व्यापारो धात्वर्थः। फलत्वं च तद्धात्वर्थजन्यत्वे सति कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वम्। विभागजन्य

---

सवान्, आप्तत्वविरोधिधर्मानधिकरणत्वात्, इत्यनुमानेन। वेदस्याऽकर्तृकत्वे तु अनाप्तोक्तत्वाऽभावज्ञानं हेतुवाच्यं। तच्च आप्तोक्तत्वज्ञानात् अनुपपत्तिनिर्णया इति मञ्जूषाया विस्तरः। एवञ्च तात्पर्यज्ञानस्याऽपि कारणत्वं खण्डितं वेदितव्यम्। इतितात्पर्यवादः।

स्फोटग्रन्थेन शब्दान् निरूप्य शाब्दबोधीयमुख्यकारणताऽवच्छेदकवृत्तिनिरूपणानन्तरं प्रसङ्गात्तदाश्रयनिरूपणं कृत्वा शाब्दबोधीयसहकारिकारणताऽवच्छेदकाकाङ्क्षादिनिरूपणेन विषयसिद्ध्या प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तिकालाऽवच्छेदेन सकलशब्दमूलभूतत्वेन हेतुनाऽवश्यवक्तव्यत्वरूपाऽवसरसंगत्या धात्वर्थनिरूपणं प्रतिजानीते—अथेति। सकलशब्दमूलेति—उणादीनां व्युत्पन्नत्वमिति मतेनेदम्। तत्रेति=निरूपणविषयीभूत इत्यर्थः। फलानुकूल इति—फले व्यापारे च खण्डशः शक्तिः, अनुकूलत्वञ्च आकाङ्क्षाभास्यः संसर्गः। यत्नसहित इति—यद्यपि "कर्मण्यायमभिप्रेती"ति सूत्रस्थोक्तभाष्यसम्मततया 'जानाति, इच्छति, यतते करोती'ति प्रक्रियया नान्तरीयकत्वात् क्रियाया यत्नपूर्वकत्वादेव पचतीत्यादौ यत्नस्याऽपि प्रतीतिनिर्वाहः, किञ्च मनोव्यापाररूपयत्नस्याऽपि व्यापार एवान्तर्भावेण व्यापारपदेनैव बोधसिद्धिस्तथापि यत्नस्य पृथगुक्तिः 'यत्न आख्यातार्थः' इति तार्किकमतस्य निःसारतां ध्वनयितुम्। रथो गच्छतीत्यादौ च धातोर्व्यापारमात्रे शक्तिः, रथादौ स्वकीययत्नस्याऽभावात्, परकीययत्नेनैव तस्य सञ्चारात्। इयं शक्तिः प्रसिद्धा, अप्रसिद्धा वेत्यन्यत्।

ननु "स्वरितञित" इत्यादौ फलं रूढ्या उद्देश्यम्, तादृशफलस्यैवात्र ग्रहणञ्चेत् पाकोद्देश्यीभूततुन्निवृत्तेरभावे अपाक्षीदित्यनापत्तिः, तस्मादत्र पारिभाषिकं फलत्वं किञ्चिद्वाच्यमित्याह—फलत्वञ्चेति।

कर्तृप्रत्ययेति—उपलक्षणमिदं, न तु विशेषणम्, अन्यथा कर्मप्रत्ययसमभिव्याहारे विक्लित्त्यादेः फलत्वानापत्तेः। विभागजन्येति—'वृक्षाद् भूमौ पतती'त्यकर्मकप्रयोगदर्शनाऽनुरोधेन विभागजन्यसंयोगरूपं पतधात्वर्थ आवश्यकः।

तथाहि फलविशेषणकव्यापारबोधे कर्तृप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणं, व्यापारविशेषणकफलबोधे कर्मप्रत्ययसमभिव्याहृतधातुजन्योपस्थितिः कारणमिति कार्यकारणभावद्वयकल्पने धात्वर्थद्वये शक्तिद्वयकल्पने धातोर्बोधजनकत्वसम्बन्धद्वयकल्पने चातिगौरवम्। तस्मात् फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले च धातूनां शक्तिः कर्तृकर्मार्थकतत्तत्प्रत्ययसमभिव्याहारश्च तत्तद्बोधे नियामक इत्याहुः।

यत्तु मीमांसकाः फलं धात्वर्थो व्यापारः प्रत्ययार्थ इति यदूचुः। तन्न। लः कर्मणीत्यादिसूत्रविरोधापत्तेः। नहि तेन व्यापारस्य प्रत्ययार्थता लभ्यते। किञ्च पचति पक्ष्यति पक्ष्यवानित्यादौ फूत्कारादिप्रतीतये तत्तदनेकप्रत्ययानां शक्तिकल्पनापेक्षयैकस्य धातोरेव शक्तिकल्पनोचिता।

---

त्यर्थः। तदेव दर्शयति तथाहीति। बोधजनकत्वसम्बन्धद्वयेति—बोधजनकत्वस्य विषयाऽसम्बन्धेऽनुपपत्त्या तत्तत्समभिव्याहारविशिष्टधातौ निरूपितवाच्यवाचकभावात्मकसम्बन्धद्वयकल्पनमवश्यकमित्याशयः। धातूनां शक्तिरिति प्राचां मतानुसारेणैवेयं युक्तिः, स्वमते तु वाच्यवाचकभावात्मकसम्बन्धस्यैव शक्तित्वे शक्तिद्वयकल्पनगौरवेणेदं गतार्थमिति बोध्यम्।

धातूनां शक्तिरिति—न च गुरुशक्यताऽवच्छेदकद्वयकल्पनप्रयुक्तं गौरवमिति वाच्यम्, प्रामाणिकत्वेनास्य गौरवस्याऽदोषावहत्वात्, धर्मो लघुरिति वैचित्र्यकल्पनादिति।

मीमांसका इति—व्याश्रयप्रतीतेर्लक्षणया, आक्षेपाद्, प्रथमान्तपदाद्वा तेन तेन व्यापारमात्रं प्रत्ययार्थः, व्यापारस्य च प्रत्ययेनैव लाभात् ... धात्वर्थ इति तेषामाशयः। ननु लः कर्मणीति सूत्रे कर्तृकर्मपदे कर्तृत्वकर्मत्वपरे ... दात्। तथा च व्यापाराश्रयस्य कर्तृपदार्थत्वेन 'प्रकृतिप्रत्ययौ प्रत्ययार्थं ...' इति सिद्धान्तेन कर्तृपदार्थविशेषणीभूतव्यापारस्य प्रत्ययार्थता लभ्यत एवेति चेन्न। किञ्चेति। अनेकप्रत्ययानाम्—एकत्वादीनामित्यर्थः।

ननु 'पठति' 'पचति' 'गच्छती'त्यादौ धातुभेदेनानेकधातूनां व्यापारे यदि

किञ्च फूत्कारादेः प्रत्ययार्थत्वे गच्छतीत्यादौ तत्प्रतीतिवारणाय तद्बोधे पचिसमभिव्याहारस्यापि कारणत्वकल्पनेऽतिगौरवम्। किञ्च सकर्मकाकर्मकव्यवहारोच्छेदापत्तिः। न च प्रत्ययार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वम्, तन्मते तत्समानाधिकरणफलवाचकत्वमकर्मकत्वं च प्रत्ययार्थव्यापाराश्रयत्वं कर्तृत्वम्, घटं भावयतीत्यादौ णिजर्थव्यापारव्यधिकरणफलाश्रयत्वेन घटादेः कर्मत्वमिति वाच्यम्। अभिधानानभि

---

कल्पनायामेव गौरवतरं प्रत्ययापेक्षया धातूनामाधिक्यादित्यत आह—किञ्चेति। फूत्कारादेरिति—फूत्कारत्वाधिश्रयणत्वादिविशेषधर्मपुरस्कारेणैव बोधस्यानुभविकत्वात् पचतीत्यादौ प्रत्ययेन तथाबोधस्येष्टत्वे शक्तताऽवच्छेदकैक्यात् गच्छतीत्यादावपि तादृग्विशेषरूपप्रतीत्यापत्तिरिति तद्वारणाय तद्बोधे पचिसमभिव्याहारस्य नियामकत्वकल्पनेऽतिगौरवमिति भावः।

ननु व्यापारस्य धात्वर्थत्वमतेऽपि धातुत्वाऽवच्छिन्नस्य व्यापारत्वाऽवच्छिन्ने शक्तिरितिज्ञानमात्रेण तादृगनुभवसिद्धविशेषधर्मप्रकारकबोधस्याऽनिर्वाहेण तत्तद्धातूनामेव विशेषधर्मप्रकारकबोधे कारणत्वं कल्पनीयमिति तुल्यमेव गौरवमित्यस्वरसेनाह—किञ्च सकर्मकेति। उच्छेदेति—'स्वार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वम्' 'स्वार्थव्यापारसमानाधिकरणफलवाचकत्वमकर्मकत्वम्' इतिलक्षणलक्षितव्यवहारयोर्व्यापारस्य धात्वर्थत्वाऽभावेऽसिद्धिरितिभावः।

ननु व्यापारस्य धात्वर्थत्वाऽभावे धात्वर्थव्यापाराश्रयत्वरूपकर्तृत्वाऽसिद्धिरितिचेदाह—प्रत्ययार्थेति।

ननु प्रत्ययार्थव्यापाराश्रयस्य कर्तृपदार्थत्वे 'घटं भावयती'त्याद्यसिद्धिः, णिजर्थप्रेरणव्यापारस्य घटादावसम्भवेन कर्तृत्वाऽभावे गत्यादिसूत्रेण कर्मत्वाऽसिद्धेरित्यत आह—घटं भावयतीति। कर्तुरीप्सितेति सिद्धिः स्यादितिभावः। चिन्त्यमिदम्, पाचयति देवदत्तो यज्ञदत्तेनेत्यादौ गत्यादिनियमाऽप्राप्त्या कर्तुरिति कर्मत्वाऽऽपत्तेः, कर्तरि तृतीयाऽनापत्तेश्च। स्वरूपव्याक्रियैव परक्रियेतिन्यायेन ग्रन्थकृता नैतन्निराकृतमिति बोध्यम्।

अभिधानानभिधानेति—तिङ आश्रयार्थकत्वाऽभावे "तिङ्कृत्तद्धितसमासैः परिसङ्ख्यानमि"ति वार्तिकोक्तपरिगणनरीत्या आश्रयात्मकयोः कर्तृकर्मणोस्तिङाऽभिधानं न स्यादिति भावः।

धानव्यवस्थोच्छेदापत्तेः । न च व्यापारेणाऽऽश्रयाऽऽक्षेपात्कर्तुरभिधानम् । कर्माख्याते च प्रधानेन फलेन स्वाश्रयाक्षेपात्कर्मणोऽभिधानमिति वाच्यम् । जातिशक्तिवादे जात्याक्षिप्तव्यक्तेरिवाश्रयप्राधान्यापत्तौ "क्रियाप्रधानमाख्यातम्" इति यास्कवचोविरोधापत्तेः । किञ्च फलस्य धातुना तदाश्रयस्य चाक्षेपेणैव लाभसम्भवेन न कर्मणीत्यस्य वैयर्थ्यापत्तेः । कर्मकर्तृकृता कारकभावनोभयवाचकत्वे गौरवाच्च । किञ्च भावविहितघञादीनां व्यापारावाचकत्वे ग्रामो गमनवानित्याद्यापत्तिः तद्वाचकत्वे तु तेनापि स्वाश्रयाक्षेपे कर्तुरभिधानापत्तिः । किञ्च गुरुः शिष्याभ्यां पाचयतीत्यादौ हेतुमति चेति सूत्रबलात् प्रयोजकव्यापारस्य णिजर्थत्वे स्थिते प्रयोज्यव्यापार आख्यातार्थो वाच्यः । एवञ्च त्वद्रीत्या स्ववाच्यकारकाक्षेपे आख्यातार्थव्यापारेऽन्वयिन्येवाऽन्वयाच्छिष्याभ्यामिति द्विवचनानापत्तिः । पाचयतीत्येकवचनानापत्तिश्च । गुरोरनभिधानेन तत्र प्रथमाया अनापत्तेश्च शिष्ययोस्तदापत्तेश्चेत्यन्यत्र विस्तरः ।

---

आक्षेपात्कर्तुरिति—अभिधानञ्च न शक्तिग्रहजन्योपस्थितिविषयत्वम्, किन्तु बोधविषयत्वमात्रम् । अनुमितिरूपाक्षेपविषयत्वेऽपि तत्त्वमस्त्येवेति तद्भावः ।

ननु जातिशक्तिवादे 'घटो नष्टः' इतिव्यवहारबलेन आक्षिप्ताश्रयस्य प्राधान्येऽपि प्रकृते तस्य प्राधान्ये मानाभावः, प्रत्युत यास्कवचोऽनुरोधेन व्यापारस्य गौणत्वमेव स्यादित्यत आह—किञ्च फलस्येति । गौरवाच्चेति—वैयाकरणानां केवलाश्रयवाचकत्वमितिलाघवम् । कृतां कारकभावनोभयवाचकत्वं तेषां मते भावनावाचकत्वमिति मीमांसकानां वैषम्यं निर्मूलमपीत्युपहासोऽप्यत्र व्यज्यते ।

ननु घञामपि भावनावाचकत्वमेव, आश्रयस्य चाक्षेपेणैव प्रतीतिस्तथापीष्टमिति चेदाह—किञ्च भावेति । ग्रामो गमनवानिति—ग्रामः कर्मकारकत्वेन ... इति भावः । अभिधानापत्तिरिति—तथा च चैत्रस्य गमनमित्यादावनभिहितत्वप्रयुक्तषष्ठ्यनापत्तिः प्रथमापत्तिश्चेति भावः ।

व्यापारान्वयिन्येवान्वयेति—एकत्वसंख्यायाः ... शिष्ययोरैकधर्म्यान्वयः स्यादिति भावः । गुरोरनभिधानेनेति—णिजर्थ... प्रयोजकव्यापाराश्रयस्य गुरुत्वभावेनाभिधानेऽपि शिष्ययोरनभिधानमेव, शिष्ययोः

सर्वकारकान्वयितावच्छेदकधर्मवती क्रिया । तदाह—
यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥
गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।

---

तादृशव्यापाराश्रयत्वादिति भावः । तदाह—शिष्यश्च दादिति ।

प्रसङ्गात्क्रियां निरूपयति—सर्वकारकेति । *कारकाऽन्वयिताऽवच्छेदकधर्मवत्त्वं* क्रियात्वमित्येतावतैव सिद्धे सर्वपदं 'सर्वेषामेव कारकाणां क्रियायामेवान्वयः' इति स्फुटं बोधयितुम्, अधिकरणस्यापि स्वाश्रयद्वारा तत्रान्वयोऽस्त्येवेति भावः । कारकान्वयित्वञ्च कारकनिष्ठविषयतानिरूपितविषयताश्रयत्वम् । भाष्ये 'करोति क्रियां निर्वर्तयती'ति व्युत्पत्तिप्रदर्शनात् कारकस्य क्रियाजनकत्वरूपतया जन्यजनकयोः परस्परसाकाङ्क्षत्वेन कारकक्रिययोः परस्परान्वयस्यैवौचित्यमित्यन्यत्र विस्तरः । अत्र क्रिया फलव्यापारोभयात्मिका इति न व्यापारलक्षणेनास्यालक्षणस्य गतार्थत्वमिति बोद्धव्यम् । कारकान्वयिताऽवच्छेदकधर्मः फलत्वव्यापारत्वान्यतररूपस्तद्वती क्रियेत्यर्थः । अत्रैव लक्षणे हरिग्रन्थं प्रमाणयति—यावत्सिद्धमिति । अत्र 'क्रिये'-त्यनन्तरं 'यावत्सिद्धम्' इत्यतः पूर्वं 'तदाहे'ति पाठो दृश्यते, सचाऽपपाठः, हरिग्रन्थादितिवक्ष्यमाणेनाऽनन्वयात् । अतएव मञ्जूषापुस्तके स नास्ति ।

**सिद्धं**=निष्पन्नम्, **असिद्धम**निष्पन्नं वा **यावत्**=यत्परिमाणं **साध्यत्वेनाभिधीयते** 'साध्यम्' इति प्रतीयते, **सा** साध्यत्वेनाभिधीयमाना, **आश्रितक्रमरूपत्वात्** आश्रितः क्रमः पौर्वापर्यं येन तादृशं रूपं स्वरूपं यस्याः सा आश्रितक्रमरूपा तस्याः भावस्तस्मात् गृहीतपौर्वापर्यत्वात् **'क्रिया'** इति **अभिधीयते**=कथ्यते इत्यर्थः । अत्र साध्येतिनाम्नाऽतीतकालिकक्रियाया अपाक्षीदित्यादौ साध्यत्वं नास्तीति शङ्कावारणाय सिद्धमित्युक्तम्, सिद्धमसिद्धं सर्वमपि साध्यत्वेन प्रतीयते, न केवलमसिद्धमेव, प्रत्यययोगेन तत्र सिद्धत्वप्रतीतावपि केवलं धातुतस्तस्याः साध्यत्वेनैव प्रत्ययादिति भावः ।

आश्रितक्रमरूपत्वमेव विशदीकरोति—**गुणभूतैरिति** । **गुणभूतैः**=स्वसमूहं प्रति गुणत्वमापन्नैः, **अवयवैः**=समूहारम्भकैः फूत्कारत्वादितत्तद्रूपेण भास

बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥

इति भूवादिसूत्रस्थभाष्यार्थप्रतिपादकहरिग्रन्थात्। क्रमजन्मनां व्यापाराणां समूहं प्रति गुणभूतैरवयवैर्युक्तः सङ्कलनात्मिकयैकत्वबुद्ध्या प्रकल्पिताऽभेदरूपः समूहः क्रियेति व्यवह्रियत इति द्वितीयकारिकार्थः। अत्राऽवयवाश्रयं पौर्वापर्यं समुदायाश्रयमेकत्वम्। क्षणनश्वराणां व्यापाराणां वस्तुभूतसमुदायाभावात् बुद्ध्येत्युक्तम्। पचति पक्ष्यतीत्यादावपि अपाक्षीदित्यादौ सिद्धमसिद्धं वा साध्यत्वेनाभिधीयमानं क्रिया। आश्रितेति योगदर्शनं कृतम् अवयवानां क्रमेणोत्पत्त्या। अतएवाश्रितक्रमरूपा क्रियेत्यादिप्रथमकारिकार्थः। एकैकावयवेऽपि समूहरूपारोपादधिश्रयणकालेऽपि पचतीति व्यवहारः। तदुक्तम्—

एकदेशे समूहे वा व्यापाराणां पचादयः।
स्वभावतः प्रवर्तन्ते तुल्यरूपं समाश्रिताः॥ इति।

---

मानवान्तुविशेषैः, (उपलक्षित) क्रमजन्मनाम् = क्रमिकोत्पत्तिमतां फूत्कारादीनां, (समूह इत्यन्वयीदम्) बुद्ध्या = संकलनात्मकान्तःकरणवृत्त्या, प्रकल्पिताऽभेदः = प्रकल्पितः प्रतीतिविषयीकृतः अभेदः एकत्वम् (अवयवानामेव) यत्र तादृशः समूहः (इदं क्रमजन्मनामित्यन्वयि) 'क्रिया' इति व्यपदिश्यते व्यवह्रियते आचार्यैरिति शेषः इत्यर्थः। वस्तुभूतसमुदायाऽभावात् [illegible] निरूपणमशक्यत्वात् उपधानां वर्णानामिवेति भावः। क्रियेत्यभिधाने हेतुमाह— आश्रितेतियोगदर्शनमिति। चिन्त्यमिदम्, "कृञः श च" इति सूत्रेण कृधातो-र्भावे निष्पन्नस्य 'क्रिया' शब्दस्य अवयवार्थनिरूपणशक्तिरूपयोगेन क्रमपरत्वस्याऽलाभात्। अथवा क्रमवतीत्यर्थे क्रमशब्दात्पृषोदरादीनीति सूत्रेण क्रिया शब्दस्य साधने स्यादिति। इदमत्राऽवधेयम्—यत्र च न प्रतिपाद्यः व्यापारस्तत्र स्फटिकोदकवोधा, पौर्वापर्यविरोधो वा। एकस्याऽपि [illegible] गतपौर्वापर्यापेक्षा क्रियात्वेन भानम्। अतएव कर्मकर्तरि पच्यते ओदनः स्वयमेवेत्यादौ [illegible] प्राप्नुयादिति, [illegible] इति नियमस्य संगतिः। अन्यथा कर्मकर्तृत्वस्य [illegible] स्यादिति वदन्ति। समूहरूपारोपादिति—आरोपे च प्रतीतिरेव मानम्। न

अत्र केचित्--सिद्धत्व क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकवैजात्यवत्त्वे सति कारकत्वेन क्रियान्वयित्वे सति कारकान्तरान्वयायोग्यत्वम्। साध्यत्वं च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदक सत् कारकान्तरान्वययोग्यतावच्छेदकरूपवत्त्वम्। हिरुगाद्यव्ययाना साध्यत्वाभावेऽपि क्रियावाचकत्वव्यवहारस्तु क्रियामात्रविशेषणत्वात्। तत्र सिद्धत्व पाक इत्यादौ घञादिवाच्यम्। साध्यत्व तु सर्वत्रैव धातुप्रतिपाद्यम्।

ननु हरिं नमेच्चेत्सुख यायात् इत्यत्रापि क्रियान्तराकाङ्क्षत्वेन सिद्धत्वमस्ति इति चेन्न। चेच्छब्दसमभिव्याहारेणाकाङ्क्षोत्थापनात् इत्याहु।

---

च तथा सति गौणार्थत्वाऽऽपत्तिरिति वाच्यम्, तदतिरिक्तमुख्यार्थाऽप्रसिद्धया तस्य गौणत्वाऽभावात्, यस्य हि मुख्योऽन्योऽर्थस्तत्रैवैतस्य गौणत्वात्।

ननु 'साध्यत्वेनाऽभिधीयमान क्रियेत्युक्त, तत्र साध्यत्व किंस्वरूपमिति जिज्ञासायामाह—अत्र केचिदिति। अत्र = साध्यत्वप्रसङ्ग इत्यर्थ। साध्यत्व वैपरीत्यपरिचयार्थमाह—सिद्धत्वमित्यादि—अत्र लक्षणे विशेष्यप्रयोगमात्रेण निर्वाहेऽपि सत्यन्तविशेषणदलद्वयं स्वरूपपरिचायकमात्र बोध्यम्। क्रियाऽन्तरेत्यन्तरपदेन क्रियात्वमपि लक्षणघटकमिति सूच्यते, अन्या क्रिया क्रियान्तरम्, कस्या अन्या, स्वस्या इतिव्युत्पत्ते। यद्यपि द्रव्यादावपि सिद्धत्वमिष्ट तथाऽपि अत्र सिद्धक्रियालक्षणमेव चिकीर्षितम्। वस्तुतस्तु अन्तरपदमधिकमेवात्र, द्रव्यादेरेव सिद्धत्वस्येष्टत्वात्। घञादिवाच्यक्रियायास्तु सिद्धवत्त्वमेव, "कृदभिहितो भावो द्रव्यवत्प्रकाशते" इति भाष्येण तथैव बोधनात्। अत एव मञ्जूषायामन्तर शब्दरहित एव पाठ। साध्यत्वञ्च क्रियान्तरेति—अत्र अन्तरपद युक्तमेव, क्रियाया एव साध्यत्वेन बोधात्।

1 ननु हिरुगाद्यर्थस्य क्रियान्तराऽऽकाङ्क्षादर्शनेन साध्यत्वाऽभावे साध्यात्मक क्रियावाचकत्वव्यवहारोऽनुपपन्न इत्यत आह—हिरुगादीति। तत्र = तयोर्मध्ये। क्रियाया अपि इति—क्रियाया धातुवाच्याया अपीत्यर्थः।

ननु साध्यत्व यदि क्रियान्तराकाङ्क्षाऽनुत्थापकताऽवच्छेदक तर्हि 'पचति भवती'त्यादि भाष्योक्तवाक्ये 'भुक्त्वा गच्छती'त्यादौ च भवतिभुक्त्वेत्यादीनां क्रियाऽन्तराकाङ्क्षादर्शनेन कारकाऽन्वयानापत्तिः धातुत्वाऽनापत्तिश्चेत्यत सिद्धान्तमाह—

वस्तुतस्तु शाब्दशास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम्। तदनन्वय्यर्थकत्वमकर्मकत्वम्। तेन 'अध्यासिता भूमयः' इत्यादिसिद्धिः। अन्वयश्च पृथगुद्बुद्धेन संसर्गरूपः। अन्वयपदस्य तत्रैव व्युत्पत्तेः। तेन जीवतीत्यादौ न दोषः। तत्र प्राणादिरूपकर्मणो धारणार्थधात्वर्थान्तर्भूतत्वबोधात् इति 'सुप आत्मनः' इति सूत्रे भाष्ये स्पष्टम्। अधिशीङ्स्थेत्यनेन भूमय इत्याधारस्य कर्मत्वम्। जानातेर्विषयतया ज्ञानं फलम्। आत्ममनःसंयोगो व्यापारः। अतएव मनो जानातीत्युपपद्यते। आत्मान्तःकरणं मनोऽपि तद्वृत्तिविशेषरूपम्। आत्मा आत्मानं जानातीत्यादौ अन्तःकरणावच्छिन्नः कर्ता शरीरावच्छिन्नः कर्मेति कर्मवत्सूत्रे भाष्ये स्पष्टम्।

---

ननु देशकालादिकर्मकधातुषु अधिशीङादिषु चेदकसकर्मकत्वाऽव्याप्तिः फलव्यधिकरणव्यापारवाचकत्वाऽभावात्, तथा च तेभ्यः कर्मणि लकारो न स्यात्। अकर्मकत्वाऽनुगमार्थं तादृग्वैशिष्ट्यनिवेशे गौरवञ्चेति सिद्धान्तमाह—वस्तुतस्तु शब्देति। पृथगुद्बुद्धेन = पृथगुपस्थितेन। व्युत्पत्तेः = योगशक्तेरित्यर्थः। सुप आत्मन इति सूत्रे भाष्ये इति—तत्र हि "अथाऽस्य क्यजन्तस्य कानि साधनानि भवन्ति? भावः कर्ता च। अथ कर्म? नाऽस्ति कर्म। ननु चायमिपि सकर्मको यस्याऽयमर्थे क्यज्विधीयते? अभिहितं तत्कर्मान्तर्भूतं धात्वर्थं सम्पन्नो न चेदानीमन्यत्कर्माऽस्ति येन सकर्मकः स्यात्। कथं तर्ह्ययं सकर्मको भवति—अपुत्रं पुत्रमिवाचरति पुत्रीयति माणवकमिति? अस्त्यत्र विशेषो—द्वे ह्यत्र कर्मणी उपमानकर्मोपमेयकर्म च। उपमानकर्माऽन्तर्भूतम्। उपमेयेन कर्मणा सकर्मको भवति।" इत्युक्तम्।

वक्ष्यमाणनैयायिकमतं कथयन्नाह—जानातेरिति। फलताऽवच्छेदकसम्बन्धमाह—विषयतयेति। तृतीयार्थोऽवच्छिन्नत्वम्-विषयतासम्बन्धाऽवच्छिन्नज्ञानाऽनुकूलव्यापारो ज्ञाधात्वर्थ इति भावः। आत्ममनःसंयोग इति-आत्माऽश्वचक्षुरादीन्द्रियाणामप्युपलक्षणम्—"मनसा संयुक्तानीन्द्रियाण्युपलब्धौ कारणानि भवन्ति" इति "लिट्" सूत्रे भाष्योक्तेरित्यन्यत्र विस्तरः।

कर्मवत्सूत्रे भाष्ये इति—तत्र हि "सिद्धन्तु प्राकृतकर्मत्वात्। सिद्धमेतत्। कथम्? प्राकृतकर्मत्वात्, प्राकृतमेवैतत्कर्म। यथा कटं करोति, शकटं करोतीति।

भावक, यथा पश्यति घट, ग्राम गच्छति,इच्छतीत्यादौ। तत्र विषयतासमवायाभ्या ज्ञानमुभयनिष्ठ सयोगश्चोभयनिष्ठ । एव इच्छापि, नहि विषयतावरणभङ्गावेवम्। यत्र कर्तृवृत्तिकर्मस्थफल सकर्मकस्थभावक, यथा भिनत्तीत्यादौ। नहि द्विधाभवनादि कथमपि कर्तृनिष्ठमिति हेलाराज । तथा चावरणभङ्गस्य विषयतायाश्च कर्ममात्रनिष्ठत्वाज्जानातेरपि कर्मस्थक्रियकत्वापत्तिरित्यलम्। इच्छतेरिच्छानुकूल ज्ञानमर्थ । अतीतानागतयोरपि बुद्ध्युपारोहात् फलशालित्वम्। पततिर्गमिवत्सकर्मक । नरक पतित इत्यादिप्रयोगात्। विभागजन्यसयोगमात्रपरत्वेऽकर्मक इति। कृञ उत्पत्त्यधिक

---

शक्त्या उच्यते इत्यर्थस्तु न, कालिकादिसम्बन्धेन पच्यादौ फलाश्रयस्य कर्मत्ववारणाय फलताऽवच्छेदकसम्बन्धेन फलाश्रयस्य कर्मत्वसिद्धये धातूनां तत्तत्सम्बन्धविशिष्ट एव फले शक्तिस्वीकारेण पश्यतीत्यादावपि विषयतासम्बन्धाऽवच्छिन्नफलस्यैव शक्त्या बोधनेन फलस्य कर्ममात्रवृत्तित्वेनाऽतिप्रसङ्गात्। यथाकथञ्चिद्बोधविषयत्वे तु शक्त्या फलस्य कर्ममात्रनिष्ठत्वबोधेऽपि तत्र फलस्य समवायरूपवृत्तिनियामकान्तरसम्बन्धेनाऽन्यत्रापि सत्त्वान्न दोष फलताऽवच्छेदकसम्बन्धस्याऽऽकाङ्क्षाभाष्यत्वे तु यथाश्रुतार्थ एव रमणीय । उभयनिष्ठम्=कर्तृकर्मनिष्ठमित्यर्थ । नहि विषयतेति—विषयताया आवरणभङ्गस्य च कर्ममात्रनिष्ठत्वमितिभाव । प्रसङ्गादाह—इच्छतेरिति। अत्र ज्ञान व्यापाररूपम्।

प्रसङ्गादेवाह—पततिरिति । नरक पतित इति—विभागजन्याऽधोदेशानुयोगिकसयोगानुकूलव्यापाररूपपतधात्वर्थप्रयोज्यसयोगरूपफलाश्रयत्वेन कर्तुरीप्सितेति नरकस्य कर्मसंज्ञया कर्मसञ्ज्ञकार्थाऽन्वय्यर्थकत्वेन पतधातो सकर्मकत्वमिति बोध्यम्। अत एव द्वितीयाश्रितेति पतितशब्दयोगे समासविधान सङ्गच्छते। विभागजन्येति—वृक्षमजहत्यपि भूमिं स्पृशति पर्णे वृक्षात्पर्णं पततीत्यप्रयोगात्तत्र धात्वर्थे विभागजन्यत्वप्रवेशस्याऽऽवश्यकत्वादिति भाव । सयोगमात्रेति । अत्र मात्रपदेन तदनुकूलव्यापारस्य व्यवच्छेद अत्र सयोग एव व्यापार इति भाव । अकर्मक इति—फलाशाऽभावेन अस्त्यादिवत् कर्मणोऽभावात्तदनन्वय्यर्थकत्वेनाऽकर्मकत्वमिति बोध्यम्। शिष्टप्रयोगदर्शनमत्र मूलम् । प्रसङ्गादाह—कृञ इति। उत्पत्त्यधिकरणेति—अस्य ग्रन्थस्य नैयायिकमतमर्दनपरत्वेन

यत्तु आवरणभङ्गो विषयता वा फलम्, व्यापारस्तु ज्ञानमेवेति। तन्न। कर्मस्थक्रियकत्वापत्तेः। तद्व्यवस्था चेत्थमुक्ता हरिणा—

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता॥ इति।

अस्यार्थः—यत्र कर्मणि कर्तरि वा क्रियाकृतो विशेषः कश्चिद् दृश्यते तत्र क्रिया व्यवस्थितेत्युच्यते। नन्वेवं पच्यादिकर्तर्यपि श्रमादिरूपविशेषस्य दर्शनादिदमयुक्तम्। किञ्च चिन्तयति पश्यतीत्यादीनां कर्तृस्थभावकत्वानुपपत्तिः। कर्तरि क्रियाकृतविशेषाभावात्। अत आह—अन्येषामिति। मत इति शेषः। यत्र कर्तृकर्मसाधारणरूपं फलं शब्देन प्रतिपाद्यते, स कर्तृस्थ

---

कथं पुनर्ज्ञायते—प्राकृतमेवैतत्कर्मेति? आत्मसंयोगेऽकर्मकत्वं कर्मदर्शनात्। आत्मसंयोगेऽकर्मकर्तुः कर्म दृश्यते। क्व? हन्त्यात्मानं, हन्यत आत्मेति। विषम उपन्यासः। हन्त्यात्मानमिति कर्म दृश्यते, कर्ता न दृश्यते। आत्मना हन्यत इति च कर्ता दृश्यते कर्म न दृश्यते। पदलोपश्च। पदलोपश्चात्र द्रष्टव्यः। हन्त्यात्मानमात्मा, आत्मना हन्यत आत्मेति। कः पुनरात्मानं हन्ति, को वाऽऽत्मना हन्यते? द्वावात्मानौ, अन्तरात्मा शरीरात्मा च। अन्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवति, शरीरात्मा तत्कर्म करोति येनान्तरात्मा सुखदुःखे अनुभवति।" इत्युक्तम्।

नैयायिकमतमनूद्य खण्डयति—यत्तु इति। कर्मस्थक्रियकत्वापत्तेरिति—'ज्ञायते घटः स्वयमेवे'त्यापत्तेरिति भावः। तदापत्तिमेव विशदयति—तद्व्यवस्था चेति। श्लोकस्थयत्रेत्यस्य विवरणमाह—कर्मणि कर्तरि वा इति। तत्र=कर्मणि कर्तरि वेत्यर्थः। अन्येषामिति मतोत्थितौ बीजमाह—नन्वेवमिति। इदमयुक्तम् इति—पच्यते ओदन इत्यस्याऽसिद्धेरिति भावः। कर्तृस्थभावकत्वाऽनुपपत्तिरिति—तथा च कर्तृस्थभावकत्वेन भाष्यवार्तिकव्यवहाराऽसङ्गतिरिति भावः। अन्येषामिति=सिद्धान्तिनामित्यर्थः। इदमेव सर्वं सुष्ठु, उक्तयुक्तेरिति तत्त्वम्। शब्दैरेवेति श्लोके धात्वात्मकशब्दैरेवेत्यर्थः। तस्य भावमाह—यत्र कर्तृकर्मसाधारणेति। शब्देन=धातुनेत्यर्थः। श्लोके शब्दैरेवेत्यत्र एवशब्देन कर्तृकर्मकृतविशेषदर्शनस्य व्यवच्छेदः। प्रतिपाद्यते=ज्ञाप्यत इत्यर्थः।

भावक, यथा पश्यति घट, ग्राम गच्छति, हसतीत्यादौ। तत्र विषयतासम वायाभ्या ज्ञानमुभयनिष्ठ सयोगश्चोभयनिष्ठ । एव हसोऽपि, नहि विषयता वरणभङ्गावेवम्। यत्र कर्तृवृत्तिकर्मस्थफल सकर्मस्थभावक, यथा भिनत्तीत्यादौ। नहि द्विधाभवनादि कथमपि कर्तृनिष्ठमिति हेलाराज । तथा चावरणभङ्गस्य विषयतायाश्च कर्ममात्रनिष्ठत्वाज्ज्ञानातेरपि कर्मस्थक्रियत्वापत्तिरित्यलम्। इच्छतेरिच्छानुकूल ज्ञानमर्थं । अतीतानागतयोरपि युयुत्सुपारोहात् फलशालित्वम्। पतिर्गमिवत्सकर्मक । नरक पतित इत्यादिप्रयोगात्। विभागजन्यसयोगमात्रपरत्वेऽकर्मक इति। कृत्र उत्पत्तिव्यधिक

---

शक्त्या उच्यते इत्यर्थस्तु न, कालिकादिसम्बन्धेन पत्न्यादौ फलाश्रयस्य कर्मत्व वारणाय फलतावच्छेदकसम्बन्धेन फलाश्रयस्य कर्मत्वसिद्धये धातुना तत्तत्सम्बन्ध विशिष्ट एव फले शक्तिस्वीकारेण पश्यतीत्यादावपि विषयतासम्बन्धावच्छिन्न फलस्यैव शक्त्या बोधनेन फलस्य कर्ममात्रवृत्तित्वेनाऽतिप्रसङ्गात्। यथाकथञ्चिद्दोषविषयत्वे तु शक्त्या फलस्य कर्ममात्रनिष्ठत्वबोधेऽपि तत्र फलस्य समवायरूप वृत्तिनियामकान्तरसम्बन्धेनाऽन्यत्रापि सत्त्वान्न दोष फलतावच्छेदकसम्बन्धस्याऽऽकाङ्क्षामाप्यत्वे ▮ यथाश्रुतार्थ एव रमणीय । उभयनिष्ठम्=कर्तृकर्मनिष्ठमित्यर्थ । नहि विषयतेति—विषयताया आवरणभङ्गस्य च कर्ममात्रनिष्ठत्वमितिभाव । प्रसङ्गादाह—इच्छतेरिति। अत्र ज्ञान व्यापाररूपम्।

प्रसङ्गादेवाह—पतिरिति। नरक पतित इति—विभागजन्याऽधोदेशानुयोगिकसंयोगानुकूलव्यापाररूपपतधात्वर्थप्रयोज्यसंयोगरूपफलाश्रयत्वेन कर्तुरीप्सिततेति नरकस्य कर्मसंज्ञया कर्मसञ्ज्ञकार्थाऽन्वय्यर्थकत्वेन पतधातो सकर्मकत्वमिति बोध्यम्। अत एव द्वितीयाश्रितेति पतितशब्दयोगे समाससंविधान सङ्गच्छते। विभागजन्येति—वृक्षमजहदपि भूमि स्पृशति पर्णे वृक्षात्पर्णं पततीत्यप्रयोगात्तद्धात्वर्थे विभागजन्यत्वप्रवेशस्याऽऽवश्यकत्वादिति भाव । सयोगमात्रेति । अत्र मात्रपदेन तदनुकूलव्यापारस्य व्यवच्छेद अत्र सयोग एव व्यापार इति भाव । अकर्मक इति—फलांशाऽभावेन अस्त्यादिवत् कर्मणोऽभावाच्चदनन्वय्यर्थकत्वेनाऽकर्मकत्वमिति बोध्यम्। शिष्टप्रयोगदर्शनमत्र मूलम् । प्रसङ्गादाह—कृञ इति। उत्पत्त्यधिकरणेति—अस्य ग्रन्थस्य नैयायिकमतमर्दनपरत्वेन

पच्यते देवदत्ताय देहीत्यादौ शतृशानजादीनामपि तिबादिवल्लादेशाविशेषेण तेभ्यः कृतिमात्रबोधापत्तेश्च। नचेष्टापत्तिराश्रयाश्रयिभावेन कर्मणि सम्प्रदाने च कृतेरन्वयात् इति वाच्यम्। नामार्थयोरभेदान्वयो व्युत्पन्न इति व्युत्पत्तिभङ्गापत्तेः। ननु फलमुखगौरवं न दोषाय इति न्यायेन शत्रादीनां कर्तरि शक्तिः तिबादीनां कृतावेव इति चेन्न। स्थान्येव वाचको लाघवात् आदेशानां बहुत्वेन तेषां वाचकत्वे गौरवमिति हि तव मतम्। एवं च तिबादीनां शत्रादीनां च स्थान्यर्थस्मारकतया लिपिस्थानीयत्वे बोधकस्तु लकार एव। स च शत्राद्यन्ते कर्तरि शक्तस्तिबाद्यन्ते कथं कृतिं बोधयेत्। 'अन्याय्यश्चानेकार्थत्वम्' इति न्यायात्।

ननु लः कर्मणीति सूत्रे कर्तृकर्मपदे भावप्रधाने, कर्तृत्वं कृतिः कर्मत्वं फलं, तयोः शक्तौ सूत्रस्वरसः। कर्मप्रत्ययान्ते पच्यते ओदनो देवदत्तेनेत्यादौ देवदत्तनिष्ठकृतिजन्यव्यापारजन्यविक्लित्तिमान् ओदन इति बोधः। कर्तरि कृदिति सूत्रे तु कर्तरीति पदस्य धर्मिप्रधानत्वात् कृत्याश्रये शत्रादीनां शक्तिरिति चेत्, कर्तरि कृदितिसूत्रे यत्कर्तृग्रहणं तस्यैव लः कर्मणीति सूत्रे चकारानुकृष्टत्वेन भावप्रधानत्वे सूत्रस्वरसाभावात् शत्रादीनां 'स्थान्यथा

---

प्यत्ते तदभावः स्यादिति भावः। लादेशाऽविशेषेणेति—स्थान्यर्थेनैव निराऽऽकाङ्क्षत्वात् शतृशानजादीनामपि "लः कर्मणी"त्यनेनैव शक्तिनैव शक्तिग्रहो न तु "कर्तरि कृत्" इत्यनेन, आकाङ्क्षितविधानं न्याय्यम् इति न्यायादिति भावः। नामार्थयोरिति—इदं प्रतिज्ञातार्थनिवेदनम्। व्युत्पत्तेः स्वरूपं तु—नामार्थयोर्भेदेन साक्षादन्वयोऽव्युत्पन्न इति। एवं मूलञ्च—भेदसम्बन्धाऽवच्छिन्ननामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंसर्गेण शाब्दबुद्धित्वाऽवच्छिन्नं प्रति विशेष्यतासंसर्गेण तत्प्रकृतिकप्रत्ययजन्योपस्थितिः कारणमिति कार्यकारणभावः। अन्याय्यश्चेति—'सकृदुच्चारितः शब्दः सकृदर्थं गमयती'ति भाष्यमूलकोऽयं न्यायः। भावप्रधानेति—"क्रियाम्" "द्रव्ये क्यो" इतिसूत्रवदिति भावः। आङ्गिरसादिपाद इति प्रतिभाति। कर्तृत्वं कृतिरिति—कृत्याश्रयभूते कर्तरि इव प्रकारीभूतायां प्रकृतिजन्यत्वे प्रधानो भाव इत्यभियुक्तोक्तेः कर्तृशब्दोत्तरभावप्रत्ययेन कृतेरेवाभिधानमिति भावः। एवं फलाश्रयभूते कर्मणि फलस्य प्रकारीभूतत्वेन कर्मशब्दो

भिधानसमर्थस्यैवादेशत्वम्'इति न्यायेन स्थान्यर्थेन निराकाङ्क्षत्वादाकाङ्क्षितविधान ज्याय इति न्यायात् कर्तरि कृदित्यनेन शक्तिग्रहाभावाच्च ।

ननु नामार्थयोरभेदान्वयानुरोधात् शतृशानजादीनां कर्तरि शक्तिरिति चेन्न । पचतिकल्प पचतिरूप देवदत्त इत्याद्यनुरोधेन तिङ्क्ष्वपि कर्तुरेव वाच्यत्वौचित्यात् । किञ्च कृतिवाच्यत्वे रथो गच्छतीत्यादौ आश्रये लक्षणास्वीकारे गौरवापत्ति । अभिहितत्वानभिहितत्वव्यवस्थोच्छेदापत्तिश्च । नच 'अनभिहिते' इति सूत्रस्यानभिहितसंख्याकेऽप्यर्थवर्णनमिति वाच्यम् । कृत्तद्धितसमासैः सङ्ख्याभिधानस्याप्रसिद्धत्वात् । किञ्च यत्नोऽपि व्यापारसामान्य धातुत एव लभ्यते, स्थालीस्थे यत्ने पचिना कथ्यमाने स्थाली पचतीति कारक इत्यधिकारसूत्र भाष्यप्रयोगात् अनन्यलभ्यस्यैव शब्दार्थत्वात् कृतौ शक्तेरुक्तिसम्भव एव नेत्यलम् । आख्यातार्थे धात्वर्थो विशेषणमित्यस्य निराकरणमवशिष्यते । तथाहि । प्रकृत्यर्थप्रत्ययार्थयो सहार्थत्वे प्रत्ययार्थस्यैव प्राधान्यमित्युत्सर्ग । पाचक औपगव इत्युदाहरण, पाकक्रियाश्रय उपगुसम्बन्ध्यभिन्नापत्यमिति प्रत्ययार्थस्य प्राधान्य तयोरर्थे । तत्रापि प्रत्ययवाच्यस्यैवार्थस्य प्राधान्य,

---

त्तरभावप्रत्ययेन फलस्याऽभिधानम् । शतृशानजादीनामिति—भावार्थकलकारस्थानिकभिन्नानामितिशेष तेन 'देवदत्तेन शप्यमाने' इति प्रयोगाऽसङ्गतिर्न । दूषणान्तरमाह—किञ्चेति । अभिहितत्वेति—कृतेर्वाच्यत्वे तिङाकारकस्याऽभिधानाऽप्रसिद्धेरिति भाव ।

ननु अनभिहिते कर्मणि कर्मत्व इत्याद्येवार्थेति चेदाह—किञ्चेति ।स्थालीस्थ इति—भाष्ये यद्यपि नेद वाक्यस्वरूपमेकस्थानाऽवच्छेदेन लभ्यते, तथापि तत्र स्थानद्वयाऽवच्छेदेन तल्लभ्यत एवेति तत एव द्रष्टव्यम् ।

प्रकृतिप्रत्ययेति—'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयो प्रत्ययार्थस्य प्राधान्यम्' इति हि व्युत्पत्तिस्वरूपम् । सहार्थं निरूप्यनिरूपकभावापन्नमर्थमित्यर्थ । अस्यां व्युत्पत्तौ मूलञ्च—प्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यतासंसर्गेण शाब्दबुद्धित्वाऽवच्छिन्न प्रति विशेष्यतासंसर्गेण प्रत्ययजन्योपस्थिति कारणमिति कार्यकारणभाव । उत्सर्ग =सामान्यशास्त्रम् । अपवाद इति—तत्कर्तृकाऽऽनस्य

सुबन्तं हि यथानेकं तिङन्तस्य विशेषणम् ।
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणम् ॥ इति ।

तार्किकमते तु अन्यनिष्ठसंयोगानुकूलकृतिमन्मृगकर्मकं प्रेरणाविषयीभूतं यद्दर्शनं तदनुकूलकृतिमांस्त्वमिति बोधः । तन्न । विशेष्यभूतार्थवाचकमृगशब्दस्य प्रातिपदिकत्वात् दृशिक्रियाकर्मत्वाच्च द्वितीयापत्तौ धावन्तं मृगं पश्येतिवत् पश्य मृगं धावतीत्यापत्तेः । किञ्चाप्रथमासमानाधिकरणे शतृशानचोर्नित्यत्वादेव प्रयोगविलयापत्तेश्च । ननु विशिष्टार्थवाचकस्य धावति मृग इति वाक्यस्य कर्मत्वेऽपि पृथक् मृग इत्यस्य प्रातिपदिकस्य कर्मत्वाभावान्न द्वितीयेति चेन्न । 'अनभिहिते' इत्यधिकारसूत्रभाष्ये अभिधानञ्च तिङ्कृत्तद्धितसमासैरित्येतत्परिगणनप्रत्याख्यानपरभाष्यरीत्या द्वितीयापत्तेः । तथाहि—कटं भीष्मं कुर्वित्यादौ विशेष्यकटशब्दादुत्पन्नद्वितीयया कर्मत्वस्योक्तत्वात् विशेषणीभूतभीष्मशब्दाद् द्वितीया न स्यादतः परिगणनं भाष्ये कृतम् । तत्प्रत्याख्यानञ्च सर्वकारकाणां साक्षात्स्वाश्रयद्वारा वा अरुणाधिकरणन्यायेन भावनान्वयस्वीकारात् । अत एवोक्तं भाष्ये—कटोऽपि कर्म भीष्मादयोऽपीति, तत्र कटनिष्ठकर्मत्वस्याप्युक्तत्वेऽपि भीष्मत्वादिगुणविशिष्टकर्मत्वानुक्तेस्तस्माद्द्वितीयेति तात्पर्यम् । उभयोः पश्चात्परस्परमन्वयस्तु विशेष्यविशेषणभावेन । अयमेवान्वयः पार्ष्णिक इत्युच्यते । एवमेवारुणाधिकरणे "अरुणया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणाति" इत्यत्र क्रयणक्रियायां मीमांसकैः स्वीकृतम् । तस्माद्धावति मृग इत्यत्र उभयोः कर्मत्वे धावतीत्यस्य प्रातिपदिकत्वाभावाद् विशेषणत्वेनान्यत्र निराकाङ्क्षत्वाच्च द्वितीयोत्पत्त्यभावेऽपि मृगशब्दात् द्वितीया दुर्वारैवेत्यवेहि । शाब्दिकमते तु क्रियाविशेषणत्वेनेतरार्थे निरा

---

पचति, भवति पश्यति, भवत्यपाक्षीदिति । एषैव वाचःयुक्तिः—पच्यादयः क्रिया भवन्ति क्रियायाः कर्म्यो भवन्तीति" इत्युक्तम् । अत्र क्रिययोः क्रियाकारकभावेनाऽन्वयास्वीकारादुत्पन्नापादेन पश्य मृगो धावतीत्यत्रापि तथा बोध इष्ट एवेति भावः । प्रेरणाविषयीभूतमिति—इच्छाविषयीभूतमिति भावः, तार्किकाणां मते तस्यैव विध्यर्थत्वात् । स्वाश्रयद्वारेति—इदमधिकरणकारकाभिप्रायेण । इत्यलमिति—

फाद्क्षत्यान्मृगशब्दान्न द्वितीया। तार्किकमते तु विशेष्यार्थवाचकात् मृग शब्दात् राज्ञ पुरुषमानयेतिवद् द्वितीया दुर्वारेत्यलमतिविस्तरेण। इति धात्वर्थनिर्णय।

अथ निपातार्थनिर्णय ॥ अनुभूयते सुख, साक्षात्क्रियते गुरु रित्यादौ निपातानां द्योतकत्वेनानुभवसाक्षात्काररूपफलयोर्धात्वर्थत्वेन सकर्म्मकत्वम्। कर्म्मसंज्ञकार्थावच्छ्यर्थकत्व सकर्म्मकत्वमितिनिष्कृष्टम् तेऽपि फलाश्रयतया कर्म्मसंज्ञकस्य धात्वर्थफले एवान्वयौचित्येन द्योतकत्वमावश्यकम्। द्योतकत्वञ्च स्वसमभिव्याहृतपदनिष्ठवृत्त्युद्बोधकत्वम्। क्वचित्तु क्रियाविशेषाक्षेपकत्व द्योतकत्वम्। यथा प्रादेश विलिखतीत्यादौ विर्विमानक्रियाक्षेपक। प्रादेश विमाय लिखतीत्यर्थावगमात्। अतएवाथ शब्दानुशासनमित्यत्राथशब्दस्य प्रारम्भक्रियाक्षेपकत्व कैयटाद्युक्त सङ्गच्छते। क्वचित्तु सम्बन्धपरिच्छेदकत्व द्योतकत्वम्। यथा कर्म्मप्रवचनीयानाम्। विशिष्टस्य न धातुत्वम्, अपाठात्। अडाद्यव्यवस्थापत्तेश्च।

यत्तु तार्किका उपसर्गाणां द्योतकत्व तदितरनिपातानां वाचकत्व 'साक्षात्प्रत्यक्षतुल्ययो' इतिकोशात्। नमःपदेन देवाय नम इत्यादौ नमस्कारा

---

एवञ्च वैयाकरणमते—आख्यातार्थकर्तृप्रकारकबोधे धातुजन्योपस्थितिर्मानिना त्वावच्छिन्नविषयतया कारणमिति कार्यकारणभावो द्रष्टव्य। भावनाप्रकारबोध प्रति तु कृजन्योपस्थितिवत् धात्वर्थभावनोपस्थितिरपि हेतु पश्य मृगो धावति, पचति, भवति, इत्याद्यनुरोधादितिदिक्। इति धात्वर्थवाद।

प्रसङ्गान्निपातार्थनिरूपणप्रकरणमाह—अनुभूयत इत्यादि। नैयायिकान् मर्दयन्नाह—साक्षात्क्रियते इति। निपातानां द्योतकत्वे बीजमाह-सकर्मकत्वमिति। निपातानां द्योतकत्वञ्च त्रिविधम्—स्वसमभिव्याहृतपदनिष्ठशक्तिशारकत्वम्, क्रियाविशेषाक्षेपकत्वम्, सम्बन्धविशेषपरिच्छेदकत्वञ्चेति। तदाह—द्योतकत्वञ्चेत्यादिना कर्मप्रवचनीयानामित्यन्तेन। एवञ्च व्यञ्जनावृत्तिरावश्यक्येव। द्योतनैव सेति बोध्यम्। आक्षेपश्चानुमानमित्यन्यत्र विस्तरः।

प्रत्यक्षतुल्ययोरिति—सप्तम्या वाचकत्वार्थे पर्यवसानात् प्रत्यक्षतुल्यवाचक साक्षाच्छब्द इति तदर्थात्। साक्षात्क्रियते गुरुरित्यत्र कर्मणि लकारसिद्धय आह—

र्थत्वस्य दानावसरे गवे नम इत्यत्र पूजार्थत्वस्य प्रसिद्धत्वाच्च । सकर्मकत्वं च—स्व स्वसमभिव्याहृतनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वम् । कर्मत्वं च स्व-स्वसमभिव्याहृतनिपातान्यतरार्थफलशालित्वमित्याहुः । तन्न । वैषम्ये बीजाभावात् । अनुभूयत इत्यनेन साक्षात्क्रियत इत्यस्य समत्वात् । नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयाभावात् । निपातार्थधात्वर्थयोरन्वयस्यैवासम्भवात् । निपातार्थफलाश्रयत्वेऽपि धात्वर्थान्वयं विना कर्मत्वानुपपत्तेश्च । यदपि केचिच्छाब्दिका निपातानां वाचकत्वे शोभनः समुच्चय इतिवच्छोभनश्च इत्यापत्तिः, घटस्य समुच्चय इतिवत् घटस्य च इत्यापत्तिः, पटं घटं च पश्येत्यादौ पञ्चम्यापत्तिश्चेत्याहुः । तन्न । शब्दशक्तिस्वभावेन निपातैः स्वार्थस्य परविशेषणत्वेनैव बोधनेन विशेषणान्वयाप्रसङ्गात् । चशब्दद्योत्यसमुच्चयस्यारुणत्वभूतत्वात् पञ्चम्यप्राप्तेश्च । किञ्च घटं पटं च पश्येत्यादौ घटपदस्य घटप्रतियोगिकसमुच्चयवति अप्रसिद्धा शक्तिरेव लक्षणा चशब्दस्तु तात्पर्य

---

सकर्मकत्वञ्चेति । भेदेन साक्षादिति—नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयोऽव्युत्पन्न इति व्युत्पत्तेरितिभावः । अन्यथा तण्डुलं पचतीत्यर्थे तण्डुलः पचतीति प्रयोगस्य नामार्थधात्वर्थयोः कर्मत्वेनान्वये प्रामाण्यापत्तिः । विभक्त्यर्थमध्यकृत्य तु तयोरन्वयो भवतीत्याह—साक्षादिति ।

तार्किकोक्तं कर्मत्वलक्षणं विघटयति धात्वर्थाऽन्वयं विनेति । गामेत्यादौ बध्नातीत्यत्र दोषवारणार्थं कर्तृग्रहणसामर्थ्यात्, प्रकृतधात्वर्थफलाश्रयत्वस्य कर्तुरीप्सिततमसूत्रेण कर्मसंज्ञाविधानादिति भावः ।

सारकुतुकं दूषणाभासं निरस्यति—यदपीत्यादि । केचिच्छाब्दिकाः = सारस्वत इत्यर्थः । परविशेषणत्वेनैवेति—एवेन विशेष्यत्वस्य व्यवच्छेदः । तथा च—पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति नञितरनिपातेतरपदजन्योपस्थितेर्विशेष्यतासम्बन्धेन कारणत्वमिति भाव कारणाभाव फलतीति भावः । घटो नास्तीत्यादौ निपातार्थेऽपि विशेष्यतासम्बन्धशाब्दबोधदर्शनादुक्तं नञितरेति । पञ्चम्यप्राप्तेश्चेति—अत्राऽपि विशेषणान्वयाऽभाव एव हेतुः । प्रकारान्तरेणाऽपि पञ्चम्यप्राप्तिं विघटयति—किञ्चेति ।

ग्राहक'। अत एवोभयो सामानाधिकरण्येन क्रियान्वयाद् द्वितीया। घटसमुच्चयवन्त पटम्पश्येतिबोध। त्वन्मतेऽपि समुच्चयस्य प्रतियोग्या काङ्क्षाया सन्निहितत्वात् घटस्य प्रतियोगित्व, पटे तु समुच्चयस्य भेदेनान्वयो न तु पटस्य समुच्चये इति क्व षष्ठ्यापादनम्, नामार्थयोरभेदान्वयव्युत्पत्तिस्तु निपातातिरिक्तविषया। निपातानामर्थवत्त्वमपि द्योत्यार्थमादायैव शक्तिलक्षणाद्योतकत्वान्यतमसम्बन्धेन बोधकस्यैवार्थवत्त्वात्। नञ्समासे उत्तरपदार्थप्राधान्य

---

इति बोध इति—शाब्दबोध इत्यर्थः। घटस्य प्रतियोगित्वमिति—आर्थे बोधे इति शेष। एतेन परविशेषणत्वेनैवेति पूर्वग्रन्थेन विरोध इत्यपास्तम्। भेदेनाऽन्वयः—अनुयोगित्वात्मकस्वरूपसम्बन्धेनान्वय इत्यर्थ। प्रतियोगिवाचकाच्च षष्ठी भवतीति न पटपदेऽतिप्रसङ्गः। न तु पटस्येति—प्रतियोगित्वसम्बन्धेनेति शेष। क्व षष्ठ्यापादनम्—चार्थसमुच्चयस्य घटे शाब्दाऽन्वयाऽभावात् पटे शाब्दान्वयेऽपि पटस्य विशेषणत्वाऽभावात् विशेषणवाचकशब्दादुत्पत्तिस्वभावा षष्ठी न प्राप्नोतीति भाव। विशेषणवाचकादेव षष्ठीत्यग्रे सुबर्थवादे वक्ष्याम। एवञ्च धूलिमद्देपेण नैयायिकमतखण्डन न युक्तं, किन्तु प्रागुक्तन्यायरीत्यैवेति ग्रन्थकृत्तात्पर्यम्।

ननु चार्थसमुच्चयस्य पटे भेदेनाऽन्वय कथ, नामार्थयोरिति व्युत्पत्तेर्विरोधादित्यत आह—नामार्थयोरिति। वस्तुतोऽव्ययेषु नामत्वमेव नास्ति, "चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्चे"ति भाष्ये नामत पृथगुपसर्गनिपातयोर्ग्रहणात्। तस्मात् लिङ्गसङ्ख्यानिष्ठप्रकारतानिरूपितविशेष्यताप्रयोजकत्व नामत्वमिति पारिभाषिकनामत्वस्वीकारे उक्तव्युत्पत्तौ निपातेतरसङ्कोचस्याऽपि नाऽऽवश्यकता। मूलन्तु स्याद्यन्तत्वनिबन्धननामत्वानुसारेण। यद्वा समुच्चयवांश्चार्थस्तेन पटेऽभेदान्वयेऽपि क्षतिर्नास्ति। समुच्चितमात्रे तदन्वयस्वीकारादेव 'समुच्चितानन्तर चादिप्रयोग' इति वृद्धा इतिलघुमञ्जूषाया स्पष्टम्।

प्रातिपदिकसञ्ज्ञासिद्धये आह—निपातानामर्थवत्त्वमिति। अन्यतमसम्बन्धेन बोधकस्यैवेति—तादृगन्यतमसम्बन्धेन अर्थविषयबोधजनकत्वप्रकारकतात्पर्यीयविशेष्यताप्रतियोगिकपर्याप्त्यनुयोगिताऽवच्छेदकधर्मवत्त्वमेवार्थवत्त्वमिति भाव। बोधजनकता च फलोपधायकता ग्राह्या।

द्योत्यार्थापेक्षयैव । प्रतिष्ठते इत्यत्र तिष्ठतिरेव गतिवाची, धातूनामनेकार्थत्वात् । प्रशब्दस्तु तदर्थगत्यादिमत्त्वस्य द्योतक । अत एव धातु पूर्वं साधनेन युज्यते पश्चादुपसर्गेणेति सिद्धान्तितम् । साधन कारकम् तत्प्रयुक्तकार्येण, उपसर्गेण उपसर्गसञ्ज्ञकशब्देनेत्यर्थः । तत्र हि भाष्ये—"पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेनेति । इतर आह नैतत्सार पूर्वं धातुस्साधनेन युज्यते

---

ननु प्रतिष्ठते इत्यत्र कथं गत्यर्थबोध , स्थाधातोर्गतिनिवृत्तिवाचकत्वात् इत्यत आह—प्रतिष्ठते इत्यत्रेति । "भूवादयो धातव" इति सूत्रे भाष्ये स्पष्टमेतत्—तत्र हि "बह्वर्था अपि धातवो भवन्तीति । तद्यथा—वपि प्रकिरणे एव दृश्ते चापि वर्तते—केशश्मश्रु वपतीति । एवमिहापि तिष्ठतिरेव व्रजिक्रिया माह, तिष्ठतिरेव व्रजिक्रियाया निवृत्तिम् ।" इत्युक्तम् ।

अत एव = उपसर्गाणां द्योतकत्वादेव । सिद्धान्तितमिति—'सुट्कात्पूर्वं' इत्यत्र 'उपपदमतिङ्' इत्यत्र च भाष्ये इति शेष । तत्प्रयुक्तकार्येण = कारकप्रयुक्तवत्वादिना । लक्षणया साधनशब्दस्यायमर्थ । उपसर्गसञ्ज्ञकशब्देनेति—उपसर्गार्थस्य तु द्योत्यत्वे धात्वर्थं पश्चात्तदभावात् धातुना तद्योगस्य चर्चैवाऽयुक्ता, योगस्य विश्लेषसापेक्षत्वादितिभाव । एतेन उपसर्गद्योत्यभूतस्य धर्मप्रयुक्तसुडादियोगात्तु धातुसञ्ज्ञाया अपि पूर्वं भवतीति सूचितम् । तेन संचस्करेत्यस्य सिद्धिः । 'सुट्कात्पूर्वं' इति न वक्तव्यमिति भाष्ये स्पष्टम् । एतच्च पूर्वं धातुरित्यादेरयमर्थ —उपसर्गसञ्ज्ञकशब्दयोगात्पूर्वं धातोर्लकाराद्युत्पत्तौ करोतीत्यादिरूपनिष्पत्तेरनन्तरं समासुपसर्गसंज्ञकशब्दयोग इति । तत्र हि भाष्ये पूर्वं धातुरुपसर्गेणेति—'उपास्यते गुरु ' इत्यादौ उपसर्गयोगात्पूर्व धातो कर्मणा साधनाऽन्वययोग्यार्थाऽभावेन सकर्मकत्वाऽभावात् कर्मरूपसाधनप्रयुक्तलकारादिकार्ययोगोऽसम्भव एव । तस्मात् साधनयोगात्पूर्वं धातोरुपसर्गयोगो मन्तव्य तद्योगे जाते तु तेषां वाचकत्वेन तत्समभिव्याहारात् कर्माऽन्वययोग्यार्थवाचकत्वलाभेन धातोः सकर्मकत्वसिद्धौ पश्चात्साधनप्रयुक्तलकारादियोगो भवतीति भाष्याशयः । उपसर्गाणां वाचकत्वनयेनेति हृदयम् । एतत्तत्पक्ष्यति—नैतत् सारमिति—एतत् = पूर्वोक्त, न सारम् न तत्त्वम् । किन्तर्हि सारम् ? इत्यत आह—पूर्वं धातु साधनेनेति । अतएव भवेति,भवत इत्यादिसिद्धि "धोरप्यथा" इति च संगच्छते ।

पश्चादुपसर्गेण। साधन हि क्रिया निर्वर्तयति तामुपसर्गो विशिनष्टीति। सत्यमेवैतत्। यस्त्वसौ धातूपसर्गयोरभिसम्बन्धस्तमभ्यन्तर कृत्वा धातु स्साधनेन युज्यते योह्येव मन्यते तस्य आस्यते गुरुणा इत्यकर्मक उपास्यते गुरुरिति केन सकर्म्मक स्यात्।

---

पूर्वोक्तस्य असारत्वे एतस्यैव सारत्वे च का युक्ति ? इत्यत आह—साधन ह्योति। साधन=कारकप्रयुक्तलडादि। क्रियाम्=साध्यत्वेन क्रियाप्रतीतिम्। निर्वर्तयति=जनयति। साधनयोगेन हि साध्यत्वेन धात्वर्थप्रतीति, साध्यत्वस्य साधननिरूप्यत्वात्। क्रियाया साध्यत्वेनैव प्रतीतिस्तु इष्टा, तथाऽनुभवात्। ताम्=साध्यत्वेन प्रतीताम्। उपसर्ग =उपसर्गसज्ञकशब्दयोग। विशिनष्टि= तत्र विशेषणीभूतमर्थं द्योतयतीत्यथ। साध्यत्वेन प्रतीतिक्रियायोगे हि उपसर्गत्व विधानात्। अत्र भाष्ये इताऽमे इदमधिकम्—"अभिनिर्वृत्तस्य चाऽस्योपसर्गेण विशेष शक्या वक्तुम।" इति। अभिनिर्वृत्तस्य=साध्यत्वेन ज्ञातस्य। विशेष =विशेषणम। वक्तुम्=द्योतयितुम्। एवञ्च पूर्वं धातुरुपसर्गे योति न सारमिति भाव। इतर एतदङ्गीकुर्वन्नेव उपसर्गायनिमित्तककार्यस्य
१ बुद्धादेरन्तरङ्गत्व व्युत्पादयितुमाह—सत्यमेवैतद्। यस्त्वसाविति—उपसर्ग सज्ञकशब्दयोगात्पूर्वं साधनयोग इति सत्यमेव। तेन प्रत्यय, अध्ययनमित्यादि सिद्धि। परन्तु त्वदभिमत धातूपसर्गसम्बन्धकृतमर्थम् अभ्यन्तरं कृत्वा उपसर्ग सज्ञकशब्दयोग विनाऽपि अर्थत्वेनाङ्गीकृत्य धातु पूर्वं नियमेनाऽऽकाङ्क्षितार्थत्वात् साधनेन सम्बद्ध्यते। साधनप्रयुक्तप्रत्यययोगे कृते तु क्रियात्याऽवगतौ पश्चात् श्रोतु बोधाय उपसर्गसञ्ज्ञकशब्दयोग। अन्यथा केवलधातुत सर्वत्राऽप्रतीयमान सोऽर्थ कथ श्रोता बुद्ध्येतेति भावः। योह्यत्र मन्यसे—उपसर्गसञ्ज्ञकशब्दयोगवत् उपसर्गाऽर्थयोगोऽपि पश्चादिति यो मन्यते इत्यर्थ। केन सकर्मक स्यादिति—
१ इदमत्र भाष्यप्रघट्टकस्य सारम्—येनैव क्रमेण अर्था बुद्धिमारूढा भवन्ति तेनैव क्रमेण तद्बोधकशब्दप्रयोग इति निर्विवादम्। 'उपास्यते' इत्यादिशब्दविवक्षाकाले पूर्वम् उपासनादिक्रियार्थस्य बुद्धावुपस्थिति। ततस्तद्बोधार्थम् आसादिधातुसज्ञक शब्दप्रयोग। तत क्रियाया साध्यत्वेन बोधात्साध्यस्य च साधनाऽऽकाङ्क्षत्वात् साधनार्थोपस्थिति। ततः साधनवाचकलडादिशब्दप्रयोग। सर्वत पश्चात् धात्वर्थ-

हरिणाप्युक्तम्—

धातोस्साधनयोगस्य भाविनः प्रक्रमाद्यथा ।
धातुत्वं कर्मभावश्च तथान्यदपि दृश्यताम् ॥
बुद्धिस्थादभिसम्बन्धात्तथा धातूपसर्गयोः ।
अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते ॥ इति ।

अस्यार्थः । यथा भाविसाधनसम्बन्धाश्रयणेन क्रियावाचित्वमाश्रित्य धातुसंज्ञोच्यते यथा च सन्प्रत्यये चिकीर्षिते भावीप्सितकर्मत्वमाश्रित्योपक्रमे एवेप्सितकर्मत्वमुक्तम्, तथा भाव्युपसर्गसम्बन्धादुपक्रमे एव विशिष्टक्रियावाचकत्वं दृश्यताम् । धातूपसर्गयोस्सम्बन्धं बुद्धिविषयीकृत्योपसर्गार्थीकृतो विशेषः धातुनैवाभ्यन्तरीकृतः पदप्रयोगकाले उपसर्गसम्बन्धे सति प्रकाशते । श्रोतुरिति शेषः । उपसर्गयोगात्प्रागेव

---

स्यैव द्योतकत्वेन नवार्थोपस्थापकत्वाऽभावात् वस्तुतो निष्प्रयोजनस्याऽपि उपसर्गसंज्ञकशब्दस्य केवलं श्रोतुर्द्योत्यार्थबोधाय प्रयोगः, अन्यथा आसादिधातोः सर्वत्र उपासनाद्यर्थाऽभावात् श्रोतुरुपासनाद्यर्थस्य बोधः क्लेशेन स्यात् । धातुरेवोपासनादिविशिष्टार्थवाचक इति उपास्यते गुरुरित्यादौ कर्मणि लकारसिद्धिः । सञ्चस्कारेत्यादौ भूषणाद्यर्थस्य धातुसंज्ञातोऽपि पूर्वमुपस्थितत्वेनान्तरङ्गत्वात् तन्निमित्तकसुटो सिद्धत्वे पूर्वमेव सिद्धिरिति सुट्कात्पूर्वं इति प्रत्याख्यातं भाष्ये । उपसर्गसम्बन्धप्रयुक्तमागनिमित्तकार्यं तु सर्वत्र पश्चाद्भावित्वेन बहिरङ्गमिति प्रत्येति प्रत्यय इत्यादि सिद्धम्, "गोरप्ययने" इति निर्देशश्च सङ्गच्छते । उपसर्गाश्च धातवश्च प्रत्येति युज्यन्ते 'धातुः पूर्वं साधनेन युज्यते पश्चादुपसर्गेणेति' । तेषां वाचकत्वे तु तद्योगात्पूर्वम् । उपास्यते गुरुरित्यादौ कर्मणि लकाराऽनुत्पत्तिप्रसङ्गात् पूर्वं धातुः साधनेनेति भाष्यसिद्धान्तोऽसङ्गत एव स्यात् । द्योतकत्वे तु उपसर्गयोगात् पूर्वमपि उपासनाद्यर्थस्य धात्वर्थत्वादेव धातोः सकर्मकत्वेन कर्मणि लकारः सिद्ध्यत्येवेत्यलम् ।

प्रक्रमात्—आरम्भात् । साधनसम्बन्धं विना साध्यत्वस्वभावाया क्रियायाः स्वरूपाऽनिष्पत्तेरिति भावः । कर्मभावश्चेत्यस्यार्थमाह—यथा च सन्प्रत्यय इति । तथाऽन्यदपीत्यस्यार्थमाह—तथा भाव्युपसर्गेत्यादि । भेदः—विशेषः ।

धातुनैवोपसर्गार्थविशिष्ट स्वार्थो उच्यते इति तात्पर्यम्। पूर्वं धातुरुप सर्गेणेति तु तदर्थस्य धात्वर्थान्तर्भावाद् व्यवहार।

चन्द्र इव मुखमित्यादौ चन्द्रपदस्य स्वसदृशेऽप्रसिद्धा शक्तिरूपा लक्षणा। "नञिवयुक्तमन्यसदृशाधिकरणे" इति न्यायात्। इवपद तात्पर्य-ग्राहकम्। तात्पर्यग्राहकत्वञ्च स्वसमभिव्याहृतपदस्यार्थान्तरशक्तिद्योतकत्व मित्यागतम् इवनिपातस्य द्योतकत्वम्।

यत्तु इवार्थस्सादृश्य तत्र प्रतियोग्यनुयोगिभावेनैव चन्द्रमुखयोरन्व योपपत्तौ किं लक्षणया। तथा च चन्द्रप्रतियोगिकसादृश्यस्याश्रयो मुख

---

ननु यथत्तरीत्या पूर्वं धातु साधनेन युज्यते इति सिद्धान्त, तर्हि पूर्वं धातु रुपसर्गेणेति व्यवहार कथम्? इत्यत आह-पूर्वं धातुरिति। उपसर्गेण उपसग द्योत्यार्थेन युज्यते वाचकत्वेन सम्बद्धयते, इत्यर्थ इति भाव।

नञिवयुक्तमिति—"नञिवयुक्तमन्यसदृशाऽधिकरणे तथाह्यर्थगति" इति हि न्यायस्वरूपम्। वार्तिकमेतत्। "नञ्युक्तमिव युक्त वा यत्किञ्चिदिह दृश्यते ततोऽन्यस्मिंस्तत्सदृशे कार्यं विज्ञायते। तथा ह्यर्थो गम्यते। 'अब्राह्मणमानये'त्युक्ते ब्राह्मणसदृश एवानीयते नाऽसौ लोष्टमानीय कृती भवती"ति तद्भाष्यम् 'भृशा दिभ्य' इति सूत्रे। अधिकरणे द्रव्ये इत्यर्थ। अत्र अन्यसदृशेत्युक्त्या सादृश्यं भेदघटित नास्तीति सूचितम्। एतेन तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्व सादृश्य मिति नैयायिकोक्तलक्षण परास्तम्, अभेदेऽपि सादृश्याङ्गीकारात्। काव्यप्रकाश कृताऽपि भेदे साधर्म्यमुपमेति वदताऽभेदेऽपि साधारणधर्मसम्बन्धस्याङ्गीकारात्। किञ्च सादृश्य साधारणधर्मसम्बन्धप्रयोज्य सदृशादिपदशक्यताऽवच्छेदकतया सिद्ध सदृशदर्शने संस्कारोद्बोधकत्वस्य सर्वसम्मतत्वेन तत्कारणताऽवच्छेदकतया च सिद्धमखण्डमतिरिक्त पदार्थ। अतएव 'अनेनाय सदृश' इत्युक्ते केन धर्मेणाऽ नयो सादृश्यमित्येव जिज्ञासा, न तु को धर्मोऽनयो सादृश्यमिति। न चाति रिक्तपदार्थत्वे गौतमकणादोक्तपदार्थसङ्ख्याविरोध इति वाच्यम्, प्रमेयपदार्थे गौतमो-क्तेऽन्तर्भावात्, पदार्थसङ्ख्याया न्यूनस्योपलक्षणत्वाच्च। तदुक्तं गौतमेन—"सङ्ख्यैका न्तासिद्धि"रित्यन्यत्र विस्तर। सादृश्यप्रयोजकधर्मश्च—सादृश्यप्रतियोगिताऽवच्छे दकीभूतो यो धर्मस्तद्व्यापकीभूता यो धर्म स एव, तथाऽनुभवादित्यलम्।

हरिणाप्युक्तम्—

धातोस्साधनयोगस्य भाविनः प्रक्रमाद्यथा ।
धातुत्वं कर्मभावश्च तथान्यदपि दृश्यताम् ॥
बुद्धिस्थादभिसम्बन्धात्तथा धातूपसर्गयोः ।
अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते ॥ इति ।

अस्यार्थः । यथा भाविसाधनसम्बन्धाश्रयणेन क्रियावाचित्वमाश्रित्य धातुसञ्ज्ञोच्यते यथा च सन्प्रत्यये चिकीर्षिते भावीपिकर्मत्वमाश्रित्योपक्रमे एवेपिकर्मत्वमुक्तम्, तथा भाव्युपसर्गसम्बन्धादुपक्रमे एव विशिष्टक्रियावाचकत्वं दृश्यताम् । धातूपसर्गयोस्सम्बन्धः बुद्धिविषयीकृत्योपसर्गार्थकृतो विशेषः धातुनैवाभ्यन्तरीकृतः पदप्रयोगकाले उपसर्गसम्बन्धे सति प्रकाशते । श्रोतुरिति शेषः । उपसर्गयोगात्प्रागेव

स्यैव द्योतकत्वेन नवार्थोपस्थापकत्वाऽभावात् वस्तुतो निष्प्रयोजनस्याऽपि उपाद्युपसर्गसंज्ञकशब्दस्य केवलं श्रोतुर्द्योत्यार्थबोधाय प्रयोगः, अन्यथा आसादिधातोः सर्वत्र उपासनाद्यर्थाऽभावात् श्रोतुरुपासनाद्यर्थस्य बोधः क्लेशेन स्यात् । धातुरेवोपासनादिविशिष्टार्थवाचक इति उपास्यते गुरुरित्यादौ कर्मणि लकारसिद्धिः । संस्कारेत्यादौ भूषणाद्यर्थस्य धातुसत्त्वातोऽपि पूर्वमुपस्थितत्वेनान्तरङ्गत्वात् तन्निमित्तकसुटो लिङ्गरच्चे पूर्वमेव सिद्धिरिति सुट्कात्पूर्व इति प्रत्याख्यातं भाष्ये । उपसर्गसञ्ज्ञकशब्दयोगनिमित्तककार्यन्तु सर्वत्र पश्चाद्भवत्वेन बहिरङ्गतरमिति प्रत्येति प्रत्ययः इत्यादि सिद्धम्, "शेरध्ययने" इति निर्देशश्च संगच्छते । उपसर्गाश्च द्योतका एवेति सुष्ठूच्यते 'धातुः पूर्वं साधनेन युज्यते पश्चादुपसर्गेणेति' । तेषां वाचकत्वे तु तद्योगात्पूर्वम् । उपास्यते गुरुरित्यादौ कर्मणि लकाराऽनुत्पादप्रसङ्गात् पूर्वं धातुः साधनेनेतिभाष्यसिद्धान्तोऽसङ्गत एव स्यात् । द्योतकत्वे तु उपसर्गयोगात् पूर्वमपि उपासनाद्यर्थस्य धात्वर्थत्वादेव धातोः सकर्मकत्वेन कर्मणि लकारः सिद्ध्यत्येवेत्यलम् ।

प्रक्रमात्—आश्रयणात् । साधनसम्बन्धं विना साध्यत्वस्वभावाया क्रियायाः स्वरूपाऽनिष्पादादितिभावः । कर्मभावश्चेत्यस्यार्थमाह—यथा च सन्प्रत्यय इति । तथाऽन्यदपीत्यस्यार्थमाह—तथा भाव्युपसर्गेत्यादि । भेदः—विशेषः ।

धातुनैवोपसर्गार्थविशिष्टः स्वार्थ उच्यते इति तात्पर्यम्। पूर्वं धातुरुप सर्गेणेति तु तदर्थस्य धात्वर्थान्तर्भावाद् व्यवहार ।

चन्द्र इव मुखमित्यादौ चन्द्रपदस्य स्वसदृशेऽप्रसिद्धा शक्तिरूपा लक्षणा "नञिवयुक्तमन्यसदृशाधिकरणे" इति न्यायात्। इवपद तात्पर्य ग्राहकम्। तात्पर्यग्राहकत्वञ्च स्वसमभिव्याहृतपदस्यार्थान्तरशक्तिद्योतकत्व मित्यागतम् इवनिपातस्य द्योतकत्वम्।

यत्तु इवार्थस्सादृश्य तत्र प्रतियोग्यनुयोगिभावेनैव चन्द्रमुखयोरन्व योपपत्तौ किं लक्षणया। तथा च चन्द्रप्रतियोगिकसादृश्यस्याश्रयो मुख

---

ननु यद्युक्तरीत्या पूर्वं धातु साधनेन युज्यते इति सिद्धान्त, तर्हि पूर्वं धातु रुपसर्गेणेति व्यवहार कथम्? इत्यत आह—पूर्वं धातुरिति। उपसर्गेण उपसर्ग द्योत्यार्थेन युज्यते वाचकत्वेन सम्बद्ध्यते, इत्यर्थ इति भाव ।

नञिवयुक्तमिति—"नञिवयुक्तमन्यसदृशाऽधिकरणे तथाह्यर्थगति" इति हि न्यायस्वरूपम्। वार्तिकमेतत्। "नञ्युक्तमिव युक्त वा यत्किञ्चिदिह दृश्यते ततोऽन्यस्मिंस्तत्सदृशे कार्यं विज्ञायते। तथा ह्यर्थो गम्यते। 'अब्राह्मणमानये'त्युक्ते ब्राह्मणसदृश एवानीयते नाऽसौ लोष्टमानीय कृती भवती"ति तद्भाष्यम् 'मृषा दिग्ध' इति सूत्रे। अधिकरणे द्रव्ये इत्यर्थ । अत्र अन्यसदृशेत्युक्त्या सादृश्य भेदघटित नास्तीति सूचितम्। एतेन तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्व सादृश्य मिति नैयायिकोक्तलक्षण परास्तम्, अभेदेऽपि सादृश्याङ्गीकारात्। काव्यप्रकाश- कृताऽपि भेदे साधर्म्यमुपमेति वदताऽभेदेऽपि साधारणधर्मसम्बन्धस्याङ्गीकारात्। किञ्च सादृश्य साधारणधर्मसम्बन्धभयावृत्त्य सदृशादिपदशक्यताऽवच्छेदकतया सिद्ध सदृशदर्शने संस्कारोद्बोधकत्वस्य सर्वसम्मतत्वेन तत्कारणताऽवच्छेदकतया च सिद्धमखण्डमतिरिक्त पदार्थं। अतएव 'अनेनाय सदृशः' इत्युक्ते केन धर्मेणाऽ
१ नयो सादृश्यमित्येव जिज्ञासा, न तु को धर्मोऽनयो सादृश्यमिति। न चाति रिक्तपदार्थत्वे गौतमकणादोक्तपदार्थसङ्ख्याविरोध इति वाच्यम्, प्रमेयपदार्थे गौतमो- क्तेऽन्तर्भावात्, पदार्थसङ्ख्यावधनस्यापलक्षणत्वाच। तदुक्त गौतमेन—"सङ्ख्यैका न्ताऽसिद्धि"रित्यन्यत्र विस्तर। सादृश्यप्रयोजकधर्मश्च—सादृश्यप्रतियोगिताऽवच्छे दकीभूतो यो धर्मस्तद्व्यापकीभूतो यो धर्म स एव, तथाऽनुभवादित्यलम्।

मिति बोध इत्याहु । तन्न । चन्द्र इव मुखं दृश्यते, चन्द्रमिव मुखं पश्यामीत्यादौ चन्द्रपदस्य मुखरूपकर्मसामानाधिकरण्याभावादुक्तानुक्तत्वप्रयुक्तविभक्त्यनापत्तेः षष्ठ्यापत्तेश्च ।

परे त्विवशब्दस्योपमानताद्योतकत्वम् । उपमानत्वञ्च उपमानोपमेयोभयनिष्ठसाधारणधर्म्मवत्त्वेनेषदितरपरिच्छेदकत्वम् । तद्धर्म्मवत्तया परिच्छेद्यत्वञ्चोपमेयत्वम् । साधारणधर्म्मसम्बन्धश्च क्वचिद् विशेष्यतयाऽन्वेति क्वचिद् विशेषणतया । एवञ्च चन्द्र इव आह्लादकं मुखमित्यादौ आह्लादकोपमानभूतचन्द्राभिन्नमाह्लादकं मुखमिति बोधः । चन्द्र इव मुखमाह्लादयतीत्यादौ चोपमानभूतचन्द्रकर्तृकाह्लादाभिन्नो मुखकर्तृकाह्लाद इति बोधः । इदमुपमानानि सामान्यवचनैरित्यत्र भाष्ये स्पष्टमित्याहुः ।

---

कर्मसामानाधिकरण्याभावात् = कर्मणाऽभेदाऽन्वयाऽभावादित्यर्थः । अत्मन्मते तु चन्द्रपदस्य चन्द्रसदृशार्थकतया मुखरूपकर्मणि अभेदाऽन्वयेन उक्ताऽनुक्तत्व प्रयुक्तविभक्तिर्लभ्यत एव । षष्ठ्यापत्तेश्चेति—प्रतियोगित्वेन चन्द्रपदार्थस्येवार्थसादृश्येऽन्वये तु चन्द्रपदे षष्ठी दुर्वारा, भेदसम्बन्धीयप्रतियोगिवाचकशब्दे षष्ठ्या अनुशासनलभ्यत्वात् इतिभाव ।

इदानीं स्वमतमाह—परे तु इति = सिद्धान्तिनस्तु इत्यर्थः । क्वचित् विशेष्यतया, क्वचि द्विशेषणतयेति—यत्र साधारणधर्मवाचकशब्दस्तिङन्तस्तत्र विशेष्यतया, यत्र तु स सुबन्तस्तत्र विशेषणतयेति विवेक । इति बोध इति—चन्द्रपदस्योपमानभूतचन्द्रार्थेऽप्रसिद्धा शक्ति, इवपदं तात्पर्यग्राहकम् । साधारणधर्मस्य च द्वयोरप्युपमानोपमेययोरन्वय । पूर्ववाक्ये उपमानोपमेययोरभेदाऽन्वयेन तद्वाचकपदयो समानं विभक्तिकत्वम् उत्तरवाक्ये तु साधारणधर्मभूतायां क्रियायां कर्तृत्वेनाऽन्वयाद् द्वयोः समानविभक्तिकत्वम् । इदम् = उक्तरीत्या उपमानत्वम्, उपमेयत्वम्, इवशब्दस्योपमानताद्योतकत्वम्, साधारणधर्मस्योपमानोपमेयोभयाऽन्वयादिज्ञानञ्चेदं सर्वमित्यर्थ । भाष्ये स्पष्टमिति—तत्र हि भाष्ये—"उपमानानीत्युच्यते, कानि पुनरुपमानानि ? किं यदेवोपमानं तदेवोपमेयम् ? आहोस्विद् यदेवोपमानमप्युपमेयम् ? किञ्चात ? यदि यदेवोपमानं तदेवोपमेयम्, क इहोपमार्थ —'गौरिव गौरिति' ?

( यदेवेत्येवकारेण तयोरत्यन्ताऽभेद सूचित । उपमानोपमेयत्वबोधके यशब्दप्रयोगे किं फलम् ? उपमाकर्मकरणत्वरूपोपमानोपमेयत्वबोधस्यैकत्राऽसम्भवादिति भाव । ) अथाऽन्यदेवोपमानमन्यदुपमेय क इहोपमार्थ —'गौरिवाश्व इति' ? ( अन्यदेवेत्यनेनाऽत्य तभेद सूचित । सर्वथाभेदे तत्स्वीकारे इदमुदाहरण साम्य, तथाऽयुक्तम्, साधारणधर्ममूलकोपमानोपमेयभावाऽप्रतीतेरिति भाव । ) एव तर्हि यत्र किञ्चित्सामान्य कश्चिच्च विशेषस्तत्रोपमानोपमेये भवत । ( श्यामत्वादि साधारणधर्मेणाऽभेद, शब्दोपात्तमत्येकधर्मेण शस्त्रीत्व देवदत्तत्वादिना च भेद इत्यर्थ । ) मान हि नाम अनिर्ज्ञातज्ञानार्थमुपादीयते—'अनिर्ज्ञातमर्थं ज्ञास्यामीति' । तत्समीपे यन्नाऽत्यन्ताय मिमीते तदुपमान—गौरिव गवय इति । गौर्निर्ज्ञातो गवयोऽनिर्ज्ञात । ( अज्ञातार्थस्य साकल्येन ज्ञापक हि मानम्, यथा प्रस्थादि, अज्ञातस्य परिमाणरूपार्थस्य साकल्येन ज्ञापकम्, न तथोपमानम् । गौर्हि गवय कतिभिश्चिद्धर्मैरेव तद्गवैज्ञापयति न साकल्येन । हीन मानमुपमानमिति हीनार्थकोपशब्देन कर्मधारय, उपोऽधिके चेत्यादावुपस्य हीनार्थकत्वदर्शनात् । उपमानानीति निपातनाच्च समास, अन्यथा कमप्रवचनीयसंज्ञाविधानसामर्थ्यात् न स्यात् । मानं हि अत्यन्ताऽभेदेनैव वा परिच्छेदेऽन्वेति—'प्रस्थो व्रीहि'रित्यादौ परिच्छेद्ये तद्धारोपात् । भेदेनैव वा—'प्रस्थोऽस्य परिमाणमित्यादौ । उपमान तु भेदाऽभेदाभ्यामिति विशेष इति भाव । ) अस्मात् भाष्यात् उपमानोपमेययो कथितलक्षणम्, इव शब्दस्योपमानताद्योतकत्वञ्च स्पष्टमेवायाति । अग्रे पुन —"किं पुनरिहोदाहरणम् ? शस्त्रीश्यामा । क्व पुनरय श्यामाशब्दो वर्तते ? शस्त्र्यामित्याह । केन तर्हीदानीं देवदत्ताऽभिधीयते ? समासेन यथैव शस्त्रीश्यामो देवदत्त इति न सिद्ध्यति । 'उपसर्जनस्ये'ति ह्रस्वत्व भविष्यति । यदि तर्हि उपसर्जनान्यप्येवजातीयकानि भवन्ति, 'नितिरिकल्माषी' 'कुम्भकपाललोहिनी' अनुपसर्जनलक्षण ईकारो न प्राप्नोति । एव तर्हि शस्त्र्यामेव शस्त्रीशब्दो, देवदत्ताया श्यामाशब्द । , एवमपि 'समानाधिकरणेने'ति वर्तते । व्यधिकरणत्वात्समासो न प्राप्नोति । किं हि वचनान्न भवति ? यद्यपि तावद्वचनात्समास स्यादिति तु खलु मृगीव चपला मृगचपला समानाधिकरणलक्षण पुवद्भावो न प्राप्नोति । एव तर्हि तस्यामेवोभय वर्तते । एतच्चात्र युक्त यत्तस्यामेवोभयं वर्तते

यदा तु, भेदवदर्थको नञ् ब्राह्मणादिभिर्विशेष्यते—'ब्राह्मणभिन्न' इत्यर्थस्तदा पूर्व पदार्थः—प्रधानम् । यदा च आरोपितब्राह्मणत्वद्योतको नञ्—आरोपित ब्राह्मणत्ववान् क्षत्रियादिरित्यर्थस्तदोत्तरपदार्थप्रधान समास'। द्वन्द्ववत्तु स्वतन्त्र पदार्थद्वयाऽनवगमादुभयपदार्थप्राधान्यपक्षो न संभवति । एषु पक्षेषु कतमोऽत्र पक्ष ! इत्याशयेन तत्र हि आशङ्कितम्—"किंप्रधानोऽयं समासः ?" इति । ततश्च अन्यपदार्थप्राधान्यपक्षे 'अथवा हेमन्त' इत्यत्र "हेमन्तस्य यल्लिङ्गं वचनं च तत्समासस्याऽपि प्राप्नोती"ति दोषमुक्तवान् । यद्यपि "परवल्लिङ्गमि"ति लिङ्गांशे समाधानमस्ति तथापि न्यासभेदेन द्वन्द्वैकदेशिसमासयोरेव परवल्लिङ्गता इत्याशय, वचनदोषस्य तावताऽप्यपरिहार एवेत्याशयश्च । अतस्मै, अत्रा, इत्यादौ तु न दोष, एतत्तदोरिति सूत्रेऽनञ्समासग्रहणाल्लिङ्गात् नञ्समासे उपसर्जनत्वप्रयुक्तकार्या ऽभावस्य ज्ञापनात् । अन्यथा एतत्तदोरसंद्वारेण सम्बन्धिन सुबन्तस्य लोपो विधीय मानोऽनेषो ददात्यसो ददातीत्यत्र कथ प्राप्नुयात्, तादृशरूपाऽसिद्धेश्चेति अन ञ्समासग्रहणं व्यर्थमेव स्यात् इति भाष्याशय । ततश्च पूर्वपदार्थप्राधान्यपक्षेऽपि नञर्थप्राधान्ये लिङ्गसंख्यायोगाऽऽशङ्कायाः शब्दस्वाभा येन समाधानं कृत्वाऽपि 'अनेकम्' इत्यत्रैकभिन्नमित्यत्र भेदस्य प्रतियोगिताऽवच्छेदकेन सह विरोधाद् भेदप्रत्येकत्वस्याऽनवगतेरेकवचनाऽसिद्धिप्रसङ्ग इत्याशयेन पक्षान्तरं परिगृह्णताऽ परितोष सूचित । अनेकमित्यत्रैकवचनस्यैवेष्टत्वमित्यग्रे भाष्यकृदेवोक्तवानिति निरूपयिष्यते । ततश्चोत्तरपदार्थप्राधान्यपक्ष एव युक्त इत्याशयेन सिद्धान्तिना समुच्चरितम्—"उत्तरपदार्थप्रधान" इति । यद्यपि आरोपितब्राह्मणत्वपदर्थकत्वतात्पर्याऽ नभिज्ञैकदेशिनाऽत्रापि पक्षे दोष शङ्कित —"यद्युत्तरपदार्थप्रधानः, अब्राह्मण मानयेत्युक्ते ब्राह्मणमात्रस्याऽऽनयनं प्राप्नोती'ति । अभावो नञर्थ, तस्य विश पणत्वे अभावप्रतियोगी भेदप्रतियोगी वा ब्राह्मण इत्यवबोधे यत्किञ्चिन्निष्ठाऽभाव प्रतियोगित्वस्य तादृशभेदप्रतियोगित्वस्य वा येनलान्वयित्वेनाऽप्यावर्तकत्वाभावाऽ नर्थकत्वाऽऽपत्त्या ब्राह्मणाऽब्राह्मणशब्दयो पर्यायताऽऽपत्त्या ब्राह्मणसामान्यस्याऽऽ नयनं प्रसज्यते, न तु शौचाचारादिहीनब्राह्मण विशेषस्यैवेष्टस्य, न वा क्षत्रियादेरिति तदाशय । ततश्च 'नाऽयमभावार्थको नञ्, किन्त्वारोपविषयताद्योतक इति नोक्त दोष' इत्याशय शङ्कासमाधानाभ्यां स्फुटीकर्तुं सिद्धान्ती समाह—"अथवा पुन

रस्तूत्तरपदार्थप्रधान । ननु चोक्तम्—अब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयन प्राप्नोतीति ? नैषदोष । इद तावदयं प्रष्टव्य —अथेह राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं कस्मान्न भवति ? अस्त्यत्र विशेष । राजा विशेषक प्रयुज्यते, तेन विशिष्टस्यानयन भवति । इहापि तर्हि नञ् विशेषक प्रयुज्यते, तेन नञ् विशिष्टस्यानयन भविष्यति । क पुनरसौ ? निवृत्तपदार्थक " इति । नञ्वि शिष्टस्येति—नञ्द्योत्यारोपितब्राह्मण्यविशिष्टस्येत्यर्थ । कः पुनरसाविति—अभावस्यैव नञर्थत्वेन प्रसिद्धत्वात्तत्र च अभावप्रतियोगीत्याद्यर्थे पूर्वोक्तदोषस्याऽवारणप्रसङ्गात्तादृशबोधीयविषयताशाल्यतिरिक्त कोऽसौ नञर्थविशिष्ट उत्तरपदार्थ इति प्रश्न । निवृत्तपदार्थक इति—आरोपितप्रवृत्तिनिमित्तवानुत्तरपदार्थ इत्युत्तरम् । तथाहि—क पुनरसौ नञर्थविशिष्टोत्तरपदार्थ इति प्रश्नस्योत्तरत्वेन प्रयुक्तत्वात् 'निवृत्तपदार्थक' इत्यस्य निवृत्तपदार्थको नञ्विशिष्ट उत्तरपदार्थ इति सम्बन्धो वाच्य । एवञ्च यदि 'निवृत्तपदार्थक' इत्यस्य सर्वथाशून्यपदार्थक इत्यर्थस्तर्हि तस्य नञर्थविशिष्टत्वाऽयोगात् नञ्विशिष्टस्याऽऽनयनं भविष्यतीति भाष्याऽसङ्गतिरेव, समासस्योत्तरपदार्थप्राधान्याऽयोगात्तत्परकभाष्याऽसङ्गतिश्च । यदाऽपि 'निवृत्त

२ प्रवृत्तिनिमित्तक' 'निवृत्तमुख्यप्रवृत्तिनिमित्तको वा' इत्येत मात्रमेवार्थस्तदाऽपि प्रवृत्तिनिमित्तशून्यस्याऽर्थस्याऽप्रसिद्धयोक्तभाष्यद्वयाऽसङ्गतिस्तदवस्थैव । तस्मात् 'निवृत्त पदार्थो मुख्यं प्रवृत्तिनिमित्तं यस्मिन्निति बहुव्रीहिणा लब्धेन निवृत्तमुख्य प्रवृत्तिनिमित्तक इत्यनुरोधेन 'आरोपित प्रवृत्तिनिमित्तक' इत्यार्थिकार्थे भाष्यस्य तात्पर्यमुन्नीयते । अस्मिन्नर्थे च नञ्द्योत्यारोपितत्वेन विशिष्टत्वमपि उत्तरपदार्थ-ब्राह्मण्यवत्पदार्थ-प्राधान्यमपीति सर्वमवदातम् । एवञ्च अब्राह्मण इत्यस्य आरोपितब्राह्मण्यवानिति शाब्द प्रत्ययो लभ्यते, स्पष्टञ्चेद कैयटोद्योतयो ।

यत्तु भूषणसारकृता भावार्थकक्तप्रत्ययेन निवृत्त पदार्थो यस्य स —नपुसके

१ भावे क्त इति क्त —अभावार्थको नञ् इत्यर्थ इति व्याख्यात तन्न श्रद्धेय, बहुदोषग्रस्तत्वादितिदिक् ।

अग्रे पुनश्च सिद्धान्तिना निवेदितम्—"इद खल्वपि भूय उत्तरपदार्थप्राधान्ये सति सगृहीतं भवति । किम् ? 'अनेकमि'ति । किमत्र सगृहीतम् ? एकवचन मि'"ति । आरोपितैकत्ववत्त्वेनैव बोधादेकवचनसिद्धिरिति भाव । यत्तु पूर्वपदार्थ-

तस्माद् अब्राह्मण इत्यादौ आरोपितब्राह्मणत्ववान् क्षत्रियादिरिति बोधः

---

नन्वेवमपि सर्वपदार्थं एवान्यसम्बन्धस्य सत्त्वेन अन्ययोगव्यवच्छेदाऽप्रसिद्ध्या विशिष्टे शक्त्यसंभवात् अन्ययोगे व्यवच्छेदे च खण्डशः शक्त्या अन्ययोगप्रतियोगिकव्यवच्छेदत्वाऽवच्छिन्नधर्मितानिरूपिताऽन्ययोगनिष्ठप्रकारताया आधाराधेयभाव्यप्रतियोगितानिरूपकत्वसम्बन्धाऽनवच्छिन्नत्वेन एवशब्दनिष्ठशक्तिभास्यसम्बन्धाऽनवच्छिन्नत्वसत्त्वेन स्वविशिष्टतया तदवच्छेदकत्वेन अन्ययोगत्वस्य प्रवृत्तिनिमित्तत्वं न स्यात्, इति प्रवृत्तिनिमित्ततदाश्रयाऽतिरिक्ताऽन्ययोगत्वस्य बोधनादेव शब्दात्प्रथमाऽनाऽऽपत्तिरितिचेत्—सत्यम्, एवशब्दादुपस्थितस्यान्ययोगव्यवच्छेदोऽन्वये पुनरपि अन्ययोगव्यवच्छेदाऽप्रसिद्धिरेव। तस्मात् 'पार्थ एव धनुर्धर' इत्यादौ एव शब्दार्थैकदेशे भेदे (अन्यत्वे) स्वप्रतियोगिकत्वसम्बन्धेन पार्थादिपदार्थस्याऽन्वयं कृत्वा पार्थप्रतियोगिकभेदवत्प्रतियोगियोगत्वाऽवच्छिन्नस्य प्रतियोगितानिरूपकत्वसम्बन्धेन व्यवच्छेदेऽन्वय कार्यं। 'पार्थप्रतियोगिकभेदवत्प्रतियोगिकतादात्म्यसम्बन्धाऽभाववान् धनुर्धर' इति बोधात्। तथा च पार्थाऽन्यप्रतियोगिकतादात्म्यसम्बन्धाऽभावो धनुर्धरे प्रसिद्ध्यति। एवञ्च व्यवच्छेदत्वाऽवच्छिन्नधर्मितानिरूपिता प्रतियोगितानिरूपकत्वसम्बन्धाऽवच्छिन्ना अन्ययोगनिष्ठप्रकारता परम्परया पार्थत्वाद्यवच्छिन्नाऽपि। प्रवृत्तिनिमित्तलक्षणे च स्वविशिष्टप्रकारतायां स्वेतरपदप्रतिपाद्यताऽवच्छेदकधर्माऽनवच्छिन्नत्वेनाऽपि वैशिष्ट्यं निवेश्यते। अन्ययोगत्वाऽवच्छिन्ना च प्रकारता परम्परया पार्थत्वाऽवच्छिन्नत्वेन स्वविशिष्टा नास्तीति तदवच्छेदकेऽन्ययोगत्वे नाऽव्याप्तिरिति सर्वमवदातम्। तथा च—स्वविशिष्टत्व स्वप्रवृत्तिनिमित्तत्वम्। वै० च-स्ववाच्यत्व, स्ववाच्यनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताऽऽश्रयत्व, स्वविशिष्टप्रकारताऽनवच्छेदकत्वैतत्रितयसम्बन्धेन। सम्बन्धघटकवैशिष्ट्य च—स्वप्रयोज्यधर्मितानिरूपितत्व, स्वनिष्ठशक्तिभास्यसम्बन्धाऽनवच्छिन्नत्व, स्वेतरपदप्रतिपाद्यताऽवच्छेदकधर्माऽनवच्छिन्नत्वेतित्रितयसम्बन्धेनेति लक्षणं पर्यवसितमिति प्राहुः।

तस्मात्—पर्युदासनञ आरोपविषयताबोधकत्वात्। क्षत्रियादिरितिबोध इति—आरोपितब्राह्मणत्ववत्त्वेन क्षत्रियादेर्बोधो नतु क्षत्रियादित्वेनाऽपि, यथाऽन्द

अत एवोत्तरपदार्थप्राधान्य नञ्तत्पुरुषस्येति प्रवादस्सङ्गच्छते। अत एव चासमै ब्राह्मणाय अस शिव इत्यादौ सर्वनामकार्य्यम्। अन्यथा गौण त्वान्न स्यात्। प्रवृत्तिनिमित्तारोपस्तु सदृशे एव भवतीति पर्य्युदास सदृश ग्राही "इति प्रवाद। पर्य्युदासे निषेधस्त्वार्थ। अन्यस्मिन्नन्यधर्मारोपस्तु आहार्य्यज्ञानरूप'। बाधकालिकमिच्छाजन्य ज्ञानमेवाहार्य्यमिति वृद्धा। सादृश्यादयस्तु प्रयोगोपाधय, पर्य्युदासे त्वार्थिकार्था। तदुक्त हरिणा—

त्वादिति ध्येयम्। अत एवेति—पर्युदासनञस्तद्द्योतकत्वादेव। अत एव चेति पर्युदासनञ आरोपविषयताद्योतकत्वेनोत्तरपदार्थस्य प्राधान्यादेव चेत्यर्थ। अन्यथेति—पर्युदासनञ आरोपविषयताद्योतकत्वाभावे दर्शितभाष्यरीत्योत्तरपदार्थप्राधा"पाऽसम्भवेन दर्शितभाष्याशयरीत्या पूर्वपदार्थान्यपदार्थप्राधान्याभ्युपगम इत्यर्थ। गौणत्वादिति—इतरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताऽवच्छेदकताप्रयोजकत्वादित्यर्थ। न स्यादिति—वार्तिककृता "सञोपसर्जनप्रतिषेध" इति प्रतिषेधारम्भात्, भाष्यकृता च सर्वनामसज्ञाया 'अथवा महतीयं सज्ञा क्रियते' इत्यादिना अन्वर्थसज्ञात्वाऽऽश्रयणादितिभाव। सदृश एव भवतीति—"अत्राब्राह्मणमानयेत्युक्ते ब्राह्मणसदृश एवानीयते, नाऽसौ लोष्टमानीय कृती भवति" इति 'भृशादिभ्य' इतिसूत्रस्थ भाष्यमत्र मूलम्। प्रसङ्गादारोपशब्दार्थमाह—अ"यस्मिन्निति।

बाधकालिकमिति-बाधनिश्चयकालिकमित्यर्थ। इच्छाजन्यमिति-इच्छा च तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वप्रकारिका ग्राह्या। तथा च—यत्किञ्चिद्धर्मविशिष्टज्ञानमाहार्यज्ञानम्। वै० च—स्वाऽभाववत्त्वप्रकारकनिश्चयविशिष्टत्वस्वाऽभाववन्निष्ठविशेष्यतानिरूपितस्वनिष्ठप्रकारताशालिज्ञानत्वप्रकारकेच्छाज"यत्वोभयसम्ब"धेन। सम्ब"धघटकवैशिष्ट्यञ्च स्वसामानाधिकरण्यस्वाऽ"यवहितोत्तरकालिकत्वसम्ब"धाभ्याम्, यत्र बाधनिश्चयाऽभावे सति 'घटे पटज्ञान जाय तामि'तीच्छोत्तर घटे पटज्ञान जात तादृशे भ्रमविशेषेऽतिव्याप्तिवारणाय आद्यम्। तादृशनिश्चयसमानाधिकरण तादृशनिश्चय"यवहितोत्तरकालिके प्रमात्मकज्ञानेऽति व्याप्तिवारणाय अन्त्यम्। अन्यत्स्पष्टम्। यथा माणवके 'सिंह' इति ज्ञान यथा वा मुखे 'चन्द्र' इति ज्ञानम्। इदमेव तु रूपकाऽलङ्कारस्य बीजमिति स्मरणीयम्।

सादृश्यादयस्तु इति—तु पूर्वोक्तार्थाद्भिन्नत्वसूचक। उक्तारोपविषयत्वाऽर्थः

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥ इति ।

तत्सादृश्यम् गर्दभेऽनश्वोऽयमित्यादौ । अभावस्तु प्रसज्यप्रतिषेधे वक्ष्यते, तदन्यत्वम् अमनुष्यं प्राणिनमानयेत्यादौ । तदल्पत्वम् अनुदरा कन्या इत्यत्रार्थात्स्थूलत्वनिषेधेनोदरस्याल्पत्वं गम्यते । अप्राशस्त्यं प्राह्मणे अब्राह्मणोऽयमिति प्रयोगे । विरोधः असुरः अधमः इति प्रयोगे । पर्युदासस्तु स्वसमभिव्याहृतपदेन सामर्थ्यात्समस्त एव । क्वचित्तु "यजतिषु येयजामहं करोति नानुयाजेषु" इत्यादौ घटः अपटो भवतीत्यर्थके घटो न पटः इत्यादौ च समासविकल्पादसमासेऽपि । अत्राऽन्योन्याभावः फलितो भवति । प्रसज्यप्रतिषेधस्तु समस्तोऽसमस्तश्चेति द्विविधः । तत्र विशेष्यतया क्रियान्वयनियमात्पुवन्त्वेनासामर्थ्येऽपि असूर्यंललाट

---

शब्दवृत्त्या लभ्यते, सादृश्यादयस्त्वर्थवृत्त्या लभ्यन्त इति भावः । प्रयोगोपाधयः इति अर्थनिष्ठवृत्त्या लभ्या इत्यर्थः । तदेव स्पष्टीकरोति—आर्थिकाऽर्था इति । सादृश्यादयः इत्यादिग्रन्थप्रमाणान् विवृणोति तदुक्तमित्यादिना । नञर्थाः षडिति—अत्र पञ्चाऽर्थाः पर्युदासनञः, अभावस्तु प्रसज्यनञः इति विवेकः । पञ्चाऽमी आर्थिकाऽर्थाः अभावस्तु प्रसज्य-नञः शब्दार्थ एव वेदनीयः । तत्राऽपि सादृश्यमेव व्यापकम् । अत एवोक्तमुपरिष्टात् 'सदृश एव भवती'ति, 'सदृशमाही'ति च ।

यजतिषु इति—यजतिशब्दो यागसामान्यवचनः, अनुयाजशब्दो यागविशेषवचनः, पञ्च प्रयाजाः, त्रयोऽनुयाजाः इति दर्शनात् । येयजामहशब्दः अत्र आद्यजन्तत्वेन 'येयजामहे' शब्दपठितमन्त्रवचनः । करोतिश्चोच्चारणवचनोऽत्र । तथा च—आरोपिताऽनुयाजत्वविशिष्टेषु (अनुयाजभिन्नेषु) यागेषु येयजामहशब्दवन्तं मन्त्रमुच्चारयति दीक्षित इति बोधः । पर्युदासपाठादेवाऽनेकविधार्थकत्वरूपैकवाक्यत्वम् । अन्यथा विधिनिषेधोभयविधाने वाक्यभेदापत्तिर्गौरवं स्यात् । *अपटो भवति = आरोपितपटत्ववान् भवतीत्यर्थः । फलित इति—शाब्दो-पंक्ति* नञोऽपि आरोपविषयत्वमेवेति भावः ।

प्रसज्यप्रतिषेधस्तु इति—प्रसज्य (क्रियागुणौ विधाय) प्रतिषेधतीति पचाद्यजन्तोऽयं शब्दः । तत्र—तयोः समस्ताऽसमस्तयोर्मध्ये इत्यर्थः ॥ विशेष्य

योरित्यादिज्ञापकात्समासः । तदुक्तम्—

प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ् ॥ इति ।

अत्र क्रियापदं गुणस्याप्युपलक्षणमिति बोध्यम् । अत एव नञ्सूत्रे भाष्ये "प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं करोति" इत्युक्तम् । उदाहरणम्—

---

तयेति—अत एव अहं नास्मीत्यादौ पुरुषवचनव्यवस्थोपपत्तिरित्यनुपदमेव वक्ष्यति । क्रियाऽन्वयनियमादिति—अत्र क्रियापदं गुणस्याऽप्युपलक्षणमित्यग्रे स्फुटीभविष्यति । सुबन्तेनाऽसामर्थ्येऽपि—सुबन्तेन सामर्थ्येऽपि भाष्योक्तोत्तरपदार्थप्राधान्यस्य भङ्गापत्तिर्बोध्या । इत्यादिज्ञापकादिति—असूर्यंपश्या इत्यस्य सूर्यं न पश्यन्तीत्यर्थबोधेन नञः क्रियायामन्वयेन सूर्यपदार्थेऽन्वयाऽभावात् परस्परसम्बन्धाऽभावेनैकार्थीभावाऽभावात् असूर्यशब्दे समासस्यैव दुर्लभत्वे तस्मिन्नुपपदे सति खश्विधानोक्तिरसङ्गतैवेति सूत्रप्रवृत्तिरसूर्यशब्दे समासं ज्ञापयत्येवेति भावः । अत एव—प्रसज्यनञः क्रियागुणयोर्निषेधबोधकत्वादेवेत्यर्थः । नञ् सूत्रे भाष्ये-तत्र हि-अनेकशब्दं प्रक्रम्य—"कथं पुनरेकस्य प्रतिषेधेन द्विबहूनां सम्प्रत्ययः स्यात् ?" [ ज्ञापकात्प्रसज्यप्रतिषेधेऽपि नञ्समासस्य जायमानत्वेन प्रसज्यप्रतिषेधाऽऽश्रयणेनैकदेशी शङ्कते—अनेकमितिशब्देन 'एकं ने'त्येव प्रतीतेर्द्विबहूनां प्रतीतिर्न स्यादित्यर्थः । सिद्धान्ते पर्युदासपक्षे तु 'अनेक'शब्देन द्विबहूनां प्रतीतिः सुलभैव, द्व्यादिष्वेकत्वारोपात् । तत्र द्वित्व्यादिनिर्णयस्तु तात्पर्यवशादिति बोध्यम् । आरोपितैकत्ववत्त्वेनैव बोधाच्चैकवचनसिद्धिः । एवञ्चाऽनेके इति बहुवचनमसाध्वेवेति मञ्जूषायामत्र च पूर्वत्र विस्तरः । ]

एकदेशिनः प्रसज्यप्रतिषेधाश्रयणेन शङ्कायाम् अभ्युपेत्यवादेनैव प्रसज्यप्रतिषेधार्थमपि निर्णेतुं सिद्धान्ती समुत्तरयति—'प्रसज्याऽयं क्रियागुणौ ततः पश्चान्निवृत्तिं करोति इति । तद्यथा—आसय, शायय, भोजय । अनेकमिति ।" ( आसन, शायन, भोजनानि विधाय पश्चादनेकमित्यनेन एकं न आसयेत्यादिक्रमेण एककर्मकासनादिक्रियाया निषेधः क्रियते । अनेकशब्देन गुणनिषेधे उदाहरणम्—रूप, रसो, गन्ध, अनेकस्मिन्निति । अत्र रूपादिविधानोत्तरमेकाधिकरणकरूपादिगुणानां निषेध इति तात्पर्यम् । यद्यप्येवं घटः पटो मठ इत्यादि द्रव्याणि विधायाऽपि अनेकस्मिन्नित्यनेन तादृङ्निषेधः कर्तुं शक्यते, तथापि

नास्माकमेकं प्रियमिति । एकप्रियप्रतिषेधे बहुप्रियप्रतीतिः । एवं 'न सन्देह नोपलब्धि' इत्याद्युदाहरणं गुणस्य सन्देहादीनां गुणत्वात् । क्रियोदाहरणम् 'अनघि च' 'गेहे घटो नास्ति' इत्यादि तस्य समस्तस्य तु अत्यन्ताभाव एवार्थः । असमस्तस्य तु अत्यन्ताभावोऽन्योन्याभावश्च ।

---

तद्भाष्यप्रामाण्यात् शब्दशक्तिस्वाभाव्यात् एकस्मिन् घटो नेत्यादौ घटीयसत्ताया ( क्रियाया ) एव निषेध प्रत्येतव्य । तत्र निरुभययोश्च गुणक्रिययोरसंभवादनियतसङ्ख्यद्रव्याक्षेपे सति एकप्रतिषेधाद् बहूनां प्रतीतिरिति उत्तरम् । प्रसज्याऽयमिति भाष्येण प्रसज्यप्रतिषेधनञ्पदार्थस्य निर्णय इति स्पष्टं लभ्यते इति तत्त्वम् । ) "यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्र क्रियागुणौ प्रसज्येते । यत्र तु खलु पुनर्न प्रसज्येते तत्र कथम्—'अनेकं तिष्ठती'ति ? ( यत्र तु पूर्वमेव प्रतिषेध पश्चात्क्रियागुणविधानं तत्र कथं बहूनां संप्रत्यय ? तत्र पूर्वं क्रियोपस्थित्यभावात् अनियतसङ्ख्यद्रव्याक्षेपाऽभावेनैको न तिष्ठतीत्येवबोधपर्यवसानादिति भावः । ) "भवति चैव जातीयकानामप्येकस्य प्रतिषेधेन बहूनां सम्प्रत्यय , तद्यथा—'न न एकं प्रियम्', 'न न एकं सुख'मिति ।" [ आख्यातस्य पश्चात्प्रयोगोऽस्तु पूर्वं वा, धात्वर्थेन तावत्कारकस्याक्षेपोऽवश्यंभावीति तत्रैकप्रतिषेधसामर्थ्यादेव द्वित्वादियोगिसाधनाक्षेपः, अन्यथा 'न प्रियमि'त्येव वाच्यं स्यात् । तस्माद्यत्र वाक्येऽपि सामर्थ्यात्संख्यान्तरगतिर्भवति तत्र समासे वाक्यविलक्षणधर्मप्रादुर्भावहेतौ किं न भविष्यतीत्युक्तं भवति । न अस्माकमेकं प्रियं न, किन्त्वनेकमिति तदर्थ । स्पष्टमेवेदं कैयटोद्योतयो । ]

एकप्रियप्रतिषेध इति—अत्र एकस्य सङ्ख्यारूपो गुणस्तत्प्रतिषेधः, एवञ्च प्रिये एकत्वसङ्ख्याप्रतिषेधे पर्यवस्यति । न चास्तीतिपदाऽध्याहारादेकप्रियकर्तृकसत्ताया एव निषेध इति क्रियोदाहरणमेवैतदिति वाच्यम्, उक्तभाष्यप्रामाण्यात् गुणस्यैवाऽत्र निषेधाऽनुभव इत्याशयात् । तस्य समस्तस्य तु—तस्य = प्रसज्यप्रतिषेधनञ इत्यर्थं । असमस्तस्य तु—प्रसज्यप्रतिषेधनञ पर्युदासनञश्चेति शेषः । तथा च—असमस्तस्य प्रसज्यप्रतिषेधनञोऽत्यन्ताभावोऽर्थं, असमस्तस्य पर्युदासनञस्तु अन्योऽन्याऽभावश्चेति । चकारात् आरोपविषयत्वमिति योजना । घटो न पट इति तु असमस्तस्य पर्युदासनञोऽन्योऽन्याभावार्थकत्वे उदाहरणम् ।

तादात्म्येतरसम्बन्धाभावोऽत्यन्ताभावः । तादात्म्यसम्बन्धाभावोऽन्योन्याभावो भेद इत्यर्थः । असूर्यंपश्या राजदारा, गेहे घटो नास्ति, घटो न पट इत्युदाहरणानि । प्रागभावप्रध्वंसाभावौ तु न नञ्द्योत्यौ ।

तत्रात्यन्ताभावो विशेष्यतया तिङन्तार्थक्रियान्वय्येव । नञर्थात्यन्ताभावविशेष्यकबोधे तिङ्समभिव्याहृतधातुजन्योपस्थितेः कारणत्वात् ।

---

अन्योऽन्याभावोऽप्यत्र फलितार्थ एव, शाब्दस्तु आरोपविषयत्वमेवेति विशेषोऽवसेयः । तेन प्रसज्यप्रतिषेधनञः पदार्थनिर्णायकेण उक्तभाष्येण, घटो न पट इत्यादाविति स्वीयपूर्वग्रन्थेन च विरोधो न भवतीति दिक् । एवञ्च—पर्युदासत्वम्—आरोपविषयताद्योतकत्वम् । प्रसज्यत्वञ्च—क्रियागुणाऽन्यतरप्रतियोगिकाऽत्यन्ताऽभावद्योतकत्वमिति लक्षणं द्रष्टव्यम् । तादात्म्येतरेति—तादात्म्येतरसम्बन्धाऽवच्छिन्नप्रतियोगिताकोऽभावोऽत्यन्ताऽभावः, तादात्म्यसम्बन्धाऽवच्छिन्नप्रतियोगिताकोऽभावोऽन्योऽन्याऽभाव इत्यर्थः ।

असूर्यंपश्या इति—सूर्यकर्मकदर्शनप्रतियोगिकाभाववन्तो राजदारा इति शाब्दबोधः । गेहे घटो नास्तीति—गेहाधिकरणकघटकर्तृकसत्ताऽभाव इति बोधः । घटो न पट—आरोपितपटत्ववान् घट इति शाब्दबोधे घटत्वाऽवच्छिन्नप्रतियोगितानिरूपकभेदविशिष्टो घट इत्यन्योऽन्याऽभावः फलितो भवतीति द्रष्टव्यम् ।

प्रागभावेत्यादि—'इह घटो भविष्यति' इति प्रतीतिसाक्षिकः प्रागभावः, 'इह घटो नष्टः' इति प्रतीतिसाक्षिकः प्रध्वंसाऽभावः । इमौ नञा नाऽभिलप्येते स्वभावात् । अतएव ध्वंसप्रागभावयोर्नाऽत्यन्ताऽभावविरोधित्वमिति प्रक्रम्य रक्तिमध्वंसप्रागभाववति अन्तराश्यामे घटे 'रक्तं रूपं नास्ती'ति प्रत्ययस्याऽत्यन्ताऽभावाऽवगाहित्वमेव सिद्धान्तितं दीधितिकृता—"न चैवं रक्तिमध्वंसावगाही, पूर्वापररक्तिमध्वंसप्रागभाववति (इदानीं) रक्तेऽपि तथाप्रत्ययप्रसङ्गात्" इत्यन्तेन व्यधिकरणग्रन्थेन । तत्रेति—अत्यन्ताऽभावाऽन्योऽन्याभावयोर्मध्ये इत्यर्थः, निर्धारणे सप्तमी । तिङन्तार्थक्रियेति—अत्राऽपि गुणस्य प्रवेशः पूर्वोक्तभाष्यानुरोधात् । कारणत्वादिति—नञर्थाऽत्यन्ताऽभावत्वाऽवच्छिन्नविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबुद्धित्वाऽवच्छिन्नं प्रति भावनात्वगुणत्वाऽन्यतरधर्माऽवच्छिन्नविशेष्यतासम्बन्धेन तिङ्समभिव्याहृतधातुगुणवाचकपदाऽन्यतरजन्यो

तथा च घटो नास्तीत्यादौ घटकर्तृकसत्ताप्रतियोगिकोऽभाव इतिबोधः। अत एवाह नास्मि त्वं नासीत्यादौ घटौ नस्तो घटा न सन्तीत्यादौ च पुरुषवचनव्यवस्थोपपद्यते। अन्यथा युष्मदादेस्तिङ्सामानाधिकरण्याभावात् मदभावोऽस्तीत्यादाविव सा न स्यात्। असन्देह इत्यादौ तु आरोपितार्थकनञैव समासः। अत्यन्ताभावस्तु फलित एव। वायौ रूपं नास्तीत्यत्र तु तात्पर्यानुपपत्त्या रूपप्रतियोगिकात्यन्ताभावे लक्षणा, तेन वाय्वधिकरणिका रूपाभावकर्तृका सत्तेति बोधः। वस्तुतस्तु समनियता

---

परिस्थितेः कारणत्वादित्यर्थः। अत एव—नञर्थाऽत्यन्ताभावस्य क्रियागुणौ प्रति विशेष्यत्वेन बोधादेव। नन्वेवम् 'असन्देह' इत्यादिसमासेऽपि अभावविशेष्यक प्रतीत्युत्तरपदार्थप्राधान्यात्मकभाष्यसिद्धान्तस्य भङ्गापत्तिरित्यत आह—असन्देह इत्यादाविति। आरोपितार्थकनञैवेति—तथा च नाऽयं प्रसज्यप्रतिषेधः किन्तु पर्युदास एवेति भावः। ननु वायौ रूपं नास्तीत्यत्र अस्तीत्यंशाऽस्ति तात्पर्याऽन्वयित्वस्य सत्त्वेऽपि तादृशप्रकारताश्रयधन शाब्दबोधस्याऽसिद्धत्वेन प्रोक्तकार्यकारणभावेऽन्वयव्यभिचारः, रूपाऽभावकर्तृकसत्ताया एव विशेष्यत्वबोधादित्यत आह—वायौ रूपं नास्तीति। तात्पर्यानुपपत्त्येति—रूपाऽभावप्रकारकबोधस्यैव तात्पर्यविषयत्वादिति भावः। लक्षणेति—रूपपदस्य रूपप्रतियोगिकाऽत्यन्ताऽभावे लक्षणा, नञ्पदञ्च तात्पर्यग्राहकम्। तथाचोक्तकार्यकारणभावीयकारणताऽवच्छेदककोटौ नञर्थस्य प्रवेशावश्यकत्वेन प्रकृते नञो निरर्थकत्वेन न कारणताऽवच्छेदकाऽक्रान्तिरिति नास्ति व्यभिचारः। तथा च वाचकनञ्समभिव्याहृतेति विशेषणं कारणताऽवच्छेदके पूरणीयम्। इदं तु बोध्यम्—नञो वाचकतावादिनो मतानुरोधेनेदं सर्वम्। द्योतकतावादिनां सिद्धान्ते तु नञर्थस्य पृथगनुपस्थित्याऽन्वयव्यभिचाराऽसङ्गतिरेवेति। लक्षणाऽऽश्रयणे गौरवादाह—वस्तुतस्तु इति। समनियताऽभावेति—सामनियत्यञ्च—स्वव्यापकत्वे सति स्वव्याप्यत्वम्, न्यूनाऽनतिरिक्तवृत्तित्वमिति यावत्। समनियताऽभावानामैक्यमिति हि केषामपि मतम्। रूपसत्ताऽभावस्य रूपाभावसामनियत्येन तदैक्ये रूपाऽभावकर्तृकसत्तेति बोधः फलितार्थ एव, शाब्दस्तु कार्यकारणभावाऽनुरोधेन रूपकर्तृकसत्ताऽभाव इत्याकारक एव। इदं यथाश्रुतकार्यकारणभावाऽभिप्रायेण। "प्रसज्याऽयं क्रियागुणौ" इति-

भावैक्यमाश्रित्य फलितार्थ एवायम्, अरूपमस्तीत्यर्थकं वा तत्। एवेनात्यन्ताभावप्रकारकक्रियाविशेष्यको बोध इति तार्किकोक्तमपास्तम्।

नन्वेवं घटसत्तारूपोऽर्थः प्रथमं बुद्धो नञा निवर्तयितुमशक्यः, सतो निषेधायोगादसतस्त्वसत्त्वादेव निवृत्तिः सिद्धा निषेधो व्यर्थः। तदुक्तम्—

सता च न निषेधोऽस्ति सोऽसत्सु च न विद्यते।

जगत्यनेन न्यायेन नञर्थः प्रलयं गतः॥ इति चेन्न।

बौद्धो हि शब्दो वाचकः बौद्ध एवार्थो वाच्य इत्युक्तत्वात् बुद्धिसतोऽप्यर्थस्य नञा बाह्यसत्तानिषेधात्। बुद्धो सन्नपि घटो बहिर्नास्तीत्यर्थात्। न च घटास्तिपदाभ्यां या घटविषयाऽस्तित्वबुद्धिर्जाता सा नञा निवर्त्यते किं बौद्धार्थस्वीकारेणेति वाच्यम्। बुद्धेरशब्दवाच्यत्वेन नञा तन्निषेधायोगात्। एतेन बौद्धार्थमस्वीकुर्वन्तो नञर्थबोधाय कष्टकल्पना

---

भाष्यानुरोधेनोक्तकार्यकारणभावे गुणस्य प्रवेशे तु वायौ रूपं नास्तीत्यत्र तादृशान्य तरत्वस्य गुणे क्रियायाञ्चोभयत्र सत्त्वेन व्यभिचारस्य दुर्वारत्वेनोक्तरीत्या लक्षणाऽ प्रसिद्धा शक्तिर्वाऽऽश्रयणीयैवेति द्रष्टव्यम्। इत एवाऽपरितोषादाह-अरूपमस्तीति।

आसमस्तीत्यर्थकं वा तत्—अस्य 'वायौ' इत्यादि। तत्=वायौ रूपं नास्तीति वाक्यम्। अरूपमिति समासस्य वैकल्पिकत्वेन तदभावपक्षे वाक्यमिदम्। ततश्च पर्युदासनञेवात्र। आरोपितरूपत्ववद्वाय्वधिकरणकस्पर्शादिकर्तृकसत्तेति शाब्दबोधे वायौ रूपाऽभावबोधः फलितार्थ एवेति तात्पर्यम्।

"नाऽसतो विद्यतेऽभावो नाऽभावो विद्यते सतः" इति गीताप्रदर्शितसाङ्ख्योक्त सत्कार्यवादसिद्धान्तरीत्या शङ्कते—नन्वेवमिति। एवम्=तिङन्तार्थप्रकारकनञर्थविशेष्यकशाब्दबोधाङ्गीकारे इत्यर्थः। इत्युक्तत्वादिति—स्फोटवादे शक्तिवादे चेत्यादि। स्वप्नाद्यनुरोधेन च बौद्धपदार्थस्याऽऽवश्यकत्वात्। बुद्धेः शब्दाऽवाच्यत्वेनेति—स्वसमभिव्याहृतपदार्थनिष्ठप्रतियोगिताकमेवाऽभावं नञ् बोधयति शब्दस्वाभाव्यात्। न हि घटोऽस्तीतिशब्दवाच्या घटविषयाऽस्तित्वबुद्धिः। तस्मान्नञ् तद्बुद्धेरभावं बोधयितुमक्षम एव, घटसत्ताबुद्धिर्नेत्यनेनैव शब्देन तादृग्बुद्धेरभावस्य बोधयितुं शक्यत्वात्, प्रसज्याऽयं क्रियागुणावित्यादिभाष्येण शब्दजन्य बुद्धिविषयीभूतयोः क्रियागुणयोरेव नञा प्रतिषेधस्य बोधनादिति भावः। एतेन=

कुर्वन्वस्तार्किकाः परास्ताः । घटो न पट इत्यत्र घटपदस्य घटप्रतियोगिक भेदाश्रये अप्रसिद्धा शक्तिरेव लक्षणा, नञ्पदं तात्पर्यग्राहकम् । तात्पर्यग्राहकत्वं द्योतकत्वमेवेत्युक्तम् । अत एवान्योन्याभावबोधे प्रतियोग्यनुयोगिपदयोः समानविभक्तिकत्वं नियामकमिति वृद्धोक्तं सङ्गच्छते । यत्तु घटपदं घटप्रतियोगिके लाक्षणिकं नञ्पदन्तु भेदवति । अतो घटप्रतियोगिकभेदवान्पट इति बोध इति तार्किकैरुक्तम् । तन्न । भेदवति नञर्थे भेदस्यैकदेशत्वात् तत्र घटार्थानन्वयापत्तेः । 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति न्यायात् । पदद्वये लक्षणास्वीकारे गौरवाच्च । भाष्यमते लक्षणाया निपातानां वाचकत्वस्य च स्वीकाराभावादिति संक्षेपः ।

---

शुद्धे शब्दाऽवाच्यत्वेन नञा तन्निषेधस्याऽयोगेन । कष्टकल्पनाम्=शुद्धेरेव निषेधरूपामनन्तरोक्ताम् । परास्ता इति—शशशृङ्गादिपदानां शक्याऽर्थाऽभावेन प्रातिपदिकत्वाऽनापत्तेश्चेति निरूपितपूर्वम् ।

घटो न पट इत्यत्रेति—प्राचीनशाब्दिकमतनाशनयेदं वर्णयति । स्वमते तु समासविकल्पात् अपटो भवतीत्यर्थकं सत्, पर्युदासनञा आरोपितघटत्ववान् घट इति शाब्दबोधात् । अत एव न स्वपूर्वग्रन्थेन व्याघातः । तद्ध्वनयन् वक्ष्यति—वृद्धोक्तं सङ्गच्छत इति । अत एव=लक्षणया पर्युदासन्यायेन वा प्रतियोग्यनुयोगिनोः सामानाधिकरण्यस्योपपादनादेव । समानविभक्तिकत्वमिति—तच्च स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम् । विभक्तिश्च सुबेवात्र । साजात्यञ्च विभक्तिविभाजकधर्मात्मद्वितीयात्वादिना, न तु समानानुपूर्वीकत्वं साजात्यम्, मातुर्धातुरयो नेत्यादिभेदस्याऽपि दृष्टत्वात् । पदार्थः पदार्थेनेति—यत्किञ्चित्पदजन्यप्रतीतिविशेष्यत्वाश्रयनिष्ठप्रकारतानिरूपितविशेष्यतासंसर्गेण शाब्दबुद्धित्वाऽवच्छिन्नं प्रति विशेष्यतासंसर्गेण स्वेतरपदजन्योपस्थितेः कारणत्वमिति कार्यकारणभावमूलकोऽयं न्यायः । अयं न्यायो नञर्थाऽतिरिक्तविषय इति कल्पने तु गौरवम् । ननु नित्यसापेक्षस्थले नाऽयं न्यायो व्यवस्थापकः, अत एव चैत्रस्य गुरुकुलम् इत्यादावेकदेशेऽप्यन्वय इष्यते इत्यपरितोषादाह—पदद्वय इत्यादि ।

भाष्यमते लक्षणाया इत्यादि—"सर्वे सर्वार्थवाचकाः" इति भाष्येण सर्व

एवशब्दस्यार्थोऽवधारणमसम्भवश्च । 'एवे चानियोगे' इति वार्तिके नियोगोऽवधारणम् । तदभावोऽसम्भव इति कैयटोक्ते । अनयोरर्थयोरेव शब्दो द्योतक । अत एव त विनापि तदर्थप्रतीति । 'सर्वं वाक्य सावधारणमिति वृद्धोक्त सङ्गच्छते । लवणमेवासौ भुङ्क्ते इत्यादौ प्राचुर्यार्थकस्य घट एव प्रसिद्ध इत्यादावप्यर्थकस्य क्वेव भोक्ष्यसे इत्यादावसम्भवार्थकस्य च तस्य सत्त्वमित्यालङ्कारिका ।

तच्चावधारण त्रिविधम् । विशेष्यसङ्गतैवकारेऽन्ययोगव्यवच्छेदरूप, विशेषणसङ्गतैवकारेऽयोगव्यवच्छेदरूप, क्रियासङ्गतैवकारेऽत्यन्तायोग

---

याया स्वीकाराऽभाव "नञिनिमित्ता तूपलब्धि प्रदीपवत्" इत्यादि भाष्येण च निपाताना वाचकत्वस्य स्वीकाराऽभावो ग्रहत इति सक्षेप । प्रसङ्गादिदमत्र ज्ञातव्यम्—अत्यन्ताऽभावस्य स्वप्रतियोगिना सह विरोधो (एकत्राऽनवस्थिति) भवति, अन्योन्याभावस्य तु स्वप्रतियोगिताऽवच्छेदकेन । अप्रसिद्धप्रतियोगिकाऽभावस्य नाङ्गीकार । सामान्यधर्मेण विशेषाऽभावो विशेषधर्मेण सामान्याऽभाव, व्यधिकरणधर्माऽवच्छिन्नप्रतियोगिकाऽभावो व्यधिकरणसम्बन्धाऽवच्छिन्नप्रतियोगिकाऽभावश्चेति पक्षा सन्तीत्यलम् ।

निपातप्रसङ्गादाह—एवेति । अत एव = द्योतकत्वादेव । सर्ववाक्यमिति—सर्वम् = एवशब्दघटितम्, एवशब्दाऽघटितञ्चेत्यर्थ, न तु सर्वमेव वाक्य लौकिक वैदिकञ्चेत्यर्थ । तथा सति अपूर्वविधेरुच्छेद एव स्यात् । इदन्तु अवधारण नियम परिसङ्ख्याऽन्यतररूपमिति व्याख्यामादृत्य बोध्यम् । यदि तु अवधारण स्वीयोद्देश्यताऽवच्छेदकव्यापकविधेयकत्वरूप यण स्थाने इक्भवत्येवाऽचीत्यादिरूप विधिसाधारण तर्हि सर्वम् = एवशब्दघटित तद्भिन्नञ्च यावदेव लौकिक वैदिकञ्च वाक्यमिति यथाश्रुतमेव रमणीयम् । इतिवृद्धोक्तमिति—अत्र "अथवा सन्त्येकपदान्यप्यवधारणानि । तद्यथा—'अब्भक्षो वायुभक्ष' इति । अप एव भक्षयति, वायुमेव भक्षयतीति गम्यते । एवमिहापि सिद्ध एव न साध्य इति ।" इति पस्पशाह्निकस्थ महाभाष्यमेव मूलमिति द्रष्टव्यम् । एकपदान्यपीत्यस्य एवशब्दरहितान्यपीतिभाव इति स्पष्ट कैयटे ।

विशेष्यसगतेति—विशेष्यवाचकपदसंगतेतिक्रमेणाऽर्थ । इति बोध इति—

व्यवच्छेदरूपम् । विशेष्ये—पार्थ एव धनुर्धरः । पार्थेतरावृत्ति यद्धनुर्धरत्वं तादृशधनुर्धरत्ववान् पार्थ इति बोधः इत्यन्यस्मिन्धनुर्धरत्वसम्बन्धव्यवच्छेदः । विशेषणे—शङ्खः पाण्डुर एव । अयोगः सम्बन्धाभावः तस्य व्यवच्छेदो निवृत्तिः द्वाभ्यां निषेधाभ्यां प्रकृतार्थदार्ढ्यबोधनेन अव्यभिचरितपाण्डुरत्वगुणवान् शङ्ख इति बोधः इत्ययोगव्यवच्छेदः । न तु नील इति तु फलति । क्रियायां नीलं सरोजं भवत्येव । अत्र योऽतिशयितोऽयोगः सम्बन्धाभावस्तस्य व्यवच्छेदोऽभावः । तथा च कदाचिन्नीलत्वगुणवदभिन्नं यत्सरोजं तत्कर्तृका सत्तेति बोधः । कदाचिदन्यादृशगुणसंयुक्तमित्यपि गम्यते इत्यत्यन्तायोगव्यवच्छेदः ।

---

केचित्तु—पार्थेतरप्रतियोगिकतादात्म्यसम्बन्धाऽभाववान् धनुर्धर इत्येव शाब्दाऽऽकारः । विशिष्टाऽप्रसिद्ध्या अन्ययोगे व्यवच्छेदे च खण्डशः शक्तिः । पार्थपदस्य च अन्यत्वाश्रयैकदेशेऽन्यत्वे स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धेनाऽन्वयः । यत्र पदेन तादात्म्यसम्बन्धस्याऽत्र ग्रहणम् । तस्य च व्यवच्छेदे स्वरूपेणाऽन्वयः । मूलोक्ताऽऽकारे तु पार्थपदस्य द्विः प्रवेशे गौरवम्, योगपदार्थे धनुर्धरत्वार्थैकदेशभूतधनुर्धरत्वस्यान्वयो दुरुपपादश्च । एवं शङ्खः पाण्डुर एवेत्यत्र पाण्डुरप्रतियोगिकतादात्म्यसम्बन्धाऽभावाऽभाववान् शङ्ख इति शाब्दाकारः । नीलं सरोजं भवत्येवेत्यत्र च नीलाऽभिन्नसरोजकर्तृका अतिशयितो यः सम्बन्धाऽभावस्तदभाववती सत्तेति शाब्दाकार इत्याहुः ।

परे तु एवकारोत्थमवधारणं ज्ञानविशेषः । स च एवसमभिव्याहृतपदार्थविशेषणम् । अवधारणञ्च 'पार्थ एव धनुर्धरः' इत्यादौ विशेष्यसंगतैवकारे स्वाऽतिरिक्ताऽवृत्तित्वसमभिव्याहृतपदार्थताऽवच्छेदकप्रकारकज्ञानम्—पार्थेतराऽवृत्तिधनुर्धरत्ववान्—इत्याकारम् । तच्च विशेष्यत्वेन पार्थे विशेषणम् । अवधारणविशिष्टः पार्थो धनुर्धर इति शाब्दबोधः । अन्यतात्पर्येण धनुर्धरत्वज्ञानवन्तं प्रति तद्भ्रमनिरासायैव प्रयोगादेतस्मात्तदन्यो धनुर्धरो नेति फलति । शङ्खः पाण्डुर एवेत्यादौ विशेषणसंगते स्वाऽव्यवच्छेदकाऽतिरिक्तधर्माऽनाश्रयसमभिव्याहृतपदार्थविशेष्यकज्ञानरूपम्—अवधारणप्रकारीभूतपाण्डुराऽभिन्नः शङ्ख इति शाब्दाकारः । क्रियासंगते चैत्रो पचत्येवेत्यादौ स्वाऽतिरिक्तवृत्तिधर्मानाश्रयसमभिव्याहृत

क्वचिदेवशब्दं विनापि नियमप्रतीतिः । तदुक्तं भाष्ये—अभक्ष्यो

पदार्थप्रकारकज्ञानरूपं तत्, न रोदितीति प्रतिनिर्देशात्। चैत्रकर्तृकोऽवधारण विशेष्यो ह्रास इति शाब्दः । एवं नीलं सरोजं भवत्येवेत्यादौ नीलभवनाऽभावानधिकरणसमभिव्याहृतपदार्थप्रकारकज्ञानरूपं तत्, 'न भवतीति नेति' प्रतिनिर्देशात्, नीलाऽभिन्नसरोजकर्तृकाऽवधारणविशेष्या सत्तेति शाब्दः । 'पञ्च पञ्चनखा भक्ष्याः' इत्यादौ अवधारणविषयबुद्धिस्थवृत्तिपञ्चत्वसङ्ख्यावदर्थे पञ्च पदस्य लक्षणा। अवधारणविषयीभूता ये बुद्धिस्थ शशकशल्लकीगोधाखड्गकूर्मवृत्ति पञ्चत्वसङ्ख्यावन्तस्तत्रेत्यर्थः । अवधारणञ्चाऽत्र स्वगतसङ्ख्याऽतिरिक्तसङ्ख्याऽधिकरणाऽसम्बन्धिसमभिव्याहृतपदार्थप्रकारकज्ञानरूपम्, ज्ञानविशेष्यमभक्ष्यत्व विशिष्टा पञ्च पञ्चनखा इत्याकारम्। अवधारणविशेष्या शशकादिवृत्तिपञ्चत्वसङ्ख्यावन्त पञ्चनखा भक्ष्या इति बोधः । अन्येऽन्ये अभक्ष्या इति फलति। कदाचित् स्पष्टतार्थं फलितार्थकप्रयोगोऽपि—यथा 'त्वन्मुखं त्वन्मुखेनैव तुल्यं नाऽन्येन केनचित्' इत्यत्र नाऽन्येन केनचिदिति। आर्थ्या वृत्त्या लब्धस्य शब्देन प्रतिपादने पौनरुक्त्यमावस्यालङ्कारिकैरपि स्वीकारात् । सकलसाधारणमवधारणत्वमखण्डोपाधिः । तेनैव रूपेण शक्तिः शाब्दबोधश्च। अत एव च व्यवच्छेदस्य शाब्दत्वाऽभावात् नियमस्थले विधिमुखेनैव प्रवृत्तिरित्युद्घोषो भाष्यतत्त्वविदाम्।

यत्तु एवकाराऽर्थोऽन्ययोगव्यवच्छेद इति। तन्न, पृथिव्यामेव गन्ध इत्यादौ पृथिवीपदार्थस्यैवकारार्थेऽन्यत्वे गन्धे चाऽन्वये पृथिव्याऽवृत्ति पृथिवीवृत्तिर्गन्ध इति बोधे पृथिव्यामितिसप्तमीविभक्त्यर्थरहितस्याऽपि पृथिवीपदार्थादेरन्वयस्य व्युत्पत्तिवैचित्र्यहेतुकत्वकल्पने गौरवात्। अनेकव्युत्पत्तिवैचित्र्यकल्पनस्याऽन्याय्यत्वाच्च। तादृशेऽर्थे विभक्तेः साधुत्वमात्रार्थिकाया शास्त्रेणाऽनन्वाख्यानाच्च। तस्मादेतस्य मूलं परमतवासनया, फलितार्थपरं वा नेयमितिदिक् इत्याहुः ।

क्वचिद्=यत्र प्रमाणान्तरेण पाक्षिकप्राप्तिकस्याऽर्थस्य पाक्षिकाऽभावनिवृत्तिफलक विधानम्, यत्र च प्रमाणान्तरेण सामान्ये (तत्र अयत्र च) प्राप्तस्यार्थस्य विशेषे पुनर्विधानम्, यत्र वा प्रमाणान्तरेण सामान्ये प्राप्तस्याऽर्थस्य विशेषांशनिषेधस्मृतिस्तत्रेत्यर्थः। एवशब्दं विनाऽपि—एवशब्दस्य द्योतकत्वादितिभावः ।

नियमप्रतीति = नियमपरिसङ्ख्याऽन्यतमप्रतीतिरित्यर्थ । यद्यपि यद्य माणरीत्या मीमांसका नियमपरिसङ्ख्ययोर्भेदमामनन्ति तथापि अन्यनिवृत्तिफ फलैक्यात् व्याकरणे परिसङ्ख्याया अपि नियमपदेन व्यवहार, "भक्ष्यनियमेन मक्ष्यप्रतिषेधो गम्यते—'पञ्च पञ्चनखा भक्ष्या' इत्युक्ते गम्यत एतदतोऽन्येऽमक्ष्य इति" इत्यस्मिन्पस्पशाभाष्ये मीमांसकाऽभिमतपरिसङ्ख्याया भक्ष्यनियमेनेति नियमत्वेन व्यवहारात् वस्तुतस्तु इतरनिवृत्तिफलक उपदेश एव नियमशब्देनोच्यते, 'अन्यतरोपदेशेन कृत स्यात् तद्यथा भक्ष्यनियमेने'त्यादिभाष्यग्रन्थमवलम्ब्यैव प्रतीतेरिति प्रामाणिका । किञ्च "अभक्ष्यप्रतिषेधेन वा भक्ष्यनियमः" इति तद मिमभाष्ये प्रतिषेधवाक्ये मीमांसकाऽभिमतनियम-परिसङ्ख्यापदार्थाऽसम्भवेन, विधिवाक्य एव तेषां तत्स्वीकारादिति दिक् ।

तत्रैवशब्दं विनाऽपि नियमप्रतीतेरुक्तेषु त्रिषु स्थलेषु आद्य यथा—व्रीहीन् अवहन्तीति । अत्र 'चरुनिमित्तं तण्डुला निष्पाद्याः' इति पुरोडाशविधिना यथेष्ट नखविदलनकण्डनावहननयोरन्यतरेण व्रीहीणां निस्तुषीकरणप्राप्तौ पाक्षिकप्राप्ति कस्यैवाऽवहननस्य विधानेन व्यर्थीभूतेन सामर्थ्यात् (अवहन्त्येव) अवहत्यैव न तु विदलेदिति' नियम्यते ।

यथा वा—समे यजेत इति । अत्र स्वर्गकामो यजेतेति यागविधिना यथा समविषमदेशयोरन्यतरस्मिन् यागस्य प्राप्तौ समे देशेऽपि पाक्षिकप्राप्तिकस्यैव यागस्य विधानेन व्यर्थीभूय सम एव यजेतेति नियम्यते । अत्र पूर्वत्र च न युगपदुभयप्राप्तिरसम्भवात्, किन्तु पाक्षिक्येव ।

द्वितीय यथा—पञ्च पञ्चनखा भक्ष्या इति । अत्र रागतो लौकिकप्रमाणात् शशकादिमांसभक्षणस्य श्वादिमांसभक्षणस्य च युगपत्प्राप्तौ पञ्चनखसामान्य प्राप्तस्यैव भक्षणस्य विशेषे पञ्चनख्यपञ्चके व्यर्थीभूतेन पुनर्भक्षणविधानेन पञ्चनखगणे अन्वयीयास्तर्हि शशकादय पञ्चैवेति परिसङ्ख्यायते तदुक्त पस्पशाभाष्ये— "भक्ष्यनियमेनाऽभक्ष्यप्रतिषेधो गम्यते । पञ्च पञ्चनखा भक्ष्या इत्युक्ते गम्यत एतदतोऽन्येऽभक्ष्या इति ।" अत्र अभक्ष्यप्रतिषेध इत्यस्य अभक्ष्यभक्षणप्रतिषेध इत्यर्थः । एव भक्ष्यनियमेनेत्यस्य भक्ष्यभक्षणनियमेनेत्यर्थ एवमग्रेऽपि । परेऽपि "अत्र सर्वेषां पञ्चनखानां भक्षणे प्राप्ते पञ्चैव पञ्चनखा भक्ष्या न त्वन्य

ग्राम्यकुक्कुट इत्युक्ते गम्यत एतत् आरण्यो भक्ष्य इति। 'सर्वं वाक्यं सावधारणम्' इति न्यायात्। आलङ्कारिका अपि परिसङ्ख्यालङ्कारप्रकरणे प्रमाणान्तरेण प्राप्तस्यैव वस्तुन पुन शब्देन प्रतिपादन प्रयोजनान्तराभावात् स्वतुल्यान्यव्यवच्छेद गमयतीति। भागवतेऽपि—

लोके व्यवायामिषमद्यसेवा नित्यास्ति जन्तोर्नहि तत्र चोदना।

इति नियम्यते" इति तर्कप्रकाशसिद्धान्तच प्रादयपारित्युक्तम्। अत्र द्वयोर्युगपदपि प्राप्तिरभयोरपि मांसयोर्युगपद्भक्षणस्य समत्वादिति पूर्वतो भेद। यथा वा समासे वाक्ये च अर्थवत्सूत्रेण प्राप्तस्यैव प्रातिपदिकत्वस्य पुनर्विधानात् समासग्रहणेन व्यर्थीभूय यत्र संघाते पूर्वो भाग पदं यस्य पदे भवति तर्हि समासस्यैवेति परिसङ्ख्यायते।

तृतीय यथा—अभक्ष्यो ग्राम्यकुक्कुट इति। अत्र रागतो ग्राम्यारण्यककुक्कुटसामान्ये प्राप्तस्य भक्षणस्य विशेषांशे (ग्राम्यकुक्कुटे) निषेधस्मृत्या इतरांशे (आरण्यककुक्कुटे) भक्षणस्याऽभ्यनुज्ञारूपो नियम प्रतीयते—ग्राम्य एव कुक्कुटो न भक्षणीय, आरण्यकस्तु भक्षणीय इति। तदुक्त पस्पशाभाष्ये—

१ "अभक्ष्यप्रतिषेधेन वा भक्ष्यनियम। तद्यथा—'अभक्ष्यो ग्राम्यकुक्कुट' 'अभक्ष्यो ग्राम्यसूकर' इत्युक्ते गम्यत एतदा'रण्यको भक्ष्य'इति।" अत्र प्रथमे नियमेन इतरप्रतिषेधस्य गति, द्वितीये परिसङ्ख्यया इतरप्रतिषेधस्य गति, तृतीये च इतरप्रतिषेधेन प्रमाणान्तरप्राप्तेऽस्याभ्यनुज्ञाया प्रतीतिरिति विवेक।

अत्रेयांस्तु विशेष —एवशब्देन नियमपरिसङ्ख्याऽभ्यनुज्ञानां स्फुटा प्रतीति, एवशब्द विना तु अस्फुटेति।

स्वोक्तेऽर्थे भाष्य प्रमाणत्वेन प्रदर्श्य न्यायमपि प्रमाणयति—सर्वं वाक्यमिति=

५ व्याख्यातपूर्वोऽयम्। आलङ्कारिकानपि स्वोक्ते प्रमाणीकरोति—आलङ्कारिका अपीति—मम्मटभट्टा इति भाव, काव्यप्रकाशे तथोक्ते। व्यवच्छेद गमयतीति—एतेन व्यवच्छेदस्य आर्थत्वमेवेति सूचितम्। प्रमाणान्तरेण प्राप्तस्य पुन प्रापणे नाऽन्यत्र व्यवच्छेदप्रतीतिरिति भागवतेऽपि प्रमाणयति—भागवतेऽपीत्यादिना।

व्यवायामिषमद्यसेवेति—सर्वस्यैव विषयोपभोगस्योपलक्षणमिदम्। नित्या इत्यस्य विवरण रागत, प्राप्ता इति। स्वभावेन, प्रकृतिप्रेरणया वा प्राप्ता इति

व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा ॥ इति ॥

व्यवायो मैथुनम्, आमिषं मत्स्यादि, मद्यम्—एतेषां सेवा जन्तोः प्राणिमात्रस्य नित्या रागतः प्राप्ता। अतस्तत्र चोदना विधिर्नास्ति। नन्वत्र "ऋतौ भार्य्यामुपेयात्" "हुतशेषम्भक्षयेत्" "सौत्रामण्यां सुराग्रहान्

---

यावत्। जन्तोः प्राणिमात्रस्य। चोदनेत्यस्य विवरणं विधिरिति। यथा आत्मनः शिशुं न हि कश्चित्प्रेरयति स्तनन्धया भवेति, यथा वा क्षुत्तृष्णमूत्रपुरीषादिपीडितान् न हि कश्चित्प्रेरयति भोजनपानोत्सर्गानाचरतेति, स्वभावात्ते प्रवर्तन्ते, तथैव व्यवाया-दावपि प्रेरणाया नास्त्येवाऽवसरः, स्वभावत एव प्रवृत्तिर्भवतीति तात्पर्यम्। श्लोके विवाहपदेन ऋतुकालिकभार्यागमनविधिरुपलक्ष्यते, यज्ञपदेन हुतशेषकर्मकभक्षण-विधिः, सुराग्रहपदेन च सौत्रामण्यधिकरणकसुराग्रहकर्मकग्रहणविधिरुपलक्ष्यते। तैर्विधिवाक्यैः तेषु व्यवायादिषु व्यवस्थितिः पुनः प्रापणं भवतीति विशेषः। ननु पुनः प्रापणमिदानीं किमर्थम्? इत्यत आह—आसु निवृत्तिरिष्टेति एभ्योऽन्येषु इति। ऋतु-भार्याहुतशेषसौत्रामण्यस्वविधिभ्योऽतिरिक्तेषु व्यवायादिषु शीघ्रं निवृत्तिरित्यर्थः। अन्यत्र निवृत्तिरेव पुनः प्रापणस्य फलं, सामर्थ्यात् वक्ष्यमाणरीत्या प्रापकप्रमाणानो-द्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचादिति भावः। तदाह—न चैवमित्यादिना।

ऋतौ भार्यामिति—अस्य 'ऋतावेव', 'तत्र भार्यामेव', 'तत्र तामुपेयादेवे'ति नियमत्रये तात्पर्यम्। ऋतुस्तु नारीणां रजोदर्शनादनन्तराः षोडश निशाः। तदतिरिक्तकाले भार्यागमननिवृत्तिरूपनियमे फलति। अत एव गृहस्थस्याऽन्तौ अनुपगमने ब्रह्मचर्यमुक्तं स्मृतौ। द्वितीये भार्येतरस्त्रीगमननिवृत्तिः, तृतीये गमनाऽ-भावनिवृत्तिरिति तिस्रो निवृत्तयः फलन्ति। अत एव अविवाहितागमने ऋतौ भार्यागमनाऽभावे च प्रायश्चित्तं प्रोक्तं स्मृतिषु। 'ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति। घोरायां भ्रूणहत्यायां पच्यते' इति। दारभयणं तु मनसि यस्मे तत्सर्वं तस्यां दोषादिनाऽनुपगमने बोध्यम्, कामाऽभावेन अनुपगमने दोषो नास्ति, तृतीय-नियमेनाऽप्यनुरागाया अप्रीतिरत्यादित्यपि वदन्ति।

हुतशेषमिति—हुतशेषमेव मांसं भक्षयेन्नत्वन्यदिति परिसङ्ख्यापत्ते। सौत्रा-मण्यामिति—सौत्रामण्यामेव सुराग्रहान्गृह्णाति न त्वन्यत्रेति परिसङ्ख्यायत ( यत्तां गृह्णीयादित्यर्थः )।

गृह्णाति" इत्येतेषा वैयर्थ्यम् । भार्या विवाहिताम् । तत्राह व्यवस्थितिरिति । तेषु पुन' प्रापणमित्यर्थ । नियमस्यान्यनिवृत्तिफलकत्वादाह-आसु निवृत्तिरिष्टेति । अन्येष्वितिशेष' । तदुक्तम्—

> विधिरत्यन्तमप्राप्तौ नियम पाक्षिके सति ।
> तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति गीयते ॥ इति ।

---

तदुक्तम् इति—कुमारिलभट्टपादैरितिशेष । यथाह न्यायसिद्धान्तमञ्जर्या न्यायकोशे च–तदुक्त भट्टपादैरिति। विधिरिति–अर्थसग्रहे व्याख्यातमिद तद्यथा– "अस्यार्थ —प्रमाणाऽन्तरेणाऽप्राप्तस्य प्रापको विधिरपूर्वविधि । यथा 'यजेत स्वर्गकाम ' इत्यादि , स्वर्गार्थकयागस्य प्रमाणान्तरेणाऽप्राप्तस्याऽनेन विधानात् । पक्षेऽप्राप्तस्य प्रापको विधिर्नियमविधिः । यथा 'व्रीहीनवहन्ती'त्यादि । कथमस्य पक्षेऽप्राप्तप्रापकत्वमितिचेदित्थम्—अनेन ह्यवघातस्य वैतुष्यार्थत्व न प्रतिपाद्यतेऽन्वयव्यतिरेकसिद्धत्वात् । किन्तु नियम । सचाऽप्राप्तांशपूरणम् । वैतुष्यस्य हि नानोपायसाध्यत्वाद् यदाऽवघात परित्यज्य उपायान्तरं ग्रहीतुमारभते, तदाऽवघातस्याऽप्राप्तत्वेन तद्विधाननामकमप्राप्तांशपूरणमेवाऽनेन विधिना क्रियते । अतश्च नियमविधावप्राप्तांशपूरणात्मको नियम एव वाक्यार्थं । पक्षेऽप्राप्ताऽवघातस्य विधानमिति यावत् ।

उभयोश्च युगपत्प्राप्तावितरव्यावृत्तिपरो विधि परिसङ्ख्याविधि । यथा 'पञ्च पञ्चनखा भक्ष्या' इति । इद हि वाक्य न पञ्चपञ्चनख भक्षणपर, तस्य रागत प्राप्तत्वात् । नाऽपि नियमपर, पञ्चपञ्चनखाऽपञ्चपञ्चनखभक्षणस्य युगपत्प्राप्तेः पक्षेऽप्राप्त्यभावात् । अत इदमपञ्चपञ्चनखभक्षणनिवृत्तिपरमिति भवति परिसङ्ख्याविधि ।

सा च द्विविधा—श्रौती लाक्षणिकी चेति । तत्र 'अत्र ह्येवावयन्ती'ति श्रौती परिसङ्ख्या ( पवमानस्तोत्रे एव गायन्तीति तदर्थ । ) एवकारेण पवमानातिरिक्तस्तोत्रव्यावृत्तेरभिधानात् । 'पञ्च पञ्चनखा भक्ष्या' इति तु लाक्षणिकी, इतरनिवृत्तिवाचकपदाऽभावात् । अत एवैषा ( लाक्षणिकी ) त्रिदोषग्रस्ता । दोषत्रयञ्च—श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति । तदुक्तम्—

स्वर्गकामोऽश्वमेधेन यजेतेतिविधिः। क्षुत्प्रतिघातो यद्यपि शशकादिमांसे श्वादिमांसैश्च भवति तथापि शशकादिमांसैरेव कर्तव्य इति परिसङ्ख्यायते 'पञ्च पञ्चनखा भक्ष्या' इत्यनेन। नखविदलनावहननाभ्यां व्रीहेर्निस्तुषीकरणं प्राप्तम्। तत्रावहननेन निस्तुषीकरणं पुण्यजनकमिति व्रीहीनवहन्तीत्यनेन नियम्यते। यद्यपि परिसङ्ख्यया नियमे च स्वार्थहानिः प्राप्तबाधः परार्थकल्पना चेति दोषत्रयं तथाप्य

*श्रुतार्थस्य परित्यागादश्रुतार्थप्रकल्पनात्।*
*प्राप्तस्य बाधादित्येवं परिसङ्ख्या त्रिदूषणा॥ इति।*

श्रुतस्य पञ्चनखभक्षणस्य हानात्, अश्रुताऽपञ्चपञ्चनखभक्षणनिवृत्तेः कल्पनात्, प्राप्तस्य चाऽपञ्चपञ्चनखभक्षणस्य बाधनादिति। अस्मिंश्च दोषत्रये दाहरणं शब्दनिष्ठम्, प्राप्तबाधस्त्वर्थनिष्ठ इति दिक्।" इति। अत्राऽयं पाठभेदो मीमांसाचार्यप्रणीतन्यायकोशोदाहृतो—"इदं हि वाक्यं पञ्चानां पञ्चनखानां सेधागोधादीनां च न भक्षणविधायकम्, तस्य रागतः प्राप्तत्वात्। नाऽपि तेषां भक्षणनियामकम्, तेषाञ्च तदितरपञ्चनखानाञ्च भक्षणस्य युगपदपि रागतः प्राप्ततया पक्षेऽप्राप्त्यभावात्। किन्तु लक्षणया पञ्चेतरपञ्चनखानां श्वविडालादीनां भक्षणं निवृत्तिपरमिति भवति परिसङ्ख्या" इति। तथा—'श्रुतस्य पञ्चनखभक्षणस्य हानाद्, अश्रुताया पञ्चेतरपञ्चनखभक्षणनिवृत्तेः कल्पनात्, रागतः प्राप्तस्य पञ्चेतरपञ्चनखभक्षणस्य बाधनाच्च" इति। तत्र पञ्च पञ्चनखास्तु—

*पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव।*
*शशकः शल्लकी गोधा खड्गी कूर्मोऽथ पञ्चमः॥ इति।*

तट्टीकायां मीमांसार्थसंग्रहकौमुद्याम्—

*श्वाविधं शल्लकं गोधां खड्गकूर्मशशांस्तथा।*
*भक्ष्यान्पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतो दत॥ इति। (मनुस्मृति ५।१८)*

तदेतद् स्वग्रन्थे व्याचष्टे—स्वर्गकाम इत्यादिना।

यद्यपि परिसङ्ख्यायामिति – अर्थतत्प्रदर्शिता पञ्चपञ्चनखेतरानां भक्षणनिवृत्तिरित्यादिरस्य। स्वार्थहानिरिति—पञ्चपञ्चनखानां भक्षणं कार्यमिति स्ववाक्यार्थस्य हानिः। एवं व्रीहीणामवघाताद् शुद्धिरिति स्वार्थस्य हानिः। प्राप्तबाध —

नन्यगत्या स्वीक्रियत इति वृद्धा । 'पञ्च पञ्चनखा' इत्यस्य नियमत्वेन भाष्ये व्यवहृतत्वात् । अन्यनिवृत्तिरूपफलेनैक्याच्च नियमपदेन परिसङ्ख्यापि व्याकरणे गृह्यत इति संक्षेप । इति निपातार्थविचार ।

रागत प्राप्तस्य पञ्चेतरपञ्चनखभक्षणस्य बाध । एव पुरोडाशविधिना प्राप्तस्य नखविदलनस्य बाध । परार्थकल्पना—पञ्चेतरपञ्चनखभक्षण न कार्यमिति लक्ष्यार्थस्य कल्पना । पञ्चपदस्य पञ्चेतर इत्यर्थे लक्षणया, भक्ष्या इत्यस्य च अभक्ष्या इत्यर्थे लक्षणयेति भावः। एवम् अवहन्तीत्यस्य अवघातेतरन्न कुर्यादित्यर्थे लक्षणया लक्ष्यार्थस्य कल्पना । अनन्यगत्या—प्राप्तस्य पुनर्विधानवैयर्थ्यापत्त्येत्यर्थ । पदद्वये लक्षणया नियमपरिसङ्ख्याशास्त्रयो निषेधमुखेन प्रवृत्तिरित्यभिमानेनेदम् । तदुक्तवन्तोऽनाह इति वृद्धा इति ।

परे तु—नञ्रहितयोर्नियमपरिसङ्ख्ययोर्निषेधस्य आर्थत्वमेव न तु शाब्दत्वम् । अत एव "भक्ष्यनियमेनाऽभक्ष्यप्रतिषेधो गम्यते—पञ्च पञ्चनखा भक्ष्या इत्युक्ते गम्यत एतस्तोऽन्येऽभक्ष्या इति" इति दर्शितपस्पशाभाष्ये आर्थप्रतीतिबोधक 'गम्यते' इति प्रयुक्तम् । तेन निषेधस्य तद्वाक्यजन्यशाब्दबोधाऽविषयत्व स्पष्टमेवोक्तम् । अत एव च नियमसूत्राणां विधिमुखेनैव प्रवृत्तिरित्युद्घोषो भाष्यविदाम् । अत एव च स्वार्थहान्यादिदर्शितदोषसमुच्चयोऽपि नाऽत्र । विधिमुखेन शाब्दबोधेऽपि यद्यपि स्वार्थे तात्पर्याऽभावात्तात्पर्यत्याग । वक्ष्यमाणरीत्या सामान्यशास्त्रे सङ्कोचकल्पना, सकोचात्प्राप्तबाधश्चेति दूषणत्रयं वक्तु शक्यते, तथाऽपि निषेधपक्षेऽपि उदिते जुहोति अनुदिते जुहोतीतिवद् विकल्पापत्तिवारणाय प्रापकप्रमाणे सङ्कोचस्याऽऽवश्यकत्वेन निषेधमुखेन शाब्दबोधे पदद्वये ( उद्देश्यवाचकपदस्य स्वार्थभिन्नं यन्नियम्य शास्त्रीयोद्देश्यताऽवच्छेदकव्याप्यं, नियामकशास्त्रीयोद्देश्यताऽवच्छेदकव्यापक रूप तत्र, विधेयवाचकपदस्य च नञर्थविशिष्टे 'भवति' इत्यादे र्न भवतीत्येवमर्थे ) लक्षणायां गौरवान्तरस्याऽऽधिक्यम्, साक्षाच्छास्त्रीयबाधकल्पना च भाष्याऽसम्मतिश्चेति बोद्धव्यम् ।

एवञ्च—पञ्च पञ्चनखा भक्ष्या इत्यत्र पञ्चपदस्य अवधारणविषयमुद्दिश्य शशकादिवृत्तिपञ्चत्वसङ्ख्यावत्यर्थे लक्षणया अवधारणविशेष्या शशकादिवृत्ति

स्वर्गकामोऽश्वमेधेन यजेतेतिविधिः। तुल्यप्रतिघातो यद्यपि शशकादि मांसैः श्वादिमांसैश्च भवति तथापि शशकादिमांसैरेव कर्त्तव्य इति परिसङ्ख्यायते 'पञ्च पञ्चनखा भक्ष्या' इत्यनेन। नखविदलनावहन नाभ्यां व्रीहेर्निस्तुषीकरणं प्राप्तम्। तत्रावहननेन निस्तुषीकरणं पुण्य जनकमिति व्रीहीनवहन्तीत्यनेन नियम्यते। यद्यपि परिसङ्ख्यायां नियमे च स्वार्थहानि प्राप्तबाध परार्थकल्पना चेति दोषत्रय तथाप्य

---

*श्रुतार्ऽथस्य परित्यागादश्रुतार्थप्रकल्पनात् ।*
*प्राप्तस्य बाधादित्येवं परिसङ्ख्या त्रिदूषणा ॥ इति ।*

श्रुतस्य पञ्चनखभक्षणस्य हानात्, अश्रुताऽपञ्चपञ्चनखभक्षणनिवृत्तेः कल्प नात्, प्राप्तस्य चाऽपञ्चपञ्चनखभक्षणस्य बाधनादिति। अस्मिंश्च दोषत्रये दोषद्वय शब्दनिष्ठम्, प्राप्तबाधस्त्वर्थनिष्ठ इति दिक्।" इति। अत्राऽथ पाठभेदो मीमा चार्यप्रणीतन्यायकोशोदाहृते—"इदं हि वाक्यं पञ्चानां पञ्चनखानां सेधागोधा दीनां च न भक्षणविधायकम्, तस्य रागत प्राप्तत्वात्। नाऽपि तेषां भक्षणनियम परम्, तेषाञ्च तदितरपञ्चनखानाञ्च भक्षणस्य युगपदपि रागतः प्राप्ततया पक्षेऽ प्राप्त्यभावात्। किन्तु लक्षणया पञ्चेतरपञ्चनखानां श्वाविधादीनां भक्षणं निवृत्ति परमिति भवति परिसङ्ख्या" इति। तथा—'श्रुतस्य पञ्चनखभक्षणस्य हानात्, अश्रुतायाः पञ्चेतरपञ्चनखभक्षणनिवृत्तेः कल्पनात्, रागत प्राप्तस्य पञ्चेतरपञ्च नखभक्षणस्य बाधनाच्च" इति। तत्र पञ्च पञ्चनखास्तु—

*पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव ।*
*शशकः शल्लकी गोधा खड्गी कूर्मोऽथ पञ्चमः ॥ इति ।*

तट्टीकायां मीमांसार्थसंग्रहकौमुद्याम्—

*श्वाविधं शल्लकं गोधां खड्गकूर्मशशांस्तथा ।*
*भक्ष्यान्पञ्चनखेष्वाहुरनुष्ट्राश्चैकतो दत ॥ इति । (मनुस्मृति ५ १८)*

तदेतद् ग्रन्थ ये व्याचष्टे—स्वर्गकाम इत्यादिना।

यद्यपि परिसङ्ख्यायामिति – अर्थसंग्रहरीत्या एवशब्दरहितायां लाक्षणिकया मित्यादिरस्य। स्वार्थहानिरिति—पञ्चपञ्चनखानां भक्षणं कार्यमिति स्ववाच्यार्थस्य हानिः। एवं व्रीहीणामवघातं कुर्यादिति स्ववाच्यार्थस्य हानि। प्राप्तबाध —

नन्यगत्या स्वीक्रियत इति वृद्धा । 'पञ्च पञ्चनखा' इत्यस्य नियम त्वेन भाष्ये व्यवहृतत्वात् । अन्यनिवृत्तिरूपफलेनैक्याच्च नियमपदेन परिसङ्ख्यापि व्याकरणे गृह्यत इति सक्षेप । इति निपातार्थविचार ।

---

रागत प्राप्तस्य पञ्चेतरपञ्चनखभक्षणस्य बाध । एव पुरोडाशविधिना प्राप्तस्य नखविदलनस्य बाध । परार्थकल्पना—पञ्चेतरपञ्चनखभक्षण न कार्यमिति लक्ष्यार्थस्य कल्पना । पञ्चपदस्य पञ्चेतर इत्यर्थे लक्षणया, भक्ष्या इत्यस्य च अभक्ष्या इत्यर्थे लक्षणयेति भाव । एवम् अवहन्तीत्यस्य अवघातेतरन्न कुर्यादित्यर्थे लक्षणया लक्ष्यार्थस्य कल्पना । अनन्यगत्या—प्राप्तस्य पुनर्विधानवैयर्थ्यापत्त्येत्यर्थ । पदद्वये लक्षणया नियमपरिसङ्ख्याशास्त्राणां निषेधमुखेन प्रवृत्तिरित्यभिमानेनेदम् । तदुपनयन्नाह इति वृद्धा इति ।

परे तु—नञर्हितयोर्नियमपरिसङ्ख्ययोर्निषेधस्य आर्थत्वमेव न तु शाब्दत्वम् । अत एव "भक्ष्यनियमेनाऽभक्ष्यप्रतिषेधो गम्यते—पञ्च पञ्चनखा भक्ष्या इत्युक्ते गम्यत एतत्तोऽन्येऽभक्ष्या इति" इति दर्शितपस्पशाभाष्ये आर्थप्रतीति-
१ बोधक 'गम्यते' इति प्रयुक्तम् । तेन निषेधस्य तद्वाक्यजन्यशाब्दबोधाऽविषयत्व स्पष्टमेवोक्तम् । अत एव च नियमसूत्राणां विधिमुखेनैव प्रवृत्तिरित्युद्घोषो भाष्यविदाम् । अत एव च स्वार्थहान्यादिदर्शितदोषसमुच्चयोऽपि नाऽत्र । विधिमुखेन शाब्दबोधेऽपि यद्यपि स्वार्थे तात्पर्याऽभावात्तात्पर्यत्याग । वक्ष्यमाणरीत्या सामान्य शास्त्रे सङ्कोचकल्पना, संकोचात्प्राप्तबाधश्चेति दूषणत्रयं वक्तु शक्यते, तथाऽपि निषेधपक्षेऽपि उदिते जुहोति अनुदिते जुहोतीतिवद् विकल्पापत्तिवारणाय प्रापक प्रमाणे सङ्कोचस्याऽऽवश्यकत्वेन निषेधमुखेन शाब्दबोधे पदद्वये ( उद्देश्यवाचक पदस्य स्वार्थभिन्ने यन्नियम्य शास्त्रीयोद्देश्यताऽवच्छेदकव्याप्यं, नियामकशास्त्री-
१ योद्देश्यताऽवच्छेदकव्यापक रूप तत्र, विधेयवाचकपदस्य च नञर्थविशिष्टे 'भवति' इत्यादे र्न भवतीत्येवमर्थे ) लक्षणायां गौरवान्तरस्याऽऽधिक्यम् , साक्षाच्छास्त्रीय बाधकल्पना च भाष्याऽसम्मतिश्चेति बोध्यम् ।

एवञ्च—पञ्च पञ्चनखा भक्ष्या इत्यत्र पञ्चपदस्य अवधारणविषयत्वमुद्दिश्य शशकादिवृत्तिपञ्चत्वसङ्ख्यावत्यर्थे लक्षणया अवधारणविशेष्या शशकादिवृत्ति

पञ्चत्वसङ्ख्यावन्तः पञ्चनखा भक्ष्या इत्युक्तौ, विधिमुखेनैव शाब्दबोधः। अत्र धारणञ्चोक्तमेव।

एवं सत्यपि प्रमाणान्तरेण प्राप्तस्य पुनर्विधानवैयर्थ्यापत्त्या अवधारणत्वा रस्या (स्वाभाव्या) च परिसंख्यायकशास्त्रीयोद्देश्यताऽवच्छेदकव्यापक परिसंख्येयशास्त्रीयोद्देश्यताऽवच्छेदकव्याप्यञ्च यद्रूपं तद्रूपाऽवच्छिन्नातिरिक्तत्वेन परिसंख्येयशास्त्रीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोच आवश्यकः। तथाहि—परिसङ्ख्यास्थले षड् रूपाणि उपस्थितानि—परिसंख्यायकशास्त्रीयोद्देश्यताऽवच्छेदकम्, तद्व्यापकम्, तद्व्याप्यञ्च। एवम्—परिसंख्येयशास्त्रीयोद्देश्यताऽवच्छेदकं, तद्व्यापकं, तद्व्याप्यञ्चेति। तत्र परिसंख्यायकशास्त्रीयोद्देश्यताऽवच्छेदरूपाऽवच्छिन्नाऽतिरिक्तत्वेन तद्व्याप्यरूपाऽवच्छिन्नाऽतिरिक्तत्वेन वा सङ्कोच कर्तुं न शक्यते, रज्जुपाशभ्रमन्यायप्रसङ्गात्। नाऽपि परिसंख्येयशास्त्रीयोद्देश्यताऽवच्छेदकरूपाऽवच्छिन्नाऽतिरिक्तत्वेन तद्व्यापकरूपाऽवच्छिन्नाऽतिरिक्तत्वेन वा सङ्कोच परिसंख्येयशास्त्रस्य वैयर्थ्यापत्तेः। किन्तु परिसंख्यायकशास्त्रीयोद्देश्यताऽवच्छेदकव्यापक परिसंख्येयशास्त्रीयोद्देश्यताऽवच्छेदाऽवच्छिन्ने सङ्कोच एव कर्तुं शक्यः।

तथा च प्रकृते प्रापकप्रमाणभूतपरिसंख्येयरागस्य 'क्षुधातुरः क्षुत्प्रतिघातकं भक्षयेत्' इत्येवरूपेण कल्पितस्योद्देश्यताऽवच्छेदकाऽवच्छिन्ने तादृशपञ्चनखत्वरूपाऽवच्छिन्नाऽतिरिक्तत्वेन सङ्कोचे पञ्चनखातिरिक्तं क्षुत्प्रतिघातकं भक्षयेदिति संकुचितरागेण सकलपञ्चनखकर्मकभक्षणविषये तात्पर्येऽनवगते सति परिसंख्यायकशास्त्रेण शशकादिपञ्चकभक्षणस्य विधानेऽपि शशकादिपञ्चकातिरिक्तपञ्चनखभक्षणस्योक्तसङ्कुचितरागादिना केनाऽप्यविधानादभावः फलति। एतत्फलितमेवादाय परिसंख्याशास्त्रस्य निषेधलक्ष्यव्यवहारो नाऽन्यप्रति प्रतिनिर्देशात्।

एवम्—एवशब्दसमभिव्याहारेऽपि एवेनावधारणविषयत्वस्य द्योतनात्तादृश एव शाब्दबोधस्तादृगेव च सङ्कोचः। यथा इष्टसङ्कोचस्य लाभाय, अनिष्टस्य पञ्चातिरिक्तत्वेन सङ्कोचस्य वारणाय तात्पर्यानुपपत्त्या पञ्चपदस्यावधारणविषयत्वे लक्षणाऽऽद्रियते, शिष्टाचारस्य च तात्पर्यग्राहकत्वम्, तथा "पतिः समास एव" इत्यादावेव शब्दोऽपि येनर्ते तादृशलक्षणायां तात्पर्यग्राहक एव, शिष्टाचारवत्।

लक्षणायामप्रसिद्धशक्त्या या तात्पर्यग्राहकत्वमेव द्योतकत्वमित्युक्तत्वात् । इयानेव तु विशेष—एवेन स्फुटाऽवधारणविषयत्वस्य प्रतीतिरन्यथात्वस्फुटस्येति । इत्थम् एवशब्दसत्त्वे तदसत्त्वे वा शाब्दबोधादि सर्वं समानमेव, अन्यनिवृत्तिश्चोभयत्राऽप्यार्थ्येव । शाब्दी परिसङ्ख्या तु आलङ्कारिकैः 'किं भूषणं सुदृढमत्र यशो न रत्नम्' इत्यादौ यत्र नञः प्रयोगस्तत्रैवोदाहृता ।

नियमे तु व्रीहीनवहन्तीत्यादौ पाक्षिकाऽप्राप्तिकांशस्य परिपूरणफलत्वेन वैयर्थ्याऽऽपत्तेरभावान्न नियम्ये तादृक्सङ्कोचकल्पनम्, किन्तु पाक्षिकाऽप्राप्त्यंश-परिपूरणाय नियम्येन सहैकवाक्यतामात्रम् । तत्र आद्य यथा—व्रीहीनवहन्तीत्यस्य 'चरुनिमित्त तण्डुला निष्पाद्या' इति पुरोडाशविधिनैकवाक्यत्वम्—चरुनिमित्त 'व्रीहीणामवघातेन तण्डुला निष्पाद्या' इति । तेन न दलेच्छोपायैस्तण्डुलनिष्पादनमिति नखविदलनादीनां निषेधः फलति । एवं 'समे यजेत' इत्यस्यापि 'यजेत स्वर्गकामः' इत्यनेनैकवाक्यत्वम् । यथा वा यत्र तु प्रमाणद्वय नियम्य स्यात्तत्र प्रमाणद्वयस्यैवोद्देश्यताऽवच्छेदकाऽवच्छिन्नयोः स्वीयोद्देश्यताऽवच्छेदकरूपाऽव'च्छि'न्नातिरिक्तत्वेन सङ्कोच कृत्वा नियमेन विधानं भवति । यत्र वा विकल्पशास्त्रं नियम्य स्यात् तत्रापि इदकमकाच । यथा वा तिबादिसूत्रेण सह प्रथममध्यमोत्तमविधायक सूत्राणामेकवाक्यत्वम् । 'युष्मदि मध्यम एव' 'अस्मद्युत्तम एव' 'शेषे प्रथम एवे' त्युपपदनियमाङ्गीकारे भाष्यसम्मते धातोर्युगपन्मध्यमाद्यनेकप्रत्ययाना 'परश्चे' त्यधिकारादप्राप्त्या पाक्षिकप्राप्तिकतया तेषामपि नियमविधित्वात् । यथा वा अनुदात्तङित आत्मनेपदविधायकस्य तिबादिसूत्रेण सहैकवाक्यत्वम्—अनुदात्तङित आत्मनेपदमेवेति प्रकृतिनियमे पूर्ववदेवाऽस्य पाक्षिकप्राप्त्या नियमत्वात् ।

द्वितीय यथा—तृजादिदृष्टान्तेन सकृद्गतिन्यायसाधनपरकभाष्यरीत्या पर्यायेण पूर्वपरशास्त्रयोः प्राप्तौ पाक्षिकप्राप्तिकस्य परकार्यस्य विधानेन विप्रतिषेधसूत्रस्य नियमत्वात् पूर्वपरशास्त्रोयोद्देश्यताऽवच्छेदकाऽवच्छिन्नयोर्विप्रतिषेधविषयाऽतिरिक्तत्वेन सङ्कोचात् विप्रतिषेधसूत्रेण परकार्यस्य विधानात्सिद्धत्वमित्यस्य सिद्धि ।

तृतीय यथा—इन्द्रे चेत्यनेन अवङ्स्फोटायनस्येति विकल्पशास्त्रे सङ्कोच ।

एवञ्च अस्मच्छास्त्रे प्रकृतिनियमपक्षे तद्विधायकशास्त्राणाम्, उपपदनियमपक्षे च प्रथमादिविधायकशास्त्राणां च नियमत्वम् सकृद्गतिन्यायसाधन

अथ दशलकारादेशार्थाः ॥ यद्यपि लकाराणामेवार्थनिरूपणं तार्किकैः कृतम् तथापि "उच्चारित एव शब्दोऽर्थप्रत्यायको नानुच्चारित" इति भाष्याल्लोके तथैवानुभवाच्चेति तदादेशतिङामर्थो निरूप्यते। "वर्तमा

रीत्या विप्रतिषेधसूत्रस्य च तत्त्वम्। विकल्पे प्राप्ते नित्यार्थकस्य "इन्द्रेचे"त्या देशचतत्त्वमायाति। "धातोस्तन्निमित्तस्यैव"—कृत्तद्धितस्त्रीयसमासग्रहणादीनां तु परिसङ्ख्यात्वमेव। अन्यनिवृत्तिरूपफलसाम्येन तु नियमपदेनैव तस्या व्यवहारो भाष्ये—"भक्ष्यनियमेने"ति।

एवमेव 'पार्थ एव धनुर्धरः' इत्यादावपि लोके पाक्षिकयुगपदन्यतरप्राप्ति निर्णीय नियमपरिसङ्ख्याऽन्यतरत्वं निश्चेतव्यम्। अत्र सर्वत्र अवधारणविषय त्वेनैव शाब्दबोध, अन्ययोगव्यवच्छेदत्वादिना बोधे तु द्योत्यताऽवच्छेदक-बाहुल्यापत्ति, पृथिव्यामेव गन्ध इत्यत्र व्युत्पत्तिवैचित्र्यकल्पने गौरवञ्च। 'अन्ययो गव्यवच्छेद एवकारार्थ' इति तु सामान्यप्रमाणसङ्कोचफलितमर्थमादाय नेयम्।

यत्तु विधिमुखेन शाब्दबोधस्येष्टत्वे पञ्चपञ्चनखा भक्ष्या इत्यत्र विधिमात्र पञ्चकभक्षणस्याऽकरणे प्रत्यवायापत्तिरिति, तन्न काम्यविधेरकरणे काम्याऽनिष्पत्ता वपि प्रत्यवायापत्तिविरहात्, अत्राऽपि भक्षणस्य काम्यविधित्वात् इत्यन्यत्र विस्तर इत्याहु। इति निपातार्थवाद।

लकारार्थविचार। व्याकरणशास्त्रस्य शब्दानुशासनत्वेन स्फोटात्मकानां शब्दानां प्रथमं भेदानुद्दिश्य तेषु बोधकताऽवच्छेदकीभूतानां वृत्तीनां निरूपणं कृत्वा वृत्त्याश्रयीभूतस्फोटस्य स्वरूपमभिधाय शाब्दबोधसहकारिकारणानां परम्परया बोध कताऽवच्छेदकीभूतानामाकाङ्क्षादीनां प्रदर्शनं सम्पाद्य मुख्यस्फोटात्मकवाक्यजन्यबोधे धात्वर्थप्राधान्यस्य सिद्धान्तसिद्धत्वेनापसिद्धान्तनिराकरणपूर्वकं धात्वर्थं प्रकमीकृत्य निपातान्तर्गतप्राद्यर्थानां धात्वर्थ एवान्तर्भावं व्यञ्जनाय निपातार्थं निर्णीय धातुप्रकृति कप्रत्ययार्थानामेव जिज्ञासिततया विशेषविचाराऽनर्हत्वेन कृदर्थमुपेक्ष्य विशेषविचार स्पदीभूतलादेशार्थनिरूपणमारभते—यद्यपीत्यादि। लकाराणामेवेति—लत्वस्य शक्तताऽवच्छेदकत्वे लाघवादित्यादि। इतिभाष्यात्—ग्रहणकसूत्रस्थादित्यादि। तिङामर्थ इति—गौरवे सत्यपि न्याय्यत्वात्, न हि लाघवाय न्यायत्याग क्रियते शिष्टैरिति भाव.। ननु तिङां बोधकत्वे शक्तिग्राहकसूत्राणां का गतिरित्यत आह—

ने लट्" इत्यादिविधायक 'ल'कर्मणि" इति शक्तिग्राहकसूत्राणामादेशार्थं स्थानिन्यारोप्य प्रवृत्तिः। तत्र सङ्ख्याविशेष कालविशेष-कारकविशेष भावा लादेशमात्रस्यार्थाः। तथा हि। लडादेशस्य वर्तमानकाळ शबादिसमभिव्याहारे कर्ता, यक्चिणसमभिव्याहारे भावकर्मणी, उभयसमभिव्याहारे एकत्वादिसङ्ख्या चार्थ। तदाह—

फलव्यापारयोस्तत्र फले तङ्यक चिणादयः।
व्यापारे शप्श्नबाद्यास्तु द्योतयन्त्याश्रयान्वयम्॥ इति।

---

वर्तमाने इत्यादि। शबादिसमभिव्याहार इति—समभिव्याहारस्य तात्पर्यग्राहकत्वेनोपयोगात्। फलव्यापारयोरत्रेति—अत्र तिङर्थाश्रयनिष्ठप्रकारतानिरूपितधात्वर्थव्यापारत्वाऽवच्छिन्नविशेष्यतासंसर्गेण शाब्दबुद्धित्वाऽवच्छिन्नं प्रति शबादिसमभिव्याहृतधातुजन्योपस्थितिर्व्यापारत्वाऽवच्छिन्नविशेष्यतासंसर्गेण कारणम्। तिङर्थाश्रयनिष्ठप्रकारतानिरूपितधात्वर्थफलत्वाऽवच्छिन्नविशेष्यतासंसर्गेण शाब्दबुद्धित्वाऽवच्छिन्नं प्रति फलत्वाऽवच्छिन्नविशेष्यतासंसर्गेण तङादिसमभिव्याहृतधातुजन्योपस्थितिः कारणमिति कार्यकारणभावौ द्रष्टव्यौ।

वस्तुतस्तु द्वयोरपि व्यभिचारः, लिडादौ जगामेत्यादौ शबादिसमभिव्याहाराऽसत्त्वेऽपि कर्तृबोधात्, जग्मे इत्यादौ यगाद्यभावे तङ्मात्रेण कर्मबोधाऽङ्गीकारेण व्यतिरेकव्यभिचारवारणेऽपि संजग्मे ग्राम्यमित्यादौ तङ्सत्त्वेऽपि कर्मबोधानिष्टत्वेन द्वितीयकार्यकारणभावस्याऽन्वयव्यभिचारः। किञ्च पच्यते ओदनः स्वयमेवेत्यादौ द्वितीयस्य अन्वयव्यभिचारः, 'अबोधि सः' इत्यादौ च। तस्मात्—तिङर्थाश्रयनिष्ठप्रकारतानिरूपितव्यापारत्वाऽवच्छिन्नविशेष्यतासंसर्गेण शाब्दबुद्धित्वाऽवच्छिन्नं प्रति सकर्मकधातुसमभिव्याहृतभावसाधारणविधिविधेयतङ्यक्चिणाद्यसमभिव्याहृतधातुजन्योपस्थितिर्व्यापारत्वाऽवच्छिन्नविशेष्यतासंसर्गेण कारणम्। तिङर्थाश्रयनिष्ठप्रकारतानिरूपितफलत्वाऽवच्छिन्नविशेष्यतासंसर्गेण शाब्दबुद्धित्वाऽवच्छिन्नं प्रति सकर्मकधातुसमभिव्याहृतभावसाधारणविधिविधेयतङ्यक्चिणादिसमभिव्याहृतधातुजन्योपस्थितिः फलत्वाऽवच्छिन्नविशेष्यतासंसर्गेण कारणमिति कार्यकारणभावौ वेदितव्यौ। सकर्मकधातुसमभिव्याहृतोपादानन्तु पच्यत ओदनः स्वयमेवेत्यादौ भावकर्मणोरित्यादिशास्त्रमतिदिश्यत इति पचेऽतिप्रसङ्गभङ्गायम्, तत्र पचोऽकर्म-

फलव्यापारौ तु धात्वर्थावित्युक्तमेव, तत्र तिङ्समभिव्याहारे तदर्थसङ्ख्या तदर्थकारके विशेषणम्। कालस्तु व्यापारे। तदाह—

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ इति।

तिङर्थः कर्ता व्यापारे, कर्म च फले विशेषणम्। "क्रियाप्रधानमाख्यातम्" इति यास्कोक्तौ क्रियापदं करणव्युत्पत्त्या व्यापारपरं कर्म

---

त्वात्। अबोधीत्यादावतिप्रसङ्गनिरासाय भावसाधारणेति। जग्मे इत्यत्र यगादभावेऽपि तद्सत्त्वान्नाऽव्याप्तिः।

तदर्थसङ्ख्या तदर्थकारक इति—समानप्रत्ययोपात्तत्वप्रत्यासत्त्येति भावः। कालस्तु व्यापार इति—"क्रियाभेदाय कालस्तु" इति हर्युक्ते। समानाभिधानप्रत्यासत्त्या आश्रये तदन्वये तु अतीतभावनाके वर्तमाने कर्तरि पचतीत्यापत्ते, अपाक्षीदित्यनापत्तेश्च पाकानारम्भदशायां कर्तृसत्त्वे पक्ष्यतीत्यनापत्तेश्च। एवं कर्मप्रत्ययेऽपि। नाऽपि फले तदन्वयः, फलाऽनुत्पाददशायां व्यापारसत्त्वे पचतीत्यनापत्ते, पक्ष्यतीत्यापत्तेश्चेति ध्येयम्।

फलव्यापारयोरिति—अत्र धातुरित्यत्र स्मृता इत्यस्य 'स्मृतः' इति वचनविपरिणामेनाऽन्वयः, अन्यथा स न स्यात्, विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसङ्ख्याविरुद्धसङ्ख्याया अविवक्षायां विशेष्यविशेषणवाचकपदयोः समानवचनकत्वनियमात्। अत एव 'नीला घटाः' 'वनं नीलाः' इत्यादेर्न साधुत्वम्। तद्विवक्षायां तु 'वेदाः प्रमाणम्' 'व्यक्त्याकृतिजातयस्तु पदार्थः' इत्यादौ विभिन्नवचनत्वं भवत्येव। न च प्रकृते तद्विवक्षायां बीजमस्ति। फले प्रधानं व्यापार इति—इदन्तु प्राचामनुरोधेन। तेषां मते हि आख्यातमात्रे व्यापारविशेष्यक एव बोधः।

नव्यास्तु—'सुप आत्मनः क्यचि'ति सूत्रस्थभाष्यरीत्या कर्माख्याते फलविशेष्यक एव शाब्दबोधः। तथाहि तत्र भाष्ये—"अथेह क्यचा भवितव्यम्—'इष्टः पुत्रः' 'इष्यते पुत्रः'? इत्याशङ्क्य समाहितम्—"इह भवन्तस्त्वाहुः" न भवितव्यमिति। किं कारणम्? इह समानार्थेन वाक्येन भवितव्यं प्रत्ययान्तेन च। यश्चेहार्थो वाक्येन गम्यते—'इष्टः पुत्रः' 'इष्यते पुत्रः' इति, नाऽसौ जातु

व्युत्पत्त्या फलपरमिति बोध्यम् । तथा च ग्रामं गच्छति चैत्र इत्य त्रैकत्वावच्छिन्नचैत्राभिन्नकर्तृको वर्तमानकालिको ग्रामाभिन्नकर्मनिष्ठो यस्संयोग तदनुकूलो व्यापारः, ग्रामो गम्यते चैत्रेणेत्यत्र तु चैत्रकर्तृकवर्तमानकालिकव्यापारजन्यः ग्रामाभिन्नकर्मनिष्ठ संयोग इति च बोध । वर्तमानकालत्वं च प्रारब्धापरिसमाप्तक्रियोपलक्षितत्वम् । लिट्तिङस्तु

२ चित्प्रत्ययान्तेन गम्यते ।" इति । 'यदा क्रियाफलस्य प्राधान्य प्रतिपिपादयिषित तदा वाक्यमेव—पुत्र इष्ट इत्यादि, न तु क्यजन्त, तस्याऽकर्मकत्वात्कर्मणि प्रत्ययानुत्पादात्' इति कैयटश्च । वाक्ये फल विशेष्यं, वृत्तौ व्यापार इति भिन्नार्थत्वाऽश्यञ्जनेति तदाशय । यदि 'इष्यते पुत्र' इत्यनेनाऽपि पुत्रीयतीतीव एकाश्रयकपुत्रविषयकेच्छानुकूलव्यापार इत्येव बोधस्तर्हि कुतो न समानार्थत्वम् ? कर्माख्याते फलविशेष्यकबोधाऽभ्युपगमे तु एकाऽऽश्रयकव्यापारजन्या पुत्राऽभिन्नैकाश्रयविषयिणीच्छेति बोधे, पुत्रीयतीत्यनेन तु एकाश्रयकपुत्रविषयकेच्छाऽनुकूलव्यापार इति बोधे भिन्नार्थत्वं स्पष्टमेव । क्यजन्तात्कर्मणि प्रत्ययस्तु दुर्लभ एव, धात्वर्थगृहीतकर्मत्वेनाऽकर्मकत्वात् । कर्मकर्तृते पक्वस्तण्डुल इत्यादौ फलस्य व्यापारं प्रति
१ प्राधान्यस्य दृष्टत्वेन कर्माख्यातेऽपि फलस्य विशेष्यताया एवौचित्याच्च । यद्यपि कर्मप्रत्यये भावनाया प्राधान्येऽपि तदर्थसङ्ख्याया कर्मणि विशेषणत्वम्, कर्तृप्रत्यये कर्तरि, तावता भिन्नार्थत्वापपत्ति । एवमाश्रयान्वयमादायाऽपि तदुपपत्ति कथचित्तु शक्यते, तथाऽपि सुब्रीयेच्छापदनिर्दिष्टक्यजर्थांश इच्छानुकूलव्यापारात्मकांशे वृत्तिवाक्ययोभिन्नार्थत्वविरह तादृशभिन्नार्थकत्वस्याऽकिञ्चित्करत्वम्, भिन्नप्रथमविशेष्यकबोधजनकत्वरूपभिन्नार्थत्वस्याऽभावात् इत्याहु । त मते कारिकाया फले प्रधान व्यापार इत्यनन्तरं कर्तृभावप्रत्ययसमभिव्याहार इति शेषो बोध्य ।

२ वर्तमानकालत्वञ्च प्रारब्धेति—प्रारब्धाऽपरिसमाप्तक्रियोपलक्षितकालत्वमित्यर्थ । नन्वेव पूर्वऽह्नि एकवादनादारभ्य द्विवादनपर्यन्त य पाक कृताऽभूत्, तस्य मध्यावबोधाय अद्याऽपि पचतीति प्रयोगाऽऽपत्ति, पूर्वदिनीयसार्धैकवादनकालस्य प्रारब्धाऽपरिसमाप्तक्रियोपलक्षितकालत्वेन तत्कालभवस्य कर्मण्यांशस्य बोधाय अद्य पचतीत्युच्चारणे बाधकाऽभावात् । न च प्रारब्धाऽपरिसमाप्तक्रियोपलक्षितोच्चारणाऽधिकरणीभूतकालस्यैव तत्त्वान्न दोष, पूर्वदिनीयसार्धैकवादन

भूतानद्यतनकाल परोक्षत्व चाधिकोऽर्थ । शेष लड्वत् । परोक्षत्व च

कालस्यैतद्दिवसीयोच्चारणाऽनधिकरणत्वात् इति वाच्यम्, कालस्याऽखण्डतया पूर्वदिनीयसार्धयादनकालस्याऽपि एतद्दिनीयपचतीत्युच्चारणाधिकरणत्वस्य सत्वात्-इतिचेत्, शृणु—एतत्प्रयोगविशिष्टकालत्वमेव वर्तमानकालत्वम् । वै०—स्वो-च्चारणाधिकरणत्व-स्वजन्यबोधविषयत्वेन तात्पर्यविषयीभूतयावद्व्यापारविशिष्ट त्वाभयसम्बन्धेन । सम्बन्धघटक वि०—स्वप्रतियोगिकध्वंसाऽनधिकरणत्व-स्वप्रति योगिकप्रागभावानधिकरणत्वोभयसम्बन्धेन । एवञ्च पूर्वदिनीयपाकक्रियामध्याय बोधकैतद्दिवसीयप्रयोगकाले तादृशयावद्व्यापारप्रतियोगिकध्वंसस्यैव सत्वात् न पूर्व दिवसीयपाकक्रियामध्यांशबोधाऽभिप्रायेण अत्र पचतीति प्रयोगापत्तिः । एवञ्चो च्चारणाधिकरणकालात् पूर्वं यत्र काले पाक कृतस्तस्मात्कालादारभ्योच्चारणकालपर्यन्त मेकमखण्डं कालमादाय पचतीतिप्रयोगवारणार्थमपि ध्वंसाऽनधिकरणघटितविशेष णम् । एव यत्राऽऽगामिनि काले पक्ष्यति तत्पर्यन्तमुच्चारणकालात्परमेकमखण्ड कालमादायाऽपि नातिप्रसङ्गः, प्रागभावानधिकरणत्वघटितसम्बन्धप्रदानात् । पूर्व प्रदर्शितपूर्वदिवसीयसार्धयादनकालिकक्रियामध्यांशोपलक्षितकालस्याऽपि यत्किञ्चित् प्रयोगविशिष्टत्वसम्भवात् तद्दोषवादवस्थ्यवारणाय प्रयोगविशिष्टत्वे एतत्त्व निवे शितमिति सर्वमवदातम् ।

लिट्विकस्तु भूतेति—भूतकालत्वञ्च—वर्तमानध्वंसप्रतियोगिक्रियोपलक्षित कालत्वम् ।

परोक्षत्वञ्च कारके विशेषणम् इति—अत एव लिट्सूत्रे महाभाष्ये—"कस्मिन् पुन परोक्षे (लिड्भवति)? इत्याशङ्क्य कालाऽधिकाराऽभावेन परोक्ष इत्यस्य कालान्वयं परिहृत्य धातोरधिकारसत्वेन शब्देऽसम्भवेनार्थे कार्यस्य विधाना दरे परोक्षे धात्वर्थे इत्येवमन्वयसम्भवेऽपि धात्वर्थभूताया क्रियाया अतीन्द्रियत्वेन परोक्षत्वस्याऽव्यभिचाराद्विशेषणाऽनर्थक्येन क्रियाऽन्वयमपि दूषयित्वा ततः सिद्धान्ति तम्—"एव तर्हि साधनेषु परोक्षेषु" इत्युक्तम् । अत्र सूत्रे धातोरधिकारात् धात्वर्थभूताया क्रियाया प्रकृतत्वेन तस्या स्वतः पारोक्ष्यस्याऽव्यभिचारेण तद्वि शेषणाऽऽनर्थक्येऽपि धात्वर्थेन धात्वर्थाऽनुकूलसाधनानामध्याहारे साधनद्वारा तस्या पारोक्ष्यस्य संभवव्यभिचाराभ्यां तद्विशेषणस्य सार्थक्यमिति भाष्याशयं

कारके विशेषण नतु क्रियायाम् , तस्या अतीन्द्रियत्वेन लिट्सूत्रे भाष्ये प्रति

बलात् साधनपदस्वारस्यात् प्रत्यासत्तेश्च क्रियावेशकालिकमेव साधनपारोक्ष्य ग्राह्यम्। न तु वक्तृप्रयोगादिकालिकमपीति 'अथ पपाचे'त्यपि भवति, प्रयोगकाले साधनस्य प्रत्यक्षत्वेऽपि पाकक्रियावेशकाले तस्य परोक्षत्वात्। अत एव भाष्ये 'साधनेषु परोक्षेषु' इति सिद्धान्तयित्वाऽपि क्रियावेशकालिकसाधनपारोक्ष्यद्वारा क्रियाया एव पारोक्ष्यविवक्षणार्थमग्रे—"अथ ये क्रियाकृता विशेषा सीत्कारा फूत्काराश्चेति तेषु परोक्षेषु?" इत्यनेन साधनस्य तादृस्थ्येऽपि क्रियाकृतविशेषभूतसीत्कारादिद्वाराऽपि क्रियाया परोक्षत्वतदव्यभिचारसमवेन पारोक्ष्यविशेषणसार्थक्यस्य सत्त्वेन सीत्कारादिपारोक्ष्यस्याऽपि ग्रहणे बाधकाऽभावेन सीत्कारादि पारोक्ष्यस्थलेऽपि 'पपाचे'तिप्रयोगाऽतिप्रसङ्ग इत्याशङ्क्य—"एवमपि पपाचेति भवितव्यमि"तीष्टापत्त्या समाहितम्। आभ्यां शङ्कासमाधानाभ्यां यत्किञ्चिदितरद्वारा क्रियाया एव पारोक्ष्ये भाष्यतात्पर्यमिति स्पष्ट भवति, तच्च क्रियावेशकालिकस्यैव साधनपारोक्ष्यस्य ग्रहणे उपपद्यते, अन्यकालिकस्याऽपि तस्य ग्रहणे तु अन्यकालिकसाधनद्वारा क्रियाया पारोक्ष्यतद्व्यभिचारौ कथ समवत? इति पारोक्ष्यविशेषणाऽनर्थक्यमेवापतति। अत एव च भाष्ये तदग्रे—"सुप्तोऽहं किल विललाप, मत्तोऽहं किल विललापे"त्यत्र क्वचिज्जागरेऽमत्तत्वेऽपि मनसोऽसान्निध्यादुत्तमे लिट्प्रयोग साधित —"अथवा भवति कश्चिज्जाग्रदपि वर्तमानकाल नोपलभते। तद्यथा—वैयाकरणान्त शाकटायनो रथमार्गे आसान शकटसार्थं यान्त नोपलेभे। किं पुन कारण जाग्रदपि वर्तमानकाल नोपलभते? मनसा संयुक्तानीन्द्रियाणि उपलब्धौ कारणानि भवन्ति, मनसोऽसान्निध्यात्" इत्यन्तेन। क्रियानावेशकालिकस्याऽपि साधनपारोक्ष्यस्य ग्रहणे तु प्रयोगकाले वक्तु स्वस्य प्रत्यक्षत्वेन तत्रोत्तमे लिट्प्रयोगोऽसङ्गत एव स्यात्, प्रयोगकालेऽपि मनसोऽसांनिध्यमिति न वाच्यम्, स्वकृतविलापस्य पर प्रति बोधनाय तादृक्प्रयोगस्यैवाऽकरणापत्ते। तस्मात् भाष्येऽत्र मूले च साधनपद कारकपद च व्यापारावेशकालिकसाधनक्रियाकृतविशेषोपयोपलक्षणमिति सर्वमनवद्यम्।

तस्या अतीन्द्रियत्वेन लिट्सूत्रे भाष्ये इति—तत्र हि—'परोक्षे' इत्यस्य क्रियान्वये क्रियाया परोक्षत्वस्य अव्यभिचाराद्विशेषणानर्थक्य स्यादित्या

शयेन—"क्रिया नामेयमत्यन्ताऽपरदृष्टाऽनुमानगम्या न शक्या पिण्डीभूता निदर्शयितुम्" इत्युक्तम्। भाष्ये अपरदृष्टेति—परेण प्रधानेन प्रत्यक्षात्मकप्रमाणेन अत्यन्तम् अवयवशः समूहशश्च अदृष्टेत्यर्थः अवयवस्याऽतिसूक्ष्मत्वादप्रत्यक्षं, समुदायस्य च क्षणिकाऽवयवानां मेलनाऽसंभवेन समुदायस्यैवाऽसम्भवादप्रत्यक्षमिति भावः। अत्यन्तपदस्वारस्यादत्र भाष्ये—पिण्डीभूतेत्यनन्तरमपीतिशेषः। पिण्डीभूताऽपि प्रत्यक्षेण निदर्शयितुमशक्या, किं पुनरवयवश इति तात्पर्यम्।

अन्ये तु—क्रियाया नातीन्द्रियत्वम्, अवयवानामाशुविनाशिनां मेलनाऽसम्भवेन अवयवसमूहस्याऽनिष्पादेन परोक्षत्वेऽपि एकैकस्याऽवयवस्य प्रत्यक्षत्वसम्भवात्। अत एव पिण्डीभूता निदर्शयितुमशक्येत्येवोक्तं भाष्ये। तेन पिण्डीभूताया उक्तरीत्या निदर्शयितुमशक्यत्वेऽपि अवयवशो निदर्शयितुं शक्यत्वमेव तस्या इति प्रतीयते। अत एव 'अधिश्रयणं साक्षात्करोमि' 'अस्य मन्दगतिं साक्षात्करोमी'त्यादि सार्वजनीनाऽनुभवः। अनुभवस्य (प्रतीतेः) पदार्थाऽसाधकत्वे व्यवहारमात्रोच्छेदापत्तिः। अत एव 'पश्य मृगो धावती'त्यनेन धावनस्य चाक्षुषप्रत्यक्षविषयत्वं प्रतिपाद्यते इत्याहुः।

परे तु—भाष्येऽत्यन्ताऽपरदृष्टेति—अवयवरूपेण समुदायरूपेण चाऽप्रत्यक्षेत्यर्थः। पश्य मृगो धावतीत्यादिप्रयोगस्तत्फलसंयोगदर्शनाऽभिप्रायेण, इयमेव ज्ञानसामान्ये लक्षणा। अत एव भाष्येऽनुमानगम्येतिपदमुपात्तम्। अत एव "वर्तमाने लट्"इतिसूत्रे भाष्ये—"सूक्ष्मो हि भावोऽनुमितेन गम्य" इत्युक्तम्। अधिश्रयणं साक्षात्करोमीत्यादिप्रतीतिश्च अधिश्रयणादिसाधनीभूतद्रव्यतत्संयोगादिप्रत्यक्षनिमित्ता भ्रमरूपैवेति न पदार्थसाधिका। अत एव "वर्तमाने लट्"इति सूत्रे कैयट—'तत्र द्रव्यप्रत्यक्षे लोकस्य क्रियाप्रत्यक्षत्वाऽभिमानः' इति, 'क्रियाकृतविशेष (सीत्कारफूत्कारादि) प्रत्यक्षेभ्योऽपि लोकस्य क्रियाप्रत्यक्षत्वाऽभिमान' इति च प्रोक्तत्वात्। अवयवस्य प्रत्यक्षत्वे तु एकैकस्याऽवयवे समुदायरूपाऽऽरोपेण 'प्रकृतः कटम्' इत्यत्र निष्ठासूत्रे भाष्ये "न्याय्या त्वाद्यपवर्गात्" इत्यादिना क्रियाया यत्किञ्चिदवयवातीतत्वेऽपि समुदायातीतत्वमादाय भूतकालिकत्वप्रतिपादनवत् अत्राऽपि समुदायस्य तादृक्प्रत्यक्षत्वस्य संभवेन तद्व्यावृत्त्यर्थं 'परोक्ष' इति विशेषणस्योपपत्तौ साधनादिप्रत्यक्षद्वारेण तत्प्रत्यक्षत्वोपपादनं भाष्योक्तमसङ्गतमेव स्यात्।

पादनात् व्यभिचाराभावात्। कृभ्वाद्यनुप्रयोगस्थले कृभ्वस्ता क्रियासामान्यमर्थः। आम्प्रकृतेस्तु तत्तत्क्रियाविशेषः। सामान्यविशेषयोरभेदान्वयः। अकर्मकप्रकृतिकामान्तानुप्रयुक्तकृभ्वस्तामकर्मिकैव क्रिया। वस्तुतस्तु अनुप्रयुक्तानां कृभ्वस्तां फलशून्यक्रियासामान्यवाचकत्वमेव सकर्मकाकर्मकत्वव्यवहारस्तु आम्प्रकृतिभूतधातोरेवेति विनिगमय। एवं च एधाञ्चक्रे चैत्र इत्यत्र एकत्वावच्छिन्नपरोक्षत्वावच्छिन्नचैत्रकर्तृका भूतानद्यतनकालाधिकरणिका वृद्ध्यभिन्ना क्रियेति बोधः। परोक्षत्वं च साक्षात्कृत-

---

अत एव 'अत्यन्ताऽपरिदृष्ट'ति 'अत्यन्त' पदं चरितार्थम्। न चावयवस्य परमाणोरिव सौक्ष्म्यादप्रत्यक्षत्वेऽपि परमाणुपुञ्जस्येव तत्समूहस्य प्रत्यक्षत्वं स्यादत आह भाष्ये—अशक्या पिण्डीभूतेति। पिण्डीभूताऽपि निदर्शयितुमशक्या, अवयवानां क्षणिकत्वेन पिण्डीभावस्यैवाऽभावादिति भावः। अत्यन्तपदस्वारस्यात् भाष्ये पिण्डीभूतेत्यनन्तरमपीति शेषो बोध्यः। एवञ्च पिण्डीभूतेति विशेषणं भाष्ये 'अतिसूक्ष्मत्वेनाऽप्रत्यक्षाणामप्यवयवानां समूहस्य स्थूलतया प्रत्यक्षत्वसंभवः' इत्याशङ्कानिराकरणद्वारा पूर्वोक्तस्याऽत्यन्ताऽपरिदृष्टत्वस्यैव दृढीकरणार्थम्, न तु
१ तद्बलेनाऽवयवस्यैकैकस्य प्रत्यक्षत्वसाधनं स्यात्। पिण्डीभूताया निदर्शनाऽभाव इवाऽवयवस्याऽपि निदर्शनाऽभावे हेतुस्तु भाष्ये नोक्त एव, तथाऽपि, एकत्र अतिसूक्ष्मत्वादिति अपरत्र च 'आशुविनाशिनां मेलनाऽसंभवादिति हेतुरुन्नेय एवेति प्राहुः।

व्यभिचाराऽभावादिति—"संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्" इति इर्युक्तन्यायेन विशेषणानर्थक्यापत्तिरिति भावः।

वृद्ध्यनुकूलव्यापाराऽभिन्नफलाऽनुकूलव्यापार इत्यर्थं गौरवादाह—वस्तुतस्तु इति—वृद्ध्यनुकूलव्यापाराऽभिन्नो व्यापार इति बोधे हि लाघवमिति भावः। परोक्षत्वञ्च साक्षात्कृतमिति—अत्र 'कृतमिति भूतकालो न विवक्षितः, साक्षात्कारात्मक (इन्द्रियजन्य) ज्ञानाऽविषयत्वमित्येव विवक्षितोऽर्थः, अन्यथा 'इदानीं परोक्षो मे घटः' 'परोक्षो मे घटो भविष्यती'त्यादि प्रयोगश्चापत्तेः। अत्र तु भूतकालिकपरोक्षत्वप्रकरणात् भूतकालिकपरोक्षत्वस्यैव लक्षणार्थं क्तप्रत्ययो दत्त इति वाऽभिप्रायः। यत्तु 'सुप्तोऽहं किल विललापे'त्यादौ स्वकृतविलापस्य तत्काले

मित्येतादृशविषयताशालिज्ञानाविषयत्वम् । भूतानद्यतनत्वं च अद्यतनाष्टप्रहरीव्यतिरिक्तत्वे सति भूतत्वम् । लुडादेशस्य तु भविष्यदनद्यतनार्थोऽधिकः । शेषं लङ्वत् । भविष्यत्त्वं च वर्तमानप्रागभावप्रतियोगिक्रियोपलक्षितत्वम् । लृट्तिङस्तु भविष्यत्सामान्यमर्थः । लेट्तिङस्तु विध्यादिरर्थः । "छन्दसि लिङर्थे लेट्" इतिसूत्रात् । लट्प्रक्रियातो लेटोऽडाटावितिविशेषः । भवाति भवतीतिप्रयोगदर्शनात् । लोटतिङस्तु विध्यादिरर्थः ।

---

साक्षात्करोमीत्येव साक्षिभास्यत्वेन स्वप्नत्वज्ञानेऽपि निद्रादिदोषवशात् संस्कारानुद्बोधेन प्रयोगकालिकसाक्षात्कृतमित्येतादृशविषयताशालिज्ञानाऽभावविषया परोक्षत्वबोधनाय साक्षात्करोमीति त्यक्त्वा साक्षात्कृतमित्युपात्तमिति केनाऽपि भणितं तद्रिक्तं वच, उक्तयुक्तेः । तत्राऽपि मनसोऽसान्निध्यात् विज्ञापस्य साक्षिभास्यत्वाऽभावाच्च । स्वापादिदोषेण मनसोऽसान्निध्यादेव संस्काराऽनुदयस्याऽपि वक्तव्यत्वादिति सुधियो विभावयन्तु ।

भूताऽनद्यतनत्वञ्च—अद्यतनाष्टप्रहरीति—अत्र "लुङ्" सूत्रे कैयटः—'एकस्या रात्रेश्चतुर्थो यामो, दिवसश्च सर्वो, द्वितीयायाश्च रात्रेः प्रथमो (यामो)ऽद्यतन इत्याहु" इत्युक्तवान् । रामाश्रमाचार्यस्तु—"अतीताया रात्रेर्यामद्वयादर्वाग्यावदागामिन्या प्रथमयामद्वयं दिवसं सकलं सोऽद्यतन" इत्यवोचत् । भूषणसारदर्पणे च—"अतीताऽव्यवहितरात्रिपश्चार्धविशिष्टागामिरात्रिपूर्वार्धोपेतं दिनमद्यतनम्, एतद्भिन्नकालत्वमनद्यतनत्वमिति वृत्तिकारादय" इत्यभिहितम् । कालोपसर्जनेतिसूत्रे दीक्षितोऽपि—'अतीताया रात्रेः पश्चार्धेन आगामिन्याः पूर्वार्धेन च सहितो दिवसोऽद्यतन' इत्याहुः । रामाश्रमाचार्यो यतत्त्वदीपिकायान्तु—केचित्तु अरुणोदयमारभ्य अरुणोदयपर्यन्तं काल इत्याहुः, अन्ये तु सूर्योदयादारभ्य सूर्योदयपर्यन्तमित्याहुः' इत्युक्तम् ।

भाष्यवार्तिकपर्यालोचनया तु उक्तं कैयटीयं मतमेव युक्तमाभाति । तथाहि—"लुङ्"सूत्रे भाष्ये—'वसेर्लुङ् रात्रिशेषे । वसेर्लुङ् रात्रिशेषे वक्तव्यः । याम्ये प्रत्युत्थाने प्रत्युत्थितं कश्चित् कश्चित्पृच्छति—'क्व भवानुषित' इति ? स आह—'अमुत्राऽवात्सम्' इति । 'अमुत्राऽवसम्' इति प्राप्नोति ।" इत्युक्तम् । भाष्ये—प्रत्युत्थानं जागरणम्, तत्समये प्रत्युत्थितं प्रबुद्धमित्यर्थः । अत्र प्रत्युत्थान

तत्राधीष्ट सत्कारपूर्वको व्यापार । आगच्छतु भवान् जलं गृह्णातु । सम्प्रश्नोऽनुमति । गच्छति चैत्रो भवान् गच्छतु इत्यादौ । लडादेशस्य तु भूतानद्यतनमधिकोऽर्थः शेषं लड्वत् । लिङादेशस्य तु विध्यादिरर्थः । तत्र विध्यादिचतुष्टयानुस्यूतप्रवर्त्तनात्वेन चतुर्णां वाच्यता लाघवात् । तदुक्तं हरिणा—

---

१ समयश्च—रात्रेश्चतुर्थ एव याम, स्मृत्या तत्रैव प्रबोधोक्ते, चतुर्थयामस्यैव रात्रिशेषत्वमपि वार्तिकोक्तम् । एवञ्च रात्रेश्चतुर्थयामे प्रबुद्धो यदा वाक्यं प्रयुङ्क्ते, अमुत्राऽवात्समिति तदाऽत्राऽतिक्रान्तरात्रिप्रहरत्रयवसनमनद्यतनमिति लङ् प्रसङ्गे लुङ् वक्तव्य इति भाष्यवार्तिकाशय । तथा च अतिक्रान्तरात्रे प्रहरत्रयं यावदनद्यतनकाल मन्वानेन भाष्यकृता वार्तिककृता च रात्रे 'शेषभूताच्चतुर्थयामादारभ्य आगामिरात्रे प्रथमं यामं यावद् योऽय जागरणकाल सोऽद्यतन' इति न्याय्यमस्तु स्थानरात्रिशेषादि शब्द प्रयुञ्जानेन स्पष्टमेवोक्तजागरणकालस्य अद्यतनत्वं सूचितम् । अत एव "कालोपसर्जने"तिसूत्रे शेखरेऽपि—"अतीतरात्रेरन्त्ययामेन आगामिरात्रेराद्ययामेन च सहितो दिवसोऽद्यतन इति "लुङ्" सूत्रे भाष्यकैयटयो" इत्युक्तमिति सुधियो विभावयन्तु ।

तत्राधीष्ट सत्कारपूर्वक इति-अत एव भाष्ये" अधीष्ट नाम सत्कारपूर्विका व्यापारणा" इत्युक्तम् । सम्प्रश्नोऽनुमतिरिति—शब्देन्दुशेखरे तु—"सम्प्रश्न सम्प्रधारणम्, विचार 'तद्धा कर्तव्यमिदं वे'त्यादिरूप" इत्युक्तम् ।

विध्यादिचतुष्टयानुस्यूतेति—अत्र भाष्ये "विधिर्नाम प्रेषणम् ( प्रेषणम्—भृत्यादे कस्याञ्चित् क्रियायां नियोजनमिति कैयटः । नियोग प्रवर्तना, प्रवर्तकनिष्ठ प्रवृत्त्यनुकूलो व्यापार इत्युद्योत ) । अधीष्ट नाम सत्कारपूर्विका व्यापारणा ( व्यापारणा = प्रवर्तनेत्यर्थ इत्युद्योत ) । यन्नियोगतः कर्तव्यं तन्निमन्त्रणम् ( निमन्त्रणविषयत्वात्तदेव निमन्त्रणमिति कैयट ) । किम्पुनस्तत् ? हव्यं कव्यं वा । ब्राह्मणेन 'सिद्धं भुज्यतामि"त्युक्तेऽधर्मं प्रत्याख्यातु । ( हव्यं कव्यं चेति—अवश्यकर्तव्य नित्य नैमित्तिकञ्चेति कैयट ) । आमन्त्रणे कामचार ( काम्यकर्मणि कामनया प्रवृत्तिर्नाऽन्यथेति कैयट । अत्र भोजनाद्यननुष्ठानेऽपि न प्रत्यवायस्तद्विषया प्रवर्तना आमन्त्रणमिति तात्पर्यमित्युद्योत ) ।" इत्युक्तम् । एवञ्च विधि

अस्तिप्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपि ।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥ इति ।

प्रवर्त्तनात्वं च प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वं तत्रेष्टसाधनत्वमेव

---

निमन्त्रणामन्त्रणाऽधीष्टेषु चतुर्ष्वपि प्रवर्तनात्वं सामान्यनुस्यूतमस्ति । विधित्वादीनां चतुर्णां शक्यतावच्छेदकत्वे गौरवाल्लाघवादेकं प्रवर्तनात्वमेव शक्यतावच्छेदकं युक्तमिति भावः । प्रवर्तनात्वञ्च—प्रेरणात्वाऽपरपर्यायमखण्डोपाधिरेवेत्यधिकमग्रे स्फुटीभविष्यति ।

किं भेदस्य विवक्षयेति—नन्वेवं "विधिनिमन्त्रणे"तिसूत्रे तेषां ग्रहणं व्यर्थम् इतिचेत् ? न, प्रवर्तनापदार्थस्य शक्तिग्रहार्थं, शक्तिग्रहस्य लोकत एव सिद्धत्वेऽपि प्रवर्तनाया अवान्तरभेदबोधनार्थं तदुपादानस्य सार्थक्यमित्याशयात् । अत एव हरिरप्याह—

*न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथाऽपि वा ।*
*विध्यादीनामुपादानं चतुर्णामादितः कृतम् ॥* इति ।

न्याय = शक्तिः, तद्व्युत्पादनं तद्ग्रहः इत्यर्थः । सम्प्रश्नस्तु सम्प्रधारणम्, तद्धि कर्तव्यमिदं नवेत्यादिरूपो विचारः । स च न प्रवर्तना, प्रवर्तना हि प्रवृत्त्यनुकूलो व्यापारः । प्रार्थना च स्वाऽभिलषितवस्तुदानादौ स्वीयेच्छाबोधनमिति साऽपि न प्रवृत्त्यनुकूलो व्यापारः, अन्यथासिद्धत्वात् इत्याशयेनाह—चतुर्ष्वेति । कारिकायां चतुर्णामित्यप्येवमेव । एवञ्च—"प्रवर्तनासम्प्रश्नप्रार्थनेषु लिङ्" इत्याकारकं सूत्रं सुवचमिति तत्त्वम् ।

वस्तुतस्तु—प्रार्थना स्वाऽभिलषितवस्तुदानादौ दैन्यनिवेदनपूर्विका प्रवर्तनैवेति मूले कारिकायाञ्च चतुर्ग्रहणं पञ्चोपलक्षणम् । तथा च—"प्रवर्तनासम्प्रश्नयोः" इति सूत्रमेव सुवचमिति परमतत्त्वम् ।

अत्रेदं बोध्यम्—विधिरेव लोके 'आज्ञा' इति 'उपदेश' इति च गीयते । अधीष्टेऽभ्यर्थनेति, आमन्त्रणमनुज्ञेति चेति मञ्जूषाकृतः ।

दर्शनान्तरीयसंस्कारेण निरूपयति—प्रवर्तनात्वञ्च प्रवृत्तिजनकेति । प्रवृत्तिजनकं ज्ञानम्—इदं मदिष्टसाधनमित्याकारकम्, तद्विषयता इष्टत्वाऽवच्छिन्ना

तत्रैव लिङर्थ । ननु कृतिसाध्यत्वं तस्य यागादौ लोकत एव लाभादित्यन्य लभ्यत्वात् । न च बलवदनिष्टाननुबन्धित्व, द्वेषाभावेनान्यथासिद्धत्वात्,

विशेष्यताख्या, तदवच्छेदकत्व तन्निरूपकत्वमिष्टसाधनत्वे इति समन्वय । प्रवृत्तिजनकज्ञानीयविशेष्यतानिरूपितप्रकारतावत्त्वमिति निष्कर्ष । तद्विषयता इष्टसाधन पदार्थनिष्ठा प्रकारताख्या, तदवच्छेदकत्वमिष्टसाधनत्वे इत्यपि केचित् । लोकत एवलाभादिति—यागो मत्कृतिसाध्य , मत्कृतिसाध्यत्वाविरोधिधर्मानधिकरणत्वादि त्याद्यनुमानतो लाभादित्यर्थ ।

यद्यपि कृतिसाध्यत्वज्ञानस्यापि सुमेरुशृङ्गाहरणादावप्रवृत्त्या प्रवृत्तिप्रयोजकत्वेन कृतिसाध्यत्वेऽपि प्रवर्तनालक्षणसमन्वयस्तथाऽपि लिङस्तदंशे शक्तिर्नास्ति, तस्यांशस्य लोकत एव लब्धत्वात् 'अनन्यलभ्यो हि शब्दार्थ' इति न्यायादिति भाव । वस्तुतस्तु अतिप्रसङ्गवारणाय वृत्तिप्रयोज्यस्यैवार्थस्य शाब्दबोधविषयत्वेनेष्टतया प्रमाणान्तरलभ्यस्यार्थस्य शाब्दत्वाऽभावापत्त्या सर्वस्यैवार्थस्य अनुमानादि यत्किञ्चित्प्रमाणान्तरलभ्यत्वेन शाब्दत्वोच्छेदापत्त्या च पदान्तरलभ्यस्यैवार्थस्य तेन न्यायेन शब्दार्थत्वनिरासात् उक्तविधप्रवर्तनात्वस्वीकारबलादेव कृतिसाध्यत्वां
१ शेऽपि लिङ शक्तेरङ्गीकरणापत्तिरिति केचित् ।

ननु मधुविषसम्पृक्तान्नभक्षणादौ प्रवृत्तिवारणाय बलवदनिष्टाऽजनकत्वज्ञानस्याऽपि प्रवृत्तिहेतुत्वकल्पनात्, बलवदनिष्टाऽजनकत्वमपि लिङर्थ स्यादितिचेन्निराकरोति—न चेति । द्वेषाऽभावेनाऽन्यथासिद्धत्वादिति—द्विष्टविषये प्रवृत्तिवारणाय तद्विषयकप्रवृत्तिं प्रति तद्विषयकद्वेषस्य क्लृप्तप्रतिबन्धकताकत्वेन प्रतिबन्धकाऽभावविधया अवश्यक्लृप्तनियतपूर्ववर्तिताकद्वेषाऽभावेनैवोपपत्तौ बलवद् निष्टाऽननुबन्धित्वज्ञानस्य न प्रवृत्तिं प्रति हेतुत्वम् 'अतिरिक्तमथाऽपि यद्भवेन्नियतावश्यकपूर्वभाविनः' इत्युक्तदिशा रासभादेरिव पञ्चमान्यथासिद्धिग्रस्तत्वादिति
२ भावः । इदमुपलक्षणम्—आस्तिककामुकस्य नरकसाधनताज्ञानदशायामपि उत्कटेच्छया द्वेषाऽभावदशाया परदारादौ प्रवृत्तेर्व्यभिचाराच्चेति ।

परे तु—"विधिर्नाम प्रेषणम्, अधीष्ट नाम सत्कारपूर्विका व्यापारणा" इत्याद्युक्तभाष्यात्, हेतुमति चेति सूत्रस्थभाष्याद्य, निमन्त्रणादिशब्दानां प्रयोजकनिष्ठव्यापारवाचकत्वस्य सर्वसम्मततया च, लिडादिश्रवणे 'अयं मां प्रेरयती'ति

नियमेन प्रतीतेश्च प्रेरणाप्रवर्तनाऽपरपर्याय प्रयोजकनिष्ठो व्यापार एव लिङर्थ, नत्विष्टसाधनत्वम्। स चाऽत्र प्रयुज्यमानलिङ्घटितवाक्यरूप एव व्यापारान्तरस्याऽननुभवात्। अत एव "हेतुमति चे"ति सूत्रे भाष्ये—लिङादिशब्दप्रयोगरूपप्रयोजकव्यापारस्य सत्वादित्याशयेन—"इह कश्चित् कञ्चिदाह—'पृच्छतु मां भवान्', 'अनुयुङ्क्तां मा भवान्' इति, अत्र णिच् कस्मान्न भवति?' इति प्रश्ने,—"अकर्तृत्वात्। नासौ सम्प्रति पृच्छति, न च प्रश्यति, (लोडन्तप्रयोगकृतप्रेरणा विनेत्यर्थ इत्युद्योत), तूष्णीमास्ते।" इत्युत्तरमुक्तम्। सक्रियप्रेरणायां णिच्, निष्क्रियप्रेरणायां लोडादि, "तत्प्रयोजक" इत्यनेन व्यापाराधिष्ठ कर्तोच्यते इति तदाशय। तदुक्तं हरिणा—

*"प्रश्यमानस्य तु प्रैषे पृच्छादेर्लोड् विधीयते।*
*सक्रियस्य प्रयोगस्तु यदा स विषयो णिच ॥" इति।*

प्रयोग प्रैष। ननु विधीयमानकर्तृत्वविशिष्टस्याऽपि यदि हेतुसंज्ञासूत्रे ग्रहणम् इत्याशयेन—"अथाऽपि कथञ्चित्कर्ता स्यादेयमपि न दोष, लोगेक्तत्वात् प्रैषस्य णिज् न भविष्यति" इत्युक्तम्। अत्र लोडन्तशब्दप्रयोगरूपप्रयोजकव्यापारस्य लाडवाच्यत्वमित्यभिमानेन शङ्का, स प्रेरणात्वेन लोड्वाच्य इत्याशयेन च 'लोटोक्तत्वादि'त्युत्तरम्। अत्र 'लोगेक्तत्वात् प्रैषस्ये'ति समाधानेन स्पष्टैव प्रेरणाया लिङ्वाच्यत्वमुक्तं भवति। इष्टसाधनत्वस्य लिङ्वाच्यत्वे तु तस्य लोगे क्तत्वेऽपि णिजर्थप्रेरणाया अनुक्तत्वात्समाधानमसङ्गतमेव स्यात्, नहीष्टसाधनत्वं णिजर्थोऽपीति कश्चिदभ्युपैति। 'इह कश्चित् कञ्चिदाहे'त्यनेन लोडन्तशब्दप्रयोग एव प्रैषोऽस्तीति स्फुटमेव सूच्यते।

अदृष्टेन आप्तोक्तेन च लिङन्तशब्दरूपव्यापारेण प्रयोज्यस्य तद्विषये इष्टसाधनत्वाऽनुमानम्, ततश्च प्रवृत्ति। शत्रूक्ताद्दृष्टात् 'गच्छे'त्यादिव प्रवृत्तिवारणाय आप्तोक्तेनेति। आप्तोक्तादपि दृष्टात् प्रवृत्तेरदर्शनात् अदृष्टेति। एवञ्च इष्टसाधनत्वाऽनुमापनद्वारा प्रयुज्यमानलिङन्तशब्द सुतरां प्रवृत्त्यनुकूलो व्यापारः।

स च प्रेरणात्वेन लिङ्वाच्य। शक्यताऽवच्छेदकञ्च प्रेरणादिपदार्थताऽवच्छेदकतया सिद्ध प्रेरणात्वमखण्डोपाधि न तु प्रवृत्तिजनकज्ञानीयविषयताऽवच्छेदकत्वरूपम्, उक्तमुक्तं। एकस्यैव रूपभेदेन वाच्यत्वावाचकत्वे उपपद्येते। स च

इत्यन्यत्र विस्तरः । लुङादेशस्य तु भूतसामान्यमर्थः । भूतत्वं च वर्तमानध्वंसप्रतियोगिक्रियोपलक्षितत्वम् । लृङादेशस्य तु क्रियातिपत्तौ गम्यमानायां हेतुहेतुमद्भावे च गम्यमाने भूतत्वं भविष्यत्त्वं चार्थः । आपादना तु गम्यमाना । भूते, एधश्चेदलप्स्यत ओदनमपक्ष्यत् । भविष्यति, सुवृष्टिश्चेदभविष्यत्सुभिक्षमभविष्यदिति संक्षेपः ।

अथ नैयायिकानां मते संक्षेपाल्लकाराणामर्थो निरूप्यते । तत्र लडादिलृङन्ता दश लकाराः । तत्र लकारस्य कर्ता कालः सङ्ख्या चेति त्रयोऽर्थाः । तत्र कर्तेति गलखुरः । 'लः कर्मणि च' इति सूत्रे चकारेण कर्तुः परामर्शात् । कर्तृस्थाने व्यापार इति भाट्टाः । यत्न इति नैयायिकाः ।

---

व्यापारो लोके ) अनन्योक्तासम्बन्धेन पुरुषनिष्ठ, वेदे ईश्वरनिष्ठ । वेदस्य अकर्तृकत्ववादिनां मते तु व्यपदेशिवद्भावेन स्वनिष्ठ एव ( शब्दनिष्ठ एव ) । शब्दरूपत्वाच्च 'शाब्दी भावने'ति मीमांसकैर्व्यवह्रियते । तस्या विषयतया धात्वर्थेऽन्वय ततश्च—'यजेत' इत्यनेन 'प्रेरणाविषयो याग' इति बोध । तस्मान्नेष्टसाधनत्वादि लिङर्थ ।

किञ्च साध्येष्टकत्वज्ञानादपि प्रवृत्त्या तव मते तस्याऽपि लिङर्थत्वाऽऽपत्तिविनिगमनाविरहात् । किञ्च 'इदं ते इष्टसाधनं, तस्मात्त्वं कुरु' इति स्वारसिकव्यवहारादपि न तस्य लिङर्थत्वं पौनरुक्त्यापत्तेः, पौनरुक्त्यस्य तद्बोधदृढीकरणतात्पर्यकत्वेऽपि 'तस्मात्' इत्यनेनाऽनन्वयापत्ते, अभेदे हेतुहेतुमद्भावस्याऽसिद्धे । स्पष्टञ्चेदं भाष्यप्रदीपोद्योतमञ्जूषादौ । मूलं तु दर्शनान्तरीयसंस्कारेण । अत एवोक्तं मूले—इत्यन्यत्र विस्तर इति—भाष्यप्रदीपोद्योतमञ्जूषास्वित्यर्थ ।

आपादना तु गम्यमानेति—आपादना=तर्क, स च मानसत्वव्याप्यो जातिविशेष । व्याप्यारोपेण व्यापकारोपस्तर्क इति केचित्, यथा—यदि पर्वते वह्न्यभाव स्यात्तर्हि धूमाभावोऽपि स्यादिति । आरोपश्च आहार्यज्ञानमुक्तस्वरूपम् । प्रकृते एधालाभाऽभावश्चेत् ओदनपाकाऽभाव स्यादित्येवरूप । अतिपत्तिपदेन च सूत्रीयेन अस्या ( आपादनाया ) लाभ ।

व्यापार इति भाट्टा, यत्न इति नैयायिका इति—"लः कर्मणी"ति सूत्रे

युक्त चैतत् । व्यापारत्वाद्यपेक्षया लाघवेन यत्नत्वस्यैव शक्यतावच्छेदकत्वात् । शक्ततावच्छेदकं च लकारसाधारणं लत्वमेव । भवतीत्यादौ चादेशेनादेशिनो लस्यैव स्मरणादन्वयधीः । आदेशेषु बहुषु शक्तिकल्पने गौरवात्तदस्मरणे च शक्तिभ्रमादेवान्वयधीः । 'चैत्रो गत्वा गतो ग्रामं' इत्यादौ सामानाधिकरण्यानुरोधेन यथायथं कर्तृकर्मणी कृदाख्ये । नचैवं "लटः शतृशानचौ" इत्यनेन शतृशानचोरादेशत्वात्कथं कर्तरि शक्तिः । आदेशिशक्त्या निर्वाह एवादेशशक्त्यकल्पनात् । चैत्र पचन्नित्यादौ सामानाधिकरण्यानुरोधादादेशिशक्त्याऽनिर्वाहादत्रादेशेऽपि शक्तिः ।

इयांस्तु विशेषः—लत्वेन यत्ने शक्तिः, आत्मनेपदत्वेन फले । मैत्रेण गम्यते ग्राम इत्यादौ मैत्रवृत्तिकृतिजन्यगमनजन्यफलशाली ग्राम इत्यन्वयबोधात् । कृतिश्चात्र तृतीयार्थः । जन्यत्वं संसर्गः । मैत्रः कृतौ विशेषणम्, सा च गमने, तच्च फले तच्च ग्रामे । 'ग्रामं गच्छति मैत्रः' इत्यत्र तु ग्रामवृत्तिफलजनकगमनानुकूलकृतिमान् मैत्र इति बोधः । फलं च द्वितीयार्थः । जनकत्वं संसर्गः । ग्रामश्चात्र फले विशेषणम्, तद्गमने, तच्च कृतौ, सा मैत्रे इति च विशेष्यविशेषणभावभेदेनैव कर्मकर्तृस्थलीयबोधयोर्विशेषः । तावता पदार्थास्तूभयत्रैव तुल्याः ।

---

कर्तृपदं भाववाचकमित्यभिमानात् । व्यापारत्वाद्यपेक्षया लाघवेनेति—व्यापारत्वस्य तज्जन्यत्वविशिष्टतज्जन्यजनकत्वरूपत्वमित्यभिमानेनेदम् । वस्तुतस्तु इतिवत्त्वमिव तदप्यखण्डोपाधिरेव । स्मरणादन्वयधीरिति—अनाशाऽधैयाकरणस्याऽनुमयविरोधो द्रष्टव्यः । शक्तिभ्रमादेवेति—इदमपि चिन्त्यम्, बाधकं विना निःसन्देहप्रत्ययस्य भ्रमत्वाऽयोगात् । कर्तृकर्मणी कृदाख्ये इति—अत्राऽर्धजरतीयन्यायापत्तिः । आदेशेऽपि शक्तिरिति—अत्राऽर्धजरतीयम् । आत्मनेपदत्वेन फल इति—यत्नफले प्रत्ययार्थे, व्यापारमात्रं धात्वर्थं इति न्यायाति तथाऽयुक्तम्, परस्मैपदत्वेन फलबोधाऽप्रसक्तेः । अभिमविशेषोऽनाऽपि—कर्तृप्रत्यये कृतिः प्रत्ययार्थः, फलं द्वितीयार्थः, व्यापारो धात्वर्थ इति निष्कर्षोपपत्ते । कर्मप्रत्यये च फलं प्रत्ययार्थः, कृतिस्तृतीयाऽर्थः, व्यापारो धात्वर्थ इति । तदपि मनोरमं न, लत्वेन कृतौ आत्मनेपदत्वेन फल इति प्रतिज्ञाविरोधापत्तेः, लत्वस्योभयसाधारण

मैत्रेण ज्ञायते इष्यते क्रियते घट इत्यादौ कृतितृतीयाया, विषयता त्वाख्यातस्यार्थ । मैत्रवृत्तिज्ञानविषयो घट इति बोध । घट जानाति मैत्र इत्यादौ तु विषयता द्वितीयाया आश्रयत्व चाख्यातस्यार्थः । घट विषयकज्ञानाश्रयो मैत्र इति बोध ।

कालश्चातीतवर्त्तमानानागतात्मा यथायथ लडादेरर्थ । लटो भवती ५त्यादौ वर्त्तमानत्व लङ्लुङ्लिटाम् अभवत् अभूत् बभूवेत्यादौ भूत काल । लुट्लृटोर्भविता भविष्यतीत्यादौ भविष्यत्काल । लिङ्लो ट्लेटा भवेत् भवतु आग्नेयोऽष्टाकपालो भवतीत्यादौ विधि । सङ्ख्या च केवलार्थ । लेटस्तु छन्दस्येव प्रयोग । तत्र दीर्घत्वमपि विकल्पेन भवति, भवातीतिदर्शनात् । तत्र व्यापारादिबोधकेन लटा वर्त्त मानत्व व्यापारादावेव बोध्यते । पचतीत्यादितो वर्तमानपाकानु कूलव्यापारवानिति बोधात् । एवमन्यत्रापि । व्यापारबोधकाख्यातज न्यवर्त्तमानत्वप्रकारकबोधे आख्यातजन्यव्यापारोपस्थितेर्हेतुत्वकल्पनान्ना तिप्रसङ्ग । व्यापारबोधकधात्वादिसमभिव्याहृताख्यातजन्यवर्त्तमान

१ त्वप्रकारकबोधे तु तादृशधातुजन्योपस्थितिर्हेतु । कार्यकारणतावच्छेदिका च प्रत्यासत्त्या विषयतैवेति नातिप्रसङ्ग । जानाति इच्छति यतते इत्यादौ वर्त्तमानत्वाश्रयज्ञानाश्रयत्वादिबोधस्यैवानुभविकत्वात् ।

तत्र लटा शक्त्या वर्त्तमानत्व लक्षणयाऽश्रयत्व बोध्यत इति विशेष । लटा स्वाधिकरणकालोपाधिस्पन्द एव वर्तमान प्रत्याय्यते । वर्त्तमानसामीप्ये विहितेन तु स्वानधिकरणसमीपवर्त्ती तादृशकाल । तत्रापि शक्तिर्लक्षणा वेत्यन्यदेतत् ।

---

१ त्वात्, आत्मनेपदत्वस्याऽपि एधते इत्यादावतिप्रसक्तत्वात् । घट जानातीत्यादौ आश्रयत्वञ्चेति—अत्राऽप्यर्धजरतीय द्रष्टव्यम् । व्यापारादिबोधकेनेति— यत्नबोधकेनेत्यर्थः । व्यापारादावेवेति—यत्न एवेत्यर्थ । नाऽतिप्रसङ्ग इति— धात्वर्थव्यापारे न कालाऽन्वयापत्तिरित्यर्थ, व्यापाराऽबोधकधातावित्ति— अत्राऽप्यर्धजरतीयम् प्रत्ययस्यार्थांशे कालस्यान्वयांशे चेति । प्रत्यासत्त्या विषय तैवेति—कालिकादेर्भेदयो तु अन्यस्याऽप्युपस्थितौ अन्यस्याऽपि बोधापत्तिरतदाह—

न चैकपदोपस्थितयोः कृतिवर्त्तमानत्वयोः कथं मिथोऽन्वयः । तत्पदजन्यशाब्दबोधे पदान्तरजन्योपस्थितेर्हेतुत्वात् । कार्यतावच्छेदिका च प्रत्यासत्तिः प्रकारता । कारणतावच्छेदिका च विशेष्यतेति । अन्यथा हि दण्डिपदार्थयोर्दण्डेनेत्यादौ च करणत्वैकत्वयोर्मिथोऽन्वयापत्तेः । नैवम्, तत्तत्पदान्यत्वस्योक्तव्युत्पत्तावप्रवेशात्कथमन्यथैवकारार्थयोरन्ययोगव्यवच्छेदयोर्मिथोऽन्वयः ।

घटो नश्यतीत्यादौ वर्तमानोत्पत्तिकत्वं प्रतियोगित्वं च लडर्थः । आद्यं नाशे प्रकारः, द्वितीयं घटे प्रकारः । वर्तमानोत्पत्तिकनाशप्रतियोगी घट इति बोधस्यानुभविकत्वात् । अत्र च वृत्तिद्वयस्य युगपद्बोधकत्वं मयैरोपितव्यम् । तादृशोत्पत्तिकत्वप्रतियोगित्वयोरर्थयोर्युगपदेव बोधात् । न च तादृशोत्पत्तिकत्वमेवार्थोऽस्तु । धात्वर्थस्य नाशस्य घटे प्रातिपदिकार्थे साक्षादन्वयासम्भवात् । न च प्रतियोगित्वमेवार्थोऽस्त्विति वाच्यम् । चिरनष्टेऽपि नश्यतीति प्रसङ्गात् । एतेनात्र वर्तमानत्वमेवार्थो नोत्पत्तिरित्यपास्तम् ।

केचित्तु लत्वमेवात्र प्रतियोगित्वस्य वृत्त्यवच्छेदकं लट्त्वन्तु तादृशोत्पत्तिकत्वस्य । एकधर्मावच्छिन्नवृत्तिद्वयस्यैव न युगपद्बोधकत्वम् । अन्यथा दण्डेनेत्यादौ करणत्वैकत्वयोर्बोधो न स्यात् इत्याहुः । अन्ये तु नश्यतीत्यादौ लटा नाशसामग्र्येव बोध्यते । तेन न चिरनष्टे नश्यतीति प्रसङ्गः । अत एव विनश्यतीति विनाशसामग्रीसान्निध्यमित्याहुः प्रामाणिकाः ।

आख्यातार्थक्रियाविशेष्यको बोध इति वैयाकरणा भाट्टाश्च । आद्यनये धात्वर्थः क्रिया । चैत्रस्तण्डुलं पचति इत्यादितश्चैत्रकर्तृकतण्डुलकर्मकपाक इति धीः । अन्त्यनये भावना क्रिया प्रत्ययार्थः ।

नातिप्रसङ्ग इति । तत्पदजन्यशाब्दबोध इति—तत्पदार्थनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन पदान्तरजन्योपस्थितिः कारणम् इति कार्यकारणभावादितिभावः । तत्तत्पदान्यत्वस्येति—यत्र यत्रैकपदोपस्थितयोर्मिथोऽन्वयोऽभीष्टस्तत्तत्पदान्यत्वविशिष्टपदान्तरेति निवेश्यत इति भावः । अन्ययोगव्यवच्छेदयोरिति—इदमपि परमत एव । स्वमते तु अवधारणमेव तदर्थः । अत्र युगपद्वृत्तिद्वयस्येति—शक्त्या मिल

चैत्रीयपाककरणिका तण्डुलकर्मिका भावनेति बोध । प्रथमान्तार्थविशेष्यक एव बोध । ओदनकर्मकपाकानुकूलकृतिमांश्चैत्र इति बोध इति नैयायिकाः। द्वितीयाद्यर्थकर्मकरणत्वादे क्रियायामेव सर्व्वमतेऽन्वय ।

---

घोपावित्यत्र दृष्टत्वादिति भावः। चैत्रीपाककरणिका तण्डुलकर्मिका भाव नेति बोध इति

भाट्टा —कुमारिलभट्टस्य शिष्या मीमांसका इत्यर्थ । अन्त्यनये=मीमांसकनय इत्यथ । चैत्रीयपाककरणिका तण्डुलकर्मिकेति बोध इति—अत्र मीमांसका —प्रत्ययार्थो भावना । सा च द्विधा, शाब्दी आर्थी चेति । यत्र लिङ् घटित पद तत्र सा द्विधाऽपि, लिङ्त्वेन शाब्दी आख्याततत्वेन चार्थी । शाब्दी च प्रवर्तना प्रेरणाऽपरपर्यायो लिङ्घटितपदरूप प्रवृत्त्यनुकूलो व्यापार लिङ्भवणे आचार्यो मां प्रेरयतीतिनियमेन प्रतीते । शब्दरूपत्वात् सा शाब्दीति कथ्यते। आर्थीभावना च धात्वर्थफलाऽनुकूलो व्यापार आख्यातमात्रवाच्य । लिङोऽन्यत्र आख्याते तु केवला आर्थीभावनैव, लिङि तु शाब्दी सहितैवार्थी । सा द्विधाऽपि भावना, त्र्यंशा भाव्यकरणेतिकर्तव्यताभि । सा च भावना अंशत्रयमपेक्षते—साध्यं, साधनम्, इतिकर्तव्यताञ्च—किं भावयेत्, केन भावयेत्, कथ भावयेदिति तावत् । तत्र शाब्द्या भावनाया साध्याकाङ्क्षायामंशत्रयविशिष्टाऽऽर्थीभावना साध्यत्वेनाऽन्वेति, एकप्रत्ययगम्यत्वेन समानाऽभिधानश्रुते । संख्यादीनां तथात्वेऽपि अयोग्यत्वान्न साध्यत्वेनाऽन्वय । एव तस्या साध्यत्वेऽवगते कर्तृत साधनाकाङ्क्षाया प्रवृत्त्यनुकूलव्यापारबोधकत्वेन ज्ञातलिङादिज्ञान करणत्वेनाऽन्वेत । करणत्वञ्च तस्य भावनाभाव्यनिर्वर्तकत्वमेन कुठारादेरपि, पुरुषव्यापारनिर्वर्त्यच्छेदनिर्वर्तकत्वात् । तत्र कष्ट कर्मेति न्यायादुपाये दूषण आलस्यादिना वाऽप्रवर्तमान पुरुषं प्रति प्रशस्तफलवत्ताज्ञापनेन द्वेषाद्यपसारणद्वारा अर्थवादवाक्यज्ञाप्यप्राशस्त्यघटिता रूपा स्तुति सहकारिकारणमितीतिकर्तव्यताऽऽकाङ्क्षाया तादृशसहकारिकारणमेवेतिकर्तव्यतात्वेनाऽन्वेति । सहकारिकारणमेवेतिकर्तव्यतत्युच्यते कथ भावयेदित्यनेन च तस्या आकाङ्क्षा बोध्यते। ननु शब्दानुपस्थितकरणादे कथमन्वय इतिचेन्न, शब्दोपस्थितप्रवर्तनाया उक्तत्रयाकाङ्क्षाया शब्दादुपस्थितैस्तत्सहकारेण मनसोपस्थितैश्च पदार्थैस्तद्विषयकमानसबोधस्य तात्पर्यवशेनाङ्गीकारात् । तथाहि

लिङादेः श्रोत्रेणोपस्थिति, तस्य भावनाबोधकत्वेन ज्ञातत्वमपि मनसोपस्थितम्। एवमर्थवादानामुपस्थिति श्रोत्रेण, प्राशस्त्यस्य तु तैर्लक्षणया, ज्ञाततायास्तु मनसा। एवञ्च—अर्थवादे प्रशस्तत्वेन ज्ञात्वा आर्थी भावना प्रवर्तनाबोधकतया ज्ञात लिङ्पदज्ञानेन भावयेदिति बोधो यजेदित्यादौ लिङ्ज्ञान। प्राशस्त्यञ्च—इष्टप्र दातृत्वरूपम्। एवम्—आख्यातत्वेनाख्यातवाच्या आर्थीभावनाऽपि ज्ञायते इति निग दितम्। यथा यजेतेत्यत्र यजि देवपूजायामित्युक्तेर्देवपूजा यजेरर्थः। देवपूजा च मन्त्रकरणका देवोद्देश्यका हविषस्त्याग अयमेव च याग। स च करणत्वेन धात्वर्थभावनायामन्वेति। भाव्यस्तु सन्निहितस्वर्गकामादिपदोपस्थाप्यश्च स्वर्गोऽर्थतो लभ्यते। यद्यपि यागोऽपि वस्तुगत्या भाव्य एव तथाऽपि तस्य करणत्वेनैवोपस्थित्याऽसुखरूपत्वेनाऽपुरुषार्थतया च नाऽत्र भाव्यत्वेनाऽन्वेति। अतो बहिर्भूत स्वर्गादेरेव भाव्यत्वेनाऽन्वय। अत एव ज्योतिष्टोमेनेति तृतीया, करणभूते धात्वर्थे यागेऽभेदेनान्वयात्। सहकारिकारणाकाङ्क्षारूपकथम्भावाकाङ्क्षायां तु सन्निधिपठित प्रयाजाद्यङ्गजातमितिकर्तव्यतात्वेनान्वेति। प्रयाजाद्यङ्गजातेन (सहकारिकारणेन) यागेन (करणेन) स्वर्गं भावयेत् स्वर्गकाम इति बोध। तथा च मिलिता— 'स्वर्गकामो यजेत' इत्यनेन स्वर्गकामकर्तृका स्वर्गोद्देश्यिका प्रयाजाद्यङ्गजातेति कर्तव्यताका यागकरणिका लिङ्ज्ञानकरणिकार्थवादज्ञाप्यप्राशस्त्यज्ञानसहकृतशाब्द भावनाविषयीभूताऽऽर्थभावनेति बोध।

पचतीत्यादौ सकर्मकस्थले तु तण्डुलादिरूपकर्माकाङ्क्षाऽपि अधिका। सहकारि कारणाकाङ्क्षाऽत्र बहिर्भूतकाष्ठादिपदैरपि निवर्तते। धात्वर्थपाठेन च। फ लाकाङ्क्षायां 'तृप्तये' इत्याद्यपि प्रयुज्यते। कथम्भावाकाङ्क्षायां च फूत्कारादिभि रित्यध्याह्रियते। एवञ्च—तृप्तिभाविका, तण्डुलकर्मिका काष्ठादिपरकरणिका पाक करणिका फूत्कारादिसहकृता चैत्रकर्तृका भावनेति बोध इत्यन्यत्र विस्तर इत्याहुः।

परे तु—यागानुकूलो व्यापार एव यजेरर्थः। पच्यादेरिव याग एव तत्र भाव्यः। स्वर्गस्तु पुरुषव्यापाररूपभावनाऽव्यवहितोत्तरवर्तित्वाऽभावान्न तद्भाव्य। याग द्वारा तु संसाध्य। एवञ्च 'स्वर्गाये'त्यध्याहृत्य स्वर्गाय यागं भावयेत्स्वर्गकाम इति बोध। यागे भावनाभाव्यत्वरूपसाध्यत्वस्य स्वर्गसाधनत्वेन विरोधाऽभावात्। कर णाकाङ्क्षा धात्वर्थमन्त्रादिभिर्निवर्तते। यत्तु धात्वर्थफलस्य त्यागरूपस्य भावना प्रति

लङस्तु शक्यो ह्यनद्यतनकाल । लुङस्तु भूतसामान्य, भूतत्व च वर्त्तमानध्वसप्रतियोग्युत्पत्तिकत्व न तु तादृशप्रतियोगित्वमेव । चिरोत्पन्नेऽपि पूर्वघुरभवत् इति प्रत्ययापत्ते । नष्ट इत्यादौ नाशे तदन्वयासम्भवाच्च । उत्पत्तेस्तु देशकालादावन्वयान्नदोषः । अभवदित्यादौ तु धातुनोत्पत्ति प्रत्याय्यते, नष्ट इत्यादौ तादृशोत्पत्तिकत्व प्रत्यये नेति विशेष । लिटस्तु भूतकाल इव परोक्षत्वमप्यर्थ । अहं चकारेत्यादि-प्रयोगादर्शनात् । न चैव 'णलुत्तमोवा'ति ज्ञापकात् उत्तमपुरुषत्र स्यात् इति वाच्यम् । 'सुप्तोऽहं किल विललाप' 'मत्तोऽहं किल विचचार' इत्यादौ चित्तविक्षेपादिना पारोक्ष्यमुपपाद्य तत्र सूत्रसार्थक्यसम्भवात् । तत्र च

करणत्वमुक्त तत्र, कारकाधिकारे "साधकतम करणमि"तिसूत्रस्य क्रियाजनकेषु क्रियाया प्रकृष्टं जनक करणसंज्ञकमित्यर्थो भाष्यसम्मत । अत एव वृत्तिकृदादिभि क्रियाजनक कारकं करणमित्युक्तम् । हरिरप्याह-"क्रियाया परिनिष्पत्तिर्यद् व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करण तत्तदा स्मृतमिति ।" अत एव करणस्य व्यापार "कारक" इति सूत्र भाष्य दर्शित । तद्व्यापारस्य धात्वर्थत्वे करणस्य कर्तृत्वञ्च तत्र भाष्य उक्तम् । त्यागश्च न भावनाजनको नाऽपि व्यापारवान् इति तस्य करणत्वस्य दुरुपपादत्वात् । 'भावनाभाव्यानवर्तकत्व करणत्वम् इत्यर्थस्य सूत्रभाष्यादिवाऽलाभात् । किञ्च 'स ब्रह्महत्या तरति योऽश्वमेधेन यजते' इत्यादौ यच्छब्दयोगादनुवादक वाक्य तृतीयाऽनापत्ति, न हि तत्र यजते इत्यस्य यागेन भावयेदित्यर्थ, भाव्याऽनुपस्थित्या साकाङ्क्षत्वात् । स ब्रह्महत्यामिति वाक्यान्तरेण हि ब्रह्महत्यातरणरूपभाव्योपस्थिति । तस्याऽनुवादकवाक्य भाव्यत्वेनाऽन्वयस्तु न युक्त, तच्छब्दयोगेन तस्य विधेयसमर्पकत्वात् । किन्तु वाक्यद्वयबलाद्ब्रह्महत्यातरणकामोऽश्वमेधेन यजेतेति विधि कल्प्यत इत्येव वृद्धमर्यादा । ज्योतिष्टोमेनेत्यादौ तृतीया तु ज्योतिष्टोमेनेत्यादे पदपरत्वेन यागनामधेयवाचितया स्वज्ञानद्वारा भावनायां करणत्वेनाऽन्वयात् । तस्याऽपि सङ्कल्पद्वारा यागभावनाकरणत्वात् । स्पष्टञ्चेद "धर्मे जैमिनि' रित्यधिकरणे भाष्य भामत्यादिरित्याहुरित्यत्र विस्तर ।

भूतत्वञ्च वर्तमानध्वसेति—वर्तमानो यो ध्वसस्तस्य प्रतियोगिनो उत्पत्तिर्यस्य स वर्तमानध्वसप्रतियोग्युत्पत्तिकः, तस्य भाव इत्यर्थ । एवमेवाग्रे भविष्यत्व-

परोक्षत्वेन पारोक्ष्यसादृश्ये तात्पर्यम्। 'चक्रे सुबन्धु' इति तु न लिट्प्रयोगोऽपि तु तिङन्तप्रतिरूपको निपातः।

लुट्लृटोस्तु भविष्यत्कालः। भविष्यत्त्वं तु वर्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वम्। उत्पत्तौ च देशविशेषः कालविशेषश्चाधिकरणत्वेनान्वेति। गृहे घटो भविता अद्य घटो भविष्यतीत्यादौ धातुनोत्पत्तिः प्रत्याय्यते, वर्तमानप्रागभावप्रतियोगित्वमाश्रयत्वं च प्रत्ययेन। गृहाधिकरणकवर्तमानप्रागभावप्रतियोग्युत्पत्त्याश्रयो घटः, अद्यतनप्रागभावप्रतियोग्युत्पत्त्याश्रयो घट इत्यन्वयबोधात्। वर्तमानप्रागभावप्रतियोगित्वमात्रस्य लृडाद्यर्थत्वे श्वो गृहे समुत्पन्नः परश्वः प्राङ्गणं गमिष्यति मैत्रे प्राङ्गणे मैत्रो भविष्यतीति प्रसङ्गः। केचित्तु देशविशेषः कालविशेषश्च प्रागभावे प्रतियोगिनि चान्वेति। परश्वः प्राङ्गणे मैत्रो भविष्यतीत्यस्य परश्वोवृत्तिः प्राङ्गणवृत्तिश्च यः प्रागभावस्तत्प्रतियोग्युत्पत्त्याश्रयः परश्वोवृत्तिः प्राङ्गणवृत्तिर्मैत्र इति बोधः। तेन नोक्तातिप्रसङ्गः। एवञ्च श्वोभाविनि घटे अद्य भविष्यतीति प्रसङ्गो निरस्त इत्याहुः।

नङ्क्ष्यतीत्यादौ वर्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वं प्रतियोगित्वं च प्रत्ययार्थः। श्वो घटो नङ्क्ष्यतीत्यादौ श्वोवृत्तिवर्तमानप्रागभावप्रतियोगिनी योत्पत्तिस्तदाश्रयनाशप्रतियोगी घट इत्यन्वयबोधः। यत्त्वत्र वर्तमानप्रागभावप्रतियोगित्वमेव प्रत्ययार्थः। तन्न। श्वोभाविनाशके घटे अद्य नङ्क्ष्यतीति प्रसङ्गात्। पक्ष्यतीत्यादौ श्वोपाकस्य

---

लक्ष्योऽपि। श्वोभाविनाशक इति—श्वोभावी नाशो यस्य तस्मिन्नित्यर्थः। श्वोपाकस्येति—विक्लित्त्यनुकूल फूत्काराद्यधःश्रपणान्तानेकगुणभूतावयवकक्रियाकलापो हि पच्धात्वर्थव्यापारः पाकशब्दवाच्यः। तदुक्तम्—

*"गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।*
*बुद्ध्या प्रकल्पिताऽभेदः क्रियेति व्यपदिश्यते॥ इति।*
*यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।*
*आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते॥ इति च।*

क्तिप्रागभावगर्भमेव भविष्यत्त्वम् पक्ष्यवानित्यादौ चरमपाकव्यक्तिध्वंसगर्भमेवभूतत्व भासते। तत्तत्समभिव्याहारस्य तादृशबोधे हेतुत्वात्। तेन पाकमध्ये कस्याश्चित्पाकव्यक्तेरनुत्पादेऽपि कस्याश्चिदतीतत्वेऽपि न पक्ष्यति पक्ष्यवानित्यादिप्रयोग ।

लिङो विधिराशीश्चार्थं । यजेतेत्यादौ विधि' आशीस्तु भूयादित्यादौ। सा च शुभाशसन तदिच्छेति यावत्। लोटस्तु विधिरनुमतिर्वा। गच्छत्वित्यत्रानुमतिविषयगमनानुकूलकृतिमानिति बोधस्यानुभविकत्वात्। विधि प्रवर्त्तनेति भाट्टा । लिङ्निष्ठो व्यापार' पदार्थान्तर लिङ्पदज्ञानमेव वा। तस्य प्रवर्त्तनात्वेन ज्ञान शब्दाधीनप्रवृत्तौ कारणम् । लिङ्श्रवणे आचार्यो मा प्रवर्तयतीति ज्ञानाद्गमनयजनादौ

---

एवञ्चाद्यपाकपदेन फूत्कारस्य चरमपाकपदेन च अघ अर्पणस्य ग्रहण कर्त्तव्यम्।

प्रवर्त्तनेति भाट्टा'—भाट्टा =कुमारिलभट्टस्य शिष्या मीमांसकविशेषा इत्यर्थ अस्य आहुरित्यग्रिमेणान्वय । ननु केय प्रवर्त्तना ? इत्यत आह—लिङ्निष्ठो व्यापार इति । तेषां मते वेदाऽपेक्षयेदम्। वेदस्याऽपौरुषेयत्वेन तत्र आचार्याऽभावात् शब्दनिष्ठैव प्रवर्तना। ननु शब्दनिष्ठ प्रवर्तनाऽपरपर्याय कोऽयं व्यापारः ? इत्यत आह पदार्थान्तरमिति—आर्थभावनारूपप्रसिद्धव्यापारविलक्षण इत्यर्थ, वैलक्षण्यञ्च शब्दनिष्ठत्वात्। ननु विलक्षणव्यापारस्याऽप्रसिद्धस्य कल्पने गौरवम्, लोके आचार्यनिष्ठाप्रवर्तनेत्यननुगमश्च। अत आह—लिङ्पदज्ञानमेव वेति। ननु लिङ्पदस्य केन रूपेण ज्ञान प्रवर्तना ? इत्यत आह—तस्य प्रवर्तनात्वेनेति। तस्य =लिङ्पदस्य। प्रवर्तनात्वेन =प्रवृत्तिहेतुत्वेन। ननु तादृग्ज्ञान किमाकारकम् ? इत्यत आह—लिङ्श्रवणे—आचार्यो मा प्रवर्तयतीति ज्ञानादिति। लिङ्श्रवणोत्तरकालिकम् आचार्यो मां प्रवर्तयतीतिज्ञानमेव तादृशमिति भाव । आचार्यपदस्याचार्यवेदोपलक्षणतयेदं लोकवेदोभयसाधारणम्। लोके [illegible] अन्याऽपि प्रवर्तना स्यात् आचार्यनिष्ठा, लिङ्घटितवाक्यप्रयोक्तृनिष्ठेति यावत्। ननु आचार्यनिष्ठा चेयं प्रवर्तना ? इत्यत आह—आचार्यनिष्ठेत्यादि। आचार्यस्य प्रयोज्यप्रवृत्त्यनुकूल आशयविशेष इत्यर्थं । सा प्रवर्तना द्विधा,

प्रवृत्तौ । आचार्यनिष्ठप्रवर्त्तना त्वभिप्रायविषय एवेत्याहुः । तन्न । स्तनपाना दिप्रवृत्तौ इष्टसाधनताज्ञानस्य हेतुताया आवश्यकत्वात् तत एवोपपत्तौ प्रवर्त्तनाज्ञानहेतुत्वे मानाभावात् । स्वर्गकामो यजेतेत्यादौ प्रवर्तनाविषया यागकारणिका स्वर्गकर्मिका भावनेति बोधस्य परैरभ्युपगमात् । प्रवर्तना विषयत्वमात्रज्ञानात् प्रवृत्त्यनुपपत्तेः आवश्यकस्वर्गसाधनत्वादिज्ञानादेव तत्र प्रवृत्तेः ।

कार्यं विधिरिति प्राभाकराः । स्वर्गकामो यजेतेत्यादौ स्वर्ग-

---

लौकिकवाक्ये पुरुषनिष्ठोऽभिप्रायविशेषः वैदिकवाक्ये तु पुरुषाऽभावाल्लिङादि शब्दनिष्ठ एव । अथवा लोकवेदोभयसाधारणं लिङ्पदस्योक्तरूपं ज्ञानमेवेष्ट प्रवर्तनेति तत्त्वम् ।

कार्यं विधिरिति प्राभाकरा' इति—कार्यं कृतिसाध्यम् । प्राभाकराः प्रभाकरनामाचार्यशिष्या मीमांसकविशेषा इत्यर्थः । अत्रायं परिष्कारः प्रतिभाति—शाब्दबुद्धौ योग्यताज्ञानस्य हेतुत्वेन अन्वयप्रयोजकरूपवत्त्वस्य योग्यतात्वेन 'घटेन जलमाहर' इत्यत्र घटे जलाहरणकरणत्वाऽन्वयाय सच्छिद्रेतरत्वरूपयोग्यताया ज्ञानमिव 'स्वर्गकामो यजेत' इत्यत्राऽपि यज्धातूत्तरप्रत्ययवाच्य—यागकरणकभावनायां प्राभाकरैःऽनुभवसिद्धस्य लिङ्वाच्यकृतिनिष्पाद्यरूपकार्याऽभेदान्वयस्य 'यागभावना कार्या' इत्याकारकस्य सिद्धये यागभावनायां नियोज्याऽन्वयरूपाया योग्यतायाः शाब्दबोधे ज्ञानमावश्यकम् । भावनायां नियोज्याऽन्वयश्च प्राभाकरमते—'स्वर्गकामनियोज्यिका यागभावना' इत्येवं रूपः—स्वर्गकामनिष्ठनियोज्यत्वनिरूपितनियोजकत्ववती यागभावनेति यावत् । स्वर्गकामे नियोज्यत्वञ्च—क्रियानिष्ठकाम्यसाधनताज्ञानाधीनमत्कार्यत्वप्रकारकज्ञानवत्त्वम्, तच्च स्वर्गकामपुरुषे तदन्वयाऽन्वयरूपयागभावनीययोग्यताया अवच्छेदकम्, वैयधिकरण्येऽपि तस्य सम्बन्धविशेषेण भावनानिष्ठत्वसिद्धेः । भावनायां नियोजकत्वञ्च—स्वनिष्ठकाम्यसाधनता-ज्ञानजन्यमत्कार्यत्व ( स्वर्गकामकार्यत्व )—प्रकारकज्ञानविशेष्यत्वम् । जगदीशमते भावनायां नियोज्यान्वयश्च—'स्वर्गकामनियोज्यताका यागभावना' 'नियोज्यतासम्बन्धेन स्वर्गकामविशिष्टा या यागभावना' इत्येवंरूपः—'स्वर्गकामसमवेतस्वर्गसाधनताधीजन्यकार्यत्वप्रकारकज्ञानीयविशेष्यतावती यागभावना' इत्याकारक इति

कामनियोज्यकं यागविषयकं कार्यमिति प्राथमिको बोधः। स्वनियोज्यक स्यायिस्वर्गसाधनं यागविषयकं कार्यमिति द्वितीयः। स्वर्गकामनियोज्यको यागः स्वर्गकामकार्यम् इति तृतीयः। स्वर्गकामो यागकर्तेति चतुर्थः। अहं स्वर्गकामाऽतो यागो मत्कृतिसाध्य इति पञ्चमः। न च प्रथमत एव स्वर्गकामकार्यो याग इति बोधोऽस्तु, तथा च कार्यत्वे एव शक्तिर्न कार्ये इति वाच्यम्। यागादिक्रियाया नियोज्यान्वयं विना कार्यत्वान्वया नुपपत्तेः। नियोज्यस्य हि क्रियानिष्ठकार्यसाधनताज्ञानाधीनं मत्कार्यमिति बोधजनकत्वम्। तच्च स्वर्गकामनाविशिष्टे योग्यतावच्छेदकतया भासते। घटेन जलमाहरेत्यत्र घटे छिद्रेतरत्ववत्। न च यागे स्वर्गसाधनत्वज्ञानं विनेदृशं नियोज्यत्वं भातुमर्हति, न वा यागे स्वर्गसाधनत्वं प्रथममेव शक्यं ज्ञातुं, तद्धि साक्षात्परम्परया वा। नाद्यः। आशुविनाशिनो यागस्य कालान्तरभाविस्वर्गरूपफले साक्षाद्हेतुत्वात्। नान्त्यः।

यावत्। नियोज्यत्वञ्च तन्मते—स्वर्गकामनिष्ठस्य स्वर्गसाधनताधीजन्यकार्यत्व प्रकारकज्ञानस्य विशेष्यत्वम्। नियोजकत्वस्य चोपयोग एव नास्ति एतन्मते। उक्तरूपस्य भावनानुयोगिकनियोज्याऽन्वयस्य लिङ्थकार्याऽन्वयप्रयोजकरूपवत्त्वरूपयोग्यतात्वञ्च—'प्रवृत्तिमात्रं प्रति मदिष्टसाधनताज्ञानजन्यमत्कार्यत्वप्रकारकज्ञानं चिकीर्षोत्पादनद्वारा लाघवात्कारणम्' इति प्राभाकराऽनुभवसिद्धव्युत्पत्तिमूलकम्। इष्टसाधनत्वादिज्ञानानां (नैयायिकोक्तानां) त्रयाणां कारणत्वकल्पनाऽपेक्षया एकस्यैव तादृग्ज्ञानस्य कारणत्वकल्पने हि लाघवम्। इष्टसाधनताज्ञानजन्यकार्यत्वप्रकारकज्ञाने सति जलताडनसुमेरुशिखराऽऽहरणमधुविषसम्पृक्तान्नभक्षणेषु प्रवृत्तेरदृष्टत्वात्।

एवञ्च नियोज्यान्वयभानस्याऽऽवश्यकत्वे घटकतया कारणीभूतत्वेन भावनायां स्वर्गसाधनत्वज्ञानमावश्यकम्। भावनायां स्वर्गसाधनत्वज्ञानार्थञ्च कार्यत्वेन रूपेण अपूर्वनामकस्य पदार्थविशेषस्य लिङा भानमावश्यकम्। अन्यथा तृतीयक्षणवृत्तिध्वंसप्रतियोगिन्या यागभावनाया बहुकालान्तर (मरणानन्तर) भाविस्वर्गं प्रति साक्षात्साधनत्वस्याऽग्रहापत्तेः (साक्षादजनकत्वापत्तेः)। कार्याऽव्यवहितप्राक्क्षणाऽवच्छेदेन कार्यव्यापकत्वरूपस्य कारणत्वस्य तत्राऽभावात्। 'यागभावनाविषयकमपूर्वात्मकं कार्य'मितिरूपेण अपूर्वस्योपस्थितौ तु तस्य स्वर्गावधिस्थायित्वात्

परम्पराघटकापूर्वानुपस्थितेः । अतो यागविषयकं कार्यमिति प्रथमबोधादपूर्वोपस्थितौ तद्द्वारा यागे स्वर्गसाधनत्वप्रकारककार्यत्वबोध इत्युक्तम्। नियोज्यत्वं च पदानुपस्थितमपि योग्यतया शाब्दबोधे भासते द्वारमित्यत्र पिधेहीतिरत् ।

प्रवर्तकज्ञानविषयो विधिरिति नैयायिकाः । प्रवर्तकत्वं च कृतिसाध्यत्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वानां ज्ञानम् । अतस्तेषु लिङ् शक्तित्रयं सुमेरुशृङ्गाहरणनिष्फलाचारणमधुविषसंपृक्तान्नभोजनेषु प्रवृत्तिवारणाय यथासङ्ख्यं त्रयाणामेव ज्ञानं प्रवर्तकम् । यत्तु समुदिते शक्तिरेकैवेति । तन्न । विशेष्यविशेषणभावे विनिगमकाभावेन भिन्नैव पृथक्शक्तिः । एवञ्च स्वर्गकामो यजेतेत्यादौ स्वर्गकामीयो यागः कृतिसाध्यः, इष्टसाधनं बलवदनिष्टाननुबन्धी चेति बोध इत्येके।

---

भवति तद्द्वारा ( परम्परया,—यागभावनाया अपूर्वोत्पत्तिः, अपूर्वाच्च स्वर्गोत्पत्तिरिति रीत्या ) भावनायां स्वर्गसाधनत्वज्ञानम् । भावनाविषयकत्वञ्च अपूर्वस्य, भावनाविषयककृतिसाध्यत्वमेव । तस्मात्कार्य एव लिङः शक्तिर्वाच्या, कार्यञ्च कृतिसाध्यम् । मुख्यस्य तृतीयबोधस्य लिङर्थस्य 'स्वेनैतद्रूपेण वाच्यताऽऽपत्तौ, तेनैव रूपेणाऽपूर्वस्याऽप्युपस्थितिः, तस्याऽपि कृतिसाध्यत्वाऽविशेषात् ।

तथा च—'स्वर्गकामकर्तृकयागकरणकभावनाविषयकं कार्यरूपमपूर्वम्'—इति प्रथमो बोधः । अत्र बोधे कार्यात्मकतयाऽपूर्वोपस्थितत्वमेव च कार्यत्वं विहाय कार्ये लिङः शक्तिरुदीरितेति ध्येयम् । ततश्च—'स्वर्गकामकर्तृकयागभावनाविषयकत्वादिरूपेण स्वर्गसाधनं कार्यरूपमपूर्वम्' इति द्वितीयो बोधः । ततश्च—'स्वर्गकामनियोज्यनिष्ठा यागभावना स्वर्गकामकार्या' इति तृतीयो बोधः । प्रथमबोधादपूर्वोपस्थित्या यागभावनायां स्वर्गसाधनत्वप्रकारको द्वितीयो बोधः । द्वितीयबोधात् स्वर्गसाधनत्वप्रकारकज्ञानात् शाब्दबोधहेतुभूतयोग्यतया नियोज्यपदस्यापि सत्त्वेन यागभावनायां स्वर्गकामकार्यत्वस्य प्रकारकः प्रकृष्टोपयोगिस्तृतीयः शाब्दबोधः ।

अयमेव च मुख्यः शाब्दबोधः प्रवृत्त्युपयोगित्वात् । अत्र पदनिष्ठतया अनुपस्थितमपि नियोज्यत्वं वाक्यशक्त्योपस्थाप्यते, द्वारमित्युक्ते पिधेहीति यथा । अत्र चाऽऽकरग्रन्था 'शाब्दबोधे चैकपदार्थे' इत्यादि गदाधरग्रन्थे ।

वस्तुतो नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नतया तादृशयागानुकूलकृतिमान् स्वर्गकाम इत्येव बोध । कृतिसाध्यत्वं च प्रवृत्तिसाध्यत्वमतो न समुद्रतरणादौ प्रवृत्ति । इष्टसाधनत्वं चेष्टनिष्ठसाध्यतानिरूपकत्वमतो न तृप्तस्य भोजने प्रवृत्ति । बलवदनिष्टाननुबन्धित्वं तु स्वजन्येष्टोत्पत्तिनान्तरीयकदुःखेतरदुःखाजनकत्वम् । न हि सुखं दुःखैर्विना लभ्यत इति न्यायेन नान्तरीयकं किञ्चिद्दुःखमिष्टोत्पत्तौ अवश्यभावि तदतिरिक्तदुःखाजनकत्वमेव तत्त्वम् । ब्राह्मणो न हन्तव्य इत्यादौ नञ कृतिसाध्यत्वेष्टसाधनत्वनिषेधे तात्पर्याभावात्तेन बलवदनिष्टाननुबन्धित्वनिषेधाद् ब्राह्मणवधो बलवदनिष्टजनक इत्यर्थे पर्यवस्यति । एतेन समुदिते लिङ्शक्तिकल्पनमपास्तम् । यद्यपि प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययस्येति व्युत्पत्त्या नञर्थे बलवदनिष्टाननुबन्धित्वान्वयोऽसम्भवी तथाप्यन्यथानुपपत्त्या एतदतिरिक्तस्थल एव सा व्युत्पत्ति । अत एव नातिरात्रे षोडशिनं गृह्णातीत्यादौ षोडशिग्रहणाभाव इष्टसाधनमिति बोध इति दीधितिकृत । न हन्तव्य इत्यादौ हननाभावविषयकं कार्यमिति बोध इति गुरव । ननु पचतीत्यादौ लडाद्यर्थवर्तमानत्वादे यत्ने एवा

अत्र कृतिसाध्यत्वविशिष्टात्मकलिङ्वाच्यकार्यघटककृतेराश्रयाकाङ्क्षापूरणार्थमपरोऽपि चतुर्थो बोध —'स्वर्गकामो यागभावनाविषयकृत्याश्रय' इत्याकारक । सर्वेषामेषां निष्कर्षभूतोऽपरोऽपि पञ्चमो बोध —'अहं स्वर्गकाम , अतो यागभावना मत्कृतिसाध्या ( मदीययत्नाद्या )' इत्यात्मक ।

इमे पञ्चाऽपि बोधा स्वव्युत्पत्त्यनुरोधात्प्राभाकरैरभ्युपेयन्ते । तत्र तृतीय एव मुख्य शाब्दो बोध , तत्रादिना प्रथमोऽपि शाब्द इति कथयितुं शक्यते । द्वितीय चतुर्थौ तु मानसावाचार्यैरेवेति निश्चीयते । लोके तु 'तृप्तिकाम पचेत्' इत्यादौ प्रथम द्वितीययोर्नावश्यकता ( द्वि ) बोधयो , लोकप्रमाणादेव पाकभावनायां तृप्तिसाधनत्वस्य ग्रहात् । तृतीयसदृश एव बोधः शाब्द । जगदीशभट्टाचार्येण तु वेदेऽपि द्वावेव प्रथमतृतीयाकारौ बोधौ प्राभाकरीयत्वेन दर्शितावित्यलम् ।

नातिरात्र इति—अतिरात्रो यागविशेष , षोडशी सोमरसस्थापनार्थं पात्रविशेष । गृह्णाति—गृह्णीयादित्यर्थ ।

न्वयान्न सा व्युत्पत्तिः । मैवम् । यत्र प्रत्ययार्थं तत्र प्रकृत्यर्थोन्वितस्वार्थ बोधकत्वमिति व्याप्तेः यः प्रत्ययार्थः स प्रकृत्यर्थस्य विशेष्यतया भासते इति व्याप्तेश्च ।

लेटस्तु यच्छब्दासमभिव्याहृतस्यैव विधिरर्थः । समिधो यजतीत्यादौ विधिप्रत्ययात् देवाश्च याभिर्यजते ददाति च । य एव विद्वान् मावास्यायां यजते इत्यादौ लट्प्रत्ययादिति ।

लृङस्तु भूतत्वे क्रियातिपत्तिश्चार्थः । अतिपत्तिरनिष्पत्तिराशङ्का रूपा । सा च शक्या । सा चापादना तर्कः । तत्कर्मत्वं च मानसत्वव्याप्यो जातिविशेषः । एधाश्चेदलप्स्यत ओदनमपक्ष्यत् इत्यादौ एधकर्मको भूतत्वेनापादनाविषयो लाभस्तदनुकूलकृतिमान् ओदनकर्मको भूतत्वेनापादनाविषयो यः पाकस्तदनुकूलकृतिमांश्चेति बोधः । भविष्यति क्रियातिपत्तनेऽपि लृङ् । यदि सुवृष्टिरभविष्यत् तदा सुभिक्षमभविष्यत् इति प्रयोगदर्शनाद् भूतत्वभविष्यत्त्वयोर्बोधनियमस्वात्पर्यात् । यदि स्यादि त्यादौ लिङोप्यापादनायां शक्तिः । यदि निर्वह्निः स्यात्तर्हि निधूमः स्यादित्यादौ तस्या एव प्रतीतेः । लाघवेन स्यानिना बाधकत्वात् लङ्स्यापि लकारार्थः ॥ इति लकारार्थनिर्णयः ॥

---

इति लादेशार्थवाद इति–अत्रेदमपि ज्ञातव्यम्–न वास्तवमनद्यतनत्वादिकं लङादिनियामकम्, किन्तु वैवक्षिकमेव । अत एव "लुङ्" सूत्रे भाष्ये–"लुङ्लङ् लृङपवादप्रसङ्गो भूतभविष्यतोरविशेषवचनात्" इत्यनेन "अगमाम घोषान्", "गमिष्यामो घोषान्" इत्यादौ विशेषविहिताभ्यां लङ्लृड्भ्यां सामान्यविहितयोर्लुङ्-लृटोर्बाधः प्राप्नोतीत्याशङ्क्य—"न वाऽपवादस्य निमित्ताऽभावात्" इत्युत्तरस्य व्याख्याने "न ह्यद्यतनकालो विवक्षितः । किं तर्हि ? भूतकालसामान्यम्, भविष्यत्कालसामान्यञ्च । कथं पुनः सतो नामाऽविवक्षा स्यात् ? सतोऽप्यविवक्षा भवति । तद्यथा—अलोमिका एडका, अनुदरा कन्येति । असतश्च विवक्षा भवति । तद्यथा—समुद्रः कुण्डिका, विन्ध्यो वर्धितकमिति ।" इत्युक्तम् । तुल्यन्यायत्वात् लिङ्विषये पाणिनीयेऽपीदमतिदेश्यमिति शम् । इति लादेशार्थवादः ।

अथ कारकाणि निरूप्यन्ते ।

> कर्ता कर्म च करणं सम्प्रदानं तथैव च ।
> अपादानाधिकरणमित्याहुः कारकाणि षट् ॥

तत्र क्रियानिष्पादकत्वं कारकत्वम् । तच्च कर्त्रादीनां षण्णामपि ।

---

> *मृलजालं घरोड्यानपद्मजिह्वाद्विरन्धने,*
> *स्वरूपेऽनस्थितं सिद्धयै कञ्चिदीशं श्रयामहे ॥ १ ॥*
> *चन्द्रवन्तं ललाटान्तश्छेदेन मधुरेक्षणम्,*
> *शब्दाऽनुशासनार्थाय कञ्चिदीशं प्रशास्महे ॥ २ ॥*

अवसरसङ्गत्या लादेशार्थनिरूपणानन्तरं सुबर्थरूपाणि कारकाणि निरूपयितुं प्रतिजानीते—अथेति—अथ शब्दं श्रुत्या शङ्खादिवन्मङ्गलार्थं, तदुक्तम्—

> *"ओङ्कारश्चाऽथशब्दश्च द्वावेतौ ब्रह्मणः पुरा,*
> *कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ" इति ।*

अथपदं वृत्त्या चानन्तर्यार्थं आनन्तर्यञ्च स्वोत्तरकालिकत्वरूपं स्वध्वंसाधिकरणकालवृत्तित्वम् । स्वपदञ्चात्र लादेशार्थनिरूपणपरामर्शकम् । लादेशार्थनिरूपणस्य आनन्तर्यपदार्थैकदेशे ध्वंसे स्वप्रतियोगिकत्व ( प्रतियोग्यनुयोगिभाव ) सम्बन्धेनाऽन्वयः । एवञ्च अथेत्यस्य—लादेशार्थनिरूपणप्रतियोगिकध्वंसाधिकरणकालवृत्तित्वमित्यर्थं पर्यवसितः । अन्वयश्चाऽस्य 'निरूप्यन्ते' इत्येतद्घटकनिपूर्वकण्यन्तरूपधात्वर्थौ ज्ञानं व्यापारश्च । तत्र व्यापारे स्वरूपसम्बन्धेन व्यापारस्य जन्यत्वेन ज्ञाने । 'अन्ते' इति कर्मप्रत्ययार्थः कर्मत्वशक्तिमान्, तत्र कारकाणीति प्रथमान्तपदार्थस्याऽभेदेनाऽन्वयः । कर्मणश्च विषयतानिरूपकत्वेन ज्ञानेऽन्वयः वर्तमानकालश्च प्रत्ययार्थस्तस्य वृत्तित्वसम्बन्धेन धात्वर्थव्यापारेऽन्वयः । मयेत्यध्याहार्यम्, अस्मच्छब्दार्थः श्रीनागेशः, तस्य तृतीयार्थकर्तरि अभेदेनाऽन्वयः, तृतीयार्थस्य च क्रियाकारकभावसम्बन्धेन धात्वर्थव्यापारेऽन्वयः । तथा च—लादेशार्थज्ञापनोत्तरकालिकं वर्तमानकालिकं श्रीनागेशकर्तृक-व्यापारजन्य-कारककर्मकं ज्ञानमिति बोधः । निरूप्यन्त इति—सामान्यतो विशेषतश्चेतिशेषः ।

कारकविशेषानाह—कर्ता कर्मेति । कारकसामान्यमाह—तत्रेति—

तत्रेति निर्धारणसप्तम्या तेषाम्मध्य इत्यर्थः। क्रियानिष्पादकत्वमिति—क्रिया निर्वर्तकत्वम्, क्रियाजनकत्वम्, क्रियोत्पादकत्वमितियावदर्थः। अत्र सर्वत्र मूले "कारके" इति सूत्रस्थं भाष्यम्। तत्र हि—"कारक इति संज्ञानिर्देशश्चेत् संज्ञिनोऽपि निर्देशः कर्तव्यः—साधकं निर्वर्तकं कारकसंज्ञं भवतीति वक्तव्यम्। (इतरथा) कर्मसंज्ञाप्रसङ्गश्चाऽकथितस्य—ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति। नैष दोषः, कारक इति महती संज्ञा क्रियते, संज्ञा च नाम यतो न लघीयः कुत एतत्? लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम्—अन्वर्थसंज्ञा यथा विज्ञायेत—'करोतीति कारकमिति'" इत्युक्त्वा तदग्रे च 'ननु करोतीति व्युत्पत्त्या कर्तृण्वुलन्त'कारक'शब्दस्य धातुवाच्यप्रधानव्यापाराश्रयरूपस्वतन्त्र एव वृत्तौ प्रधानेन कर्त्रा समवाये स्थाल्यादीनां धातुवाच्यप्रधानव्यापाराऽऽश्रयत्वेन विवक्षितत्वेऽपि प्रधानेन समवाये तथा विवक्षितुमशक्यत्वेन युगपद् 'अधिकरण'मिति 'कारक'मिति च स्थाल्या व्यपदेशो न स्यादि'त्याशयेन—'ननु च भोः प्रधानेनाऽपि समवाये स्थाल्या अनेनार्थो'ऽधिकरण' 'कारकमि'ति ?" इत्याशङ्क्य—"एवं तर्हि सामान्यभूता क्रिया वर्तते, तस्या निर्वर्तकं कारकमिति" इति समाहितम्। सर्वेषां च कारकाणां साध्यभूता क्रिया फलाऽनुकूलव्यापाररूपा धर्मो, तस्या उत्पत्त्यनुकूलव्यापाराऽऽश्रयरूपं सामान्यमेवाऽत्र 'कारक'शब्देन विवक्षितं न तु क्रियोत्पत्त्यनुकूलव्यापाराश्रयविशेषो धातुवाच्यप्रधानव्यापाराश्रयरूपः स्वतन्त्र एव, कारकाधिकारे करणादिसंज्ञानां विधानसामर्थ्यादिति च तदाशयः कैयटे व्याख्यातः। अत्राऽयं परिष्कारः—'क्रियानिर्वर्तकं कारकम्' इति भाष्यस्य क्रियोत्पादकं कारकमित्यर्थः। क्रियोत्पादकत्वञ्च क्रियोत्पत्त्यनुकूलव्यापाराऽऽश्रयत्वम्। क्रिया च व्यापारः, 'क्रियते' इति योगात्क्वचित् क्रियाशब्देन फलार्थस्य ग्रहणेऽप्यत्र रूढ्या व्यापारस्यैव ग्रहणात्, अन्यथा प्रवृत्तत्वेन कल्पनया।—कर्मणोऽपि कारकत्वाऽऽपत्तेः, कारकाणां भावनाऽभिधव्यापाराऽन्वयस्य भूरिप्रयोगेषु दर्शनात् तस्याऽनुरोधेन व्यापारजनकत्वस्यैवौचित्याच्च। व्यापारश्च धातुवाच्य एव साध्यभूतः। एवञ्च धातुवाच्यव्यापारोत्पत्त्यनुकूलव्यापारवत्त्वं कारकत्वमिति निष्कर्षः। यथा—प्रधानेन कर्त्रा समवाये पच्यात्मकव्यापारे—अधिश्रयणोदकासेचनतण्डुलावपनैधोऽपकर्षणाद्यवयवकलापः", तदुत्पत्त्यनुकूलो व्यापारः स्थाल्यादिके कर्तरि मनो

कृतधातुवाच्यव्यापाराश्रयत्वं कर्तृत्वम्।

धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते ॥ इति हर्युक्ते।

यापारो यत्नरूप, तदाश्रयत्वात्कर्तुः कारकत्वम्। एवम् अधिश्रयणाद्युत्पत्त्यनुकूलो-यापार कर्मणि तण्डुलादौ विक्लित्तिधारणम्, करणे काष्ठादौ ज्वलनम्, अधिकरणे स्थाल्यादौ च धारणमिति तत्तदाश्रयत्वात्तेषां कारकत्वम्। अधिश्रयणादीनां क्रियांशद्योतनार्थमविवक्षायां प्रधानकर्तृव्यापाराये तु स्थालीस्थव्यापारस्य पच्धात्वर्थत्वविवक्षायां 'स्थाली पचती'त्यत्र पच्धात्वर्थो धारणरूपो व्यापार, तदुत्पत्त्यनुकूलो यत्नरूपो मनोव्यापार स्थाल्यामारोपित तदाश्रयत्वात्स्थाल्यो कारकत्वम्। स्थालीपचती'त्यत्रारोपितचैतन्यस्य मानात्। एवमन्यत्राप्यूह्यम्। 'विप्राय ददाती'-त्यादावसन्निहितसम्प्रदानस्यापि दातृबुद्धिस्थत्वाऽऽवश्यकतया स्वबुद्धिपूर्वकालकर्तृत्वेन-बुद्धिविषयीभवनव्यापारेण क्रियोत्पादकत्वम्, अपादानस्याऽपि अवधिभवन व्यापारेण क्रियोत्पत्त्यनुकूल व्यापारवत्त्व बोध्यम्—तदाह—तच्च कर्त्रादीनां षण्णामपीति मूले। 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छती'त्यत्र तु ब्राह्मणस्य न कारकत्वम्, पुत्रेणाऽन्यथासिद्ध्या क्रियोत्पादकत्वाऽभावादित्यलम्।

कारकविशेषलक्षणानि क्रमेण निरूपयन्नाह—तत्रेति—तेषां षण्णां मध्य इत्यर्थ। प्रकृतधातुवाच्येति—अत्र च मूलं "कारके" इति सूत्रस्थम्—"एवं तर्हि स्थालीस्थे यत्ने (पचिना) कथ्यमाने स्थाली स्वतन्त्रा, कर्तृस्थे यत्ने कथ्यमाने परतन्त्रा" इति भाष्यमेवेतिबोध्यम्। स्थालीस्थव्यापारस्य धातुवाच्यत्वविवक्षायां स्थाल्या। स्वातन्त्र्येण कर्तृसंज्ञायां 'स्थालीपचती'ति, चैत्रादिस्थव्यापारस्य धातुवाच्यत्वविवक्षायान्तु 'चैत्र स्थाल्यां पचती'ति प्रयोग इति तद्भाष्याशय। स्थाल्यादीनां प्रधानकर्तुश्च व्यापार "कारके" इति सूत्रे भाष्ये स्पष्ट। तत्र हि—"अधिश्रयणोदकासेचनतण्डुलाऽऽवपनैधोऽपकर्षणक्रिया प्रधानस्य कर्तु पाक। द्रोणं पचत्याढकं पचतीति सम्भवनक्रिया धारणक्रिया चाऽधिकरणस्य पाक। एधांसि पक्ष्यन्त्यानिक्लित्तेर्ज्वलिष्यन्तीति ज्वलनक्रिया करणस्य पाक। पर्याप्त करणाधिकरणयो कर्तृत्व (कारकत्व) निदर्शितमपादानादीनां कर्तृत्वनिदर्शनाय, पर्याप्तो ह्येक पुलाक स्थाल्या निदर्शनाये"त्युक्तम्। अत्रेदं तु चिन्त्यते—'कर्तु पाक' 'अधिकरणस्य पाक' 'करणस्य पाक' इति भाष्ये 'पाक' इत्यंशेन सर्वेषामेव कार-

कारा। व्यापारस्य धातुवाच्यत्वं प्रतीयते। "स्थालीस्थे यत्ने कथ्यमाने स्थाली स्वतन्त्रा, कर्तृस्थे यत्ने कथ्यमाने परतन्त्रा" इति भाष्येण च एकदा एककारकस्य व्यापारस्यैव धातुवाच्यत्वं बोध्यते, विवक्षया च पर्यायेण प्रत्येककारकव्यापारस्य धातुवाच्यत्वं बोध्यते। ततश्चाऽयं निष्कर्षः प्रतिभाति—पच् धातौ नानाशक्तयः, अधिश्रयणादिप्रधानकर्तृस्थव्यापारनिरूपिता प्रसिद्धैका, स्थाल्यादिस्थसम्भक्तधारणक्रियानिरूपिताऽन्या, काष्ठादिस्थज्वलनक्रियानिरूपिताऽपरा, तण्डुलादिनिष्ठविक्लित्त्यादिधारणक्रियानिरूपिता चेतरेति। तत्र प्रधानकर्तृस्थव्यापारनिरूपितैवाऽऽदेशोऽनुसन्धानेन मुख्या, इतरास्तु कारकलक्षणपरिष्कारोक्तरीत्याऽऽदेशोऽनुसन्धानाद् मुख्या इति विवेकः। विवक्षया चाऽर्थाऽनुसारेण तस्यास्तस्याः शक्तेरुद्बोधः, प्रकरणादीनां शक्तिपरिच्छेदकत्वात्। स्थालीस्थे यत्ने कथ्यमाने 'स्थाली स्वतन्त्रा' इति भाष्येण यस्य कारकस्य स्वातन्त्र्यविवक्षा तदीयकारकव्यापारस्यैव धातुवाच्यत्वमेकदेति नियमः, अपरकारकव्यापारस्य तु न तदा धातुवाच्यत्वमिति तदा तस्य शाब्दत्वं न, किन्तु विभक्त्या कर्मादीनां शाब्दत्वे तद्वृत्तिव्यापारस्याऽर्थलभ्यत्वेन भवतीतिसुधियो विभावयन्तु।

इदञ्चाऽप्यवधेयम्—अत्र प्रकृतधातुवाच्यव्यापाराश्रयत्वरूपे कर्तृलक्षणे प्रकृतधातुवाच्यो व्यापारः प्रधानाऽप्रधानन्यायेन प्रधानीभूत एव गृह्यते, तेन 'अग्नेर्माणवकं धारयती'त्यादौ संयोगाऽनुकूलव्यापाराऽभावाऽनुकूलव्यापाराश्रयत्वात्धारिवातर्पभूतसंयोगाऽनुकूलव्यापारस्याऽऽश्रयत्वेऽपि माणवकादेर्न कर्तृत्वम्, अन्यथा तृतीयापत्तेः, तदीप्सिततमत्वात्। अग्नावपि कर्मत्वप्राप्त्या निरवकाशत्वात् "धारेरुत्तमर्णः" इति भाष्यवचनेऽपि पञ्चम्यापत्तेश्च। यदन्ते 'देवदत्तेन पाचयती'त्यादौ तु णिचो वाचकत्वेन यदन्ताऽण्यन्तधातुद्वयीप्रधानव्यापाराश्रयत्वेन प्रयोज्यप्रयोजकयोर्द्वयोरपि कर्तृत्वम्। व्यापारे प्राधान्यञ्च न शाब्दबोधीयमुख्यविशेष्यताऽऽश्रयत्वरूपं, कर्मप्रत्यये फलस्य प्राधान्येनाऽन्यासे अपि तु अनुकूलत्वसम्बन्धाऽवच्छिन्नप्रकारताऽनाश्रयत्वे सति प्रतियोगित्वसम्बन्धाऽवच्छिन्नप्रकारताऽनाश्रयत्वम्, अन्वयेनाप्रतीयमानत्वे सति अभावाऽप्रतियोगित्वमिति यावत्। अनुकूलत्वसम्बन्धाऽवच्छिन्नत्वनिवेशात्—कर्मप्रत्यये व्यापारस्य प्रकारत्वेऽपि नाव्याप्तिः प्रयोज्यत्वसम्बन्धाऽवच्छिन्नप्रकारताश्रयत्वेऽपि अनुकूलत्वसम्बन्धाऽवच्छिन्नप्रकारताऽनाश्रयत्वात्।

अन्यकारकनिष्ठो व्यापारस्तु न प्रकृतधातुवाच्य । यथा वह्निना पचतीत्यत्र वह्निनिष्ठ प्रज्वलनादि । अन्यकारकनिष्ठव्यापाराश्रयस्य

---

तादृशप्रकारताऽनाश्रयत्वनिवेशात् 'गां दोग्धि पय' इत्यादौ दुहादे पयोनिष्ठ-विभागाऽनुकूलगोनिष्ठ-व्यापाराऽनुकूलव्यापारार्थकत्वपक्षे प्रथमव्यापाराश्रयस्य गवादेर्न कर्तृत्वाऽतिप्रसङ्ग । प्रतियोगित्वसम्बन्धाऽवच्छिन्नप्रकारताऽनाश्रयत्वनिवेशात्—'अग्नेर्माणवक वारयती'त्यादौ माणवके नातिव्याप्ति, माणवकव्यापारस्य अभावनिष्ठविशेष्यतानिरूपितप्रतियोगित्वसम्बन्धाऽवच्छिन्नप्रकारताश्रयत्वात् । तथा च—प्रकृतधातुविशिष्टव्यापाराश्रयत्व कर्तृत्वम् । वैशिष्ट्यञ्च—स्ववाच्यत्व स्ववाच्यनिरूपितजन्यत्वेनाऽप्रतीयमानत्व—स्ववाच्याऽभावाऽप्रतियोगित्वमितिसम्बन्धत्रयेणेति लक्षण पर्यवसितम । यद्यपि यथाश्रुतमूलोक्तलक्षणे प्रधानपदाऽघटितेऽपि 'अग्नेर्माणवक वारयती'त्यत्र माणवकस्य कर्तृत्वप्राप्तावपि वारिधात्वर्थव्यापार-प्रयोज्यफलाऽऽश्रयत्वेन कर्मत्वस्याऽपि प्राप्त्या शाब्दबोधीयमुख्यविशेष्यताऽऽश्रयत्व रूपस्य शाब्दप्राधान्यस्य अन्याऽनधीनत्वलक्षणार्थप्राधान्यस्य च कारकनिष्ठव्यापार एव सत्वेन तदनुरोधिकर्मत्वस्य कर्तृत्वाऽपेक्षया बलवत्त्वेन कर्तृसंज्ञाया बाधान्नातिप्रसङ्ग, कर्मसंज्ञासूत्रे च कारकाधिकारेणैव लाभसंभवे कर्तृग्रहणादप्रधानीभूत-व्यापाराश्रयस्य कर्तुर्ग्रहणादुक्तदोषान्तरापत्तिश्च न । प्रधानानुरोधिकार्यस्य सर्वतो बलवत्त्वादेव च गत्यादिसूत्रस्य "हृक्रोरन्यतरस्याम्" "चे"तिसूत्रस्थभाष्योक्त तत्सूत्रस्थशेषग्रहणस्य नियामकत्व सङ्गच्छते । 'एव गां दोग्धी'त्यादावपीति लक्षणे प्रधानपदा-वेशो नावश्यकस्तथापि अनेकक्लिष्टकल्पनाऽपेक्षया लक्षणे प्रधानपदावेश एव लाघवमिति द्रष्टव्यम् ।

अन्यकारकनिष्ठेति—स्पष्टञ्चेदं "कारके" इति सूत्रे भाष्ये—"स्थालीस्थे यत्ने (पचिना) कथ्यमाने स्थाली स्वतन्त्रा, कर्तृस्थे यत्ने कथ्यमाने परतन्त्रे"त्यनेन ।

अत्रेदमनघेयम्—"कारके" इतिसूत्रस्थभाष्यात्—'कारकचक्रप्रयोजकत्व कर्तृत्वम्' इत्यपि कर्तुर्लक्षणान्तरमायाति । तत्र हि—"कथं पुनर्ज्ञायते कर्ता प्रधानमिति ? यत्सर्वेषु साधनेषु सन्निहितेषु कर्ता प्रवर्तयिता भवती"त्युक्तम् । 'स्थाली पचती'त्यादौ तु कारकान्तरप्रवर्तकत्वस्यारोपान्निर्वाह इति तद्भाष्योद्योते स्पष्टम् ।

कारकाणां व्यापारस्य धातुवाच्यत्वं प्रतीयते । "स्थालीस्थे यत्ने कथ्यमाने स्थाली स्वतन्त्रा, कर्तृस्थे यत्ने कथ्यमाने परतन्त्रा" इति भाष्येण च एकदा एककारकस्य व्यापारस्यैव धातुवाच्यत्वं बोध्यते, विवक्षया च पर्यायेण प्रत्येककारकव्यापारस्य धातुवाच्यत्वं बोध्यते । ततश्चाऽयं निष्कर्षः प्रतिभाति—पच् धातौ नानाशक्तयः, अधिश्रयणादिप्रधानकर्तृस्थव्यापारनिरूपिता प्रसिद्धैका, स्थाल्यादिस्थसम्भवद्धारणक्रियानिरूपिताऽन्या, काष्ठादिस्थज्वलनक्रियानिरूपिताऽपरा, तण्डुलादिनिष्ठविक्लित्तिधारणक्रियानिरूपिता चेतरेति । तत्र प्रधानकर्तृस्थव्यापारनिरूपितैवारोपाऽननुसन्धानेन मुख्या, इतरास्तु कारकलक्षणपरिष्कारोक्तरीत्याऽऽरोपाऽनुसन्धानाद मुख्या इति विवेकः । विवक्षया चाऽर्थाऽनुसारेण तस्यास्तस्याः शक्तेरुपयोगः, प्रकरणादीनां शक्तिपरिच्छेदकत्वात् । स्थालीस्थे यत्ने कथ्यमाने 'स्थाली स्वतन्त्रा' इति भाष्येण यस्य कारकस्य स्वातन्त्र्यविवक्षा तदीयकारकव्यापारस्यैव धातुवाच्यत्वमेकदेति नियमः, अपरकारकव्यापारस्य तु न तदा धातुवाच्यत्वमिति तदा तस्य शाब्दत्वं न, किन्तु विभक्त्या कर्मादीनां शाब्दत्वे तद्वृत्तिव्यापारस्याऽऽर्थत्वमेव भवतीति सुधियो विभावयन्तु ।

इदञ्चाऽप्यवधेयम्—अत्र प्रकृतधातुवाच्यव्यापाराश्रयत्वरूपे कर्तृलक्षणे प्रकृतधातुवाच्यो व्यापारः प्रधानाऽप्रधानन्यायेन प्रधानीभूत एव गृह्यते, तेन 'अग्नेर्माणवकं धारयती'त्यादौ संयोगाऽनुकूलव्यापाराऽभावाऽनुकूलव्यापारार्थकधारिधात्वर्थभूतसंयोगाऽनुकूलव्यापारस्याऽऽश्रयत्वेऽपि माणवकादेर्न कर्तृत्वम्, अन्यथा तृतीयापत्तेः, तदीप्सिततमत्वात् । अग्नावपि कर्मत्वप्राप्त्या निरवकाशत्वात् "वारणार्थानामि"ति माणवकेऽपि पञ्चम्यापत्तेश्च । ण्यन्ते 'देवदत्तेन पाचयती'त्यादौ तु णिचो वाचकत्वेन ण्यन्ताऽण्यन्तधातुद्वयीयप्रधानव्यापाराश्रयत्वेन प्रयोज्यप्रयोजकयोर्द्वयोरपि कर्तृत्वम् । व्यापारे प्राधान्यञ्च न शाब्दबोधीयमुख्यविशेष्यताऽऽश्रयत्वरूपं, कर्मप्रत्यये फलस्य प्राधान्येनाऽव्याप्तेः अपि तु अनुकूलत्वसम्बन्धाऽवच्छिन्नप्रकारताऽनाश्रयत्वे सति प्रतियोगित्वसम्बन्धाऽवच्छिन्नप्रकारताऽनाश्रयत्वम्, अन्यत्वेनाऽप्रतीयमानत्वे सति अभावाऽप्रतियोगित्वमिति यावत् । अनुकूलत्वसम्बन्धाऽवच्छिन्नत्वनिवेशात्—कर्मप्रत्यये व्यापारस्य प्रकारत्वेऽपि नाऽव्याप्तिः प्रयोज्यत्वसम्बन्धाऽवच्छिन्नप्रकारताश्रयत्वेऽपि अनुकूलत्वसम्बन्धाऽवच्छिन्नप्रकारताऽनाश्रयत्वात् ।

अन्यकारकनिष्ठो व्यापारस्तु न प्रकृतधातुवाच्यः । यथा वह्निना पचतीत्यत्र वह्निनिष्ठं प्रज्वलनादि । अन्यकारकनिष्ठव्यापाराश्रयस्य

---

तादृशप्रकारताऽनाश्रयत्वनिवेशात् 'गां दोग्धि पयः' इत्यादौ दुहादेः पयोनिष्ठ-विभागाऽनुकूलगोनिष्ठ-व्यापाराऽनुकूलव्यापारार्थकत्वपक्षे प्रथमव्यापाराश्रयस्य गवादेर्न कर्तृत्वाऽतिप्रसङ्गः । प्रतियोगित्वसम्बन्धाऽवच्छिन्नप्रकारताऽनाश्रयत्वनिवेशात्—'अग्नेर्माणवकं वारयती'त्यादौ माणवके नातिव्याप्तिः, माणवकव्यापारस्य अभावनिष्ठविशेष्यतानिरूपितप्रतियोगित्वसम्बन्धाऽवच्छिन्नप्रकारताश्रयत्वात् । तथा च—प्रकृतधातुविशिष्टव्यापाराश्रयत्वं कर्तृत्वम् । वैशिष्ट्यञ्च—स्ववाच्यत्व स्ववाच्यनिरूपितजन्यत्वेनाऽप्रतीयमानत्व—स्ववाच्याऽभावाऽप्रतियोगित्वमितिसम्बन्धत्रयेणेति लक्षणं पर्यवसितम् । यद्यपि यथाश्रुतमूलोक्तलक्षणे प्रधानपदाऽघटितेऽपि 'अग्नेर्माणवकं वारयती'त्यत्र माणवकस्य कर्तृत्वप्राप्तावपि वारिधात्वर्थव्यापार-प्रयोज्यफलाऽऽश्रयत्वेन कर्मत्वस्याऽपि प्राप्त्या शाब्दबोधीयमुख्यविशेष्यताऽऽश्रयत्वरूपस्य शाब्दप्राधान्यस्य अन्याऽनधीनत्वलक्षणार्थप्राधान्यस्य च कारकनिष्ठव्यापार एव सत्त्वेन तदनुरोधिकर्मत्वस्य कर्तृत्वाऽपेक्षया बलवत्त्वेन कर्तृसंज्ञाया बाधान्नातिप्रसङ्गः, कर्मसंज्ञासूत्रे च कारकाधिकारेणैव लाभसंभवे कर्तृग्रहणादप्रधानीभूत-व्यापाराश्रयस्य कर्तुर्ग्रहणादुक्तदोषान्तरापत्तिश्च न । प्रधानानुरोधिकार्यस्य सर्वतो बलवत्त्वादेव च गत्यादिसूत्रस्य "हेतुमति चे"तिसूत्रस्थभाष्योक्त तत्सूत्रस्थशेष रीत्यञ्च नियामकत्वं संगच्छते । 'एव गां दोग्धी'त्यादावपीति लक्षणे प्रधानपदावेशो नावश्यकस्तथापि अनेकक्लिष्टकल्पनाऽपेक्षया लक्षणे प्रधानपदावेश एव लाघवमिति द्रष्टव्यम् ।

अन्यकारकनिष्ठेति—स्पष्टञ्चेदं "कारके" इति सूत्रे भाष्ये—"स्थालीस्थे यत्ने (पचिना) कथ्यमाने स्थाली स्वतन्त्रा, कर्तृस्थे यत्ने कथ्यमाने परतन्त्रे"त्यनेन ।

अत्रेदमवधेयम्—"कारके" इतिसूत्रस्थभाष्यात्—'कारकचक्रप्रयोजकत्वं कर्तृत्वम्' इत्यपि कर्तुर्लक्षणान्तरमायाति । तत्र हि—"कथं पुनर्ज्ञायते कर्ता प्रधानमिति ? यत्सर्वेषु साधनेषु सन्निहितेषु कर्ता प्रवर्तयिता भवती"त्युक्तम् । 'स्थाली पचती'त्यादौ तु कारकान्तरप्रवर्तकत्वस्यारोपान्निर्वाह इति तद्भाष्योद्योते स्पष्टम् ।

कर्तृत्वधारणाय धातुवाच्येति । तत्रोक्ते तु कारकमात्रे प्रथमैव तिङ्समानाधिकरणे प्रथमा अभिहिते प्रथमेति वार्तिकद्वयात् । सूत्रमते तु कर्तृकर्माद्यर्थकप्रत्ययेन कथ्रादरुक्तत्वात् प्रथमायाः प्रातिपदिकार्थ एवार्थः । तस्य चाख्यातार्थकर्त्रादिनाऽभेदान्वयेन प्रथमार्थस्य कारकत्वम् । अत एवाख्यातार्थद्वारकक्रियान्वयात् तदर्थस्य क्रिया

---

तत्र—तेषां कारकाणां मध्ये इत्यर्थः । इतिवार्तिकद्वयेति—इदं वार्तिकद्वयं प्रातिपदिकार्थसूत्रे भाष्ये व्याख्यातम् । सूत्रमत इति—"प्रातिपदिकार्थलिङ्ग" इत्यादिसूत्रे हि प्रथमाविधायके कारकवाचकपदाऽसमाभावात्प्रातिपदिकार्थ एव प्रथमार्थः, वार्तिकद्वये उक्ते तु 'तिङ्समानाधिकरणे' इति, 'अभिहिते' इति च कारकवाचकप्रथमायशेषकरणोपादानात्तु कारकमात्रे प्रथमा चे इति निश्चीयत इति भाव । ननु तर्हि सूत्रमते प्रथमान्तघटितप्रयोगे कथं कर्तृत्वादेर्मानमित्यत आह—कर्तृकर्माद्यर्थकेति—तत्तदर्थकतिङ्कृद्भ्यां कर्तृत्वादीनां भानमिति भाव । ननु तर्हि सूत्रमते प्रथमाऽर्थस्य कथं कारकत्वम् ? वार्तिकमतेऽपि तिङर्थ एव प्रथमार्थस्याऽन्यत्क्रियायामन्वयाऽभावेन क्रियाजनकत्वाऽनुपपत्त्या कथं तस्य कारकत्वम् ? इत्यत आह-तस्य चाख्यातार्थकर्त्रादीति—कारकेन सह अभेदान्वयात् तस्य कारकत्वमिति भाव । ननु एवमपि प्रथमान्तार्थस्य क्रियायामन्वयाऽभावेन क्रियाजनकत्वाऽनुपपत्त्या क्रियाजनकत्वरूपं कारकत्वं कथं तस्य स्यात्, क्रियान्वयिन एव क्रियाजनकत्वादित्यत आह—आख्यातार्थद्वारकक्रियान्वयादिति—आख्यातार्थस्य क्रियाजनकत्वात् क्रियाजनकस्य क्रियायामन्वयौचित्येन क्रियान्वयित्वाच्च कारकत्वे सति तदभेदेन प्रथमान्तार्थस्याऽपि क्रियाजनकत्वात् आख्यातार्थाऽभेदद्वारकक्रियान्वयित्वाच्च तस्याऽपि कारकत्वं निर्बाधमितिभाव । एवम्—अधिकरणकारकस्याऽपि कर्तृकर्माऽन्यतरद्वारकमेव क्रियान्वयित्वम् । ननु क्रियाजनकस्य क्रियायां साक्षादन्वय एव आवश्यकं, परम्परासम्बन्धे कथं तस्य क्रियाजनकत्वम्, 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छति' इत्यादौ ब्राह्मणस्येवाऽन्यथासिद्धिप्रसक्तत्वात्, साक्षादन्वयौचित्ये सति परम्परान्वये तस्य साधुत्वे मानाभावाच्चेतिचेत्—न, कर्मसम्बन्धिन विना पृच्छादिक्रियायां कर्ममात्रेण सम्भवेन कर्मसम्बन्धिनो ब्राह्मणादेर्यथा सिद्धत्वेऽपि 'कटे शेते' 'स्थाल्यां पचति' इत्यादौ कर्तृकर्माऽधिकरणे विना शयनपाक-

जनकत्वादस्या कारकविभक्तित्वेन भाष्ये व्यवहारः। चैत्रो भवतीत्यत्र

क्रियाधारभवनाऽधिकरणस्याऽयथासिद्धप्रसक्त्याऽभावात्, 'चैत्रः पचती'त्यादौ चैत्रादेरपि आख्यातार्थाऽभिन्नत्वेनाऽयथासिद्धयप्रसक्त्यात्, परम्पराऽन्वयेऽपि साधुत्वे 'तिङ्समानाधिकरणे' इति 'आधारोऽधिकरणम्' इति शास्त्रयोरेव मानत्वाच्च। अन्यथा क्रियायां तिङर्थस्यैव साक्षादन्वयेन प्रथमार्थस्य साक्षादनन्वयेन कारकत्वाऽभावात्तस्यै प्रथमायास्तिङ्वाच्यवाचकत्वरूपतिङ्समानाधिकरण्य दुरुपपादत्वात्, "आधारोऽधिकरणम्" इत्यत्राऽपि कारकाधिकारेण क्रियाया लाभात्क्रियाश्रयस्यैवाधिकरणसंज्ञाविधानेन साक्षात्क्रियाऽऽश्रययोः कर्तृकर्मसंज्ञायां परत्वाद्बाधेन परम्परया क्रियाधारयोरेवाऽधिकरणसंज्ञाया उपपत्तेः। क्रियाशब्देनाऽत्र फलस्याऽपि ग्रहणात् फलाऽऽश्रयकर्माश्रयस्य, व्यापाराश्रयकर्त्राश्रयस्य चाधिकरणसंज्ञाया सिद्धेः। एवञ्च—कारकाणां भावनान्वयित्वमिति साक्षात्, कारकस्य व्याप्यकर्तृत्वकर्माद्यधिकरणस्य सम्बन्धेतरस्य च वाऽऽन्वितपरम्परया वेति निष्कर्षः। 'चैत्र स्वस्थोऽन्नं भुङ्क्ते' इत्यत्र स्वस्थपदार्थस्य वस्तुतः चैत्रभ्यवधानेन भुक्तिक्रियाजनकत्वेऽपि शाब्दबोधे शाब्दान्वितक्रियायामेवाऽन्यत्वभानात् चैत्रपदार्थस्य क्रियाजनकत्वेन विवक्षितत्वेऽपि स्वस्थपदार्थस्य ओदनसम्बन्धितयैव विवक्षितत्वात् क्रियाजनकत्वेनाऽविवक्षितत्वात् क्रियायां कारकत्वव्याप्यकर्तृत्वादिघटितस्वस्वाभिमतसम्बन्धघटितपरम्परयाऽन्वयस्यैव सत्त्वाच्च न कारकत्वम्। 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छति' इत्यादौ च क्रियाजनकत्वाऽभावादेव न कारकत्वमित्युक्तम्, तादृशपरम्परयाऽनन्वयाच्च। 'चैत्र पचती'त्यादौ अभेदस्य सम्बन्धत्वाऽभावात्कर्तृत्वादिसम्बन्धेतरसम्बन्धाऽघटित-परम्परयैवान्वय इति नान्यथाऽसिद्धिः। सुन्दरश्चैत्रः पचतीत्यत्रापि तथैव। एतेन—परम्परासम्बन्धेनाऽन्वयस्वीकारे प्रथमार्थेऽव्याप्तिवारणेऽपि 'राज्ञः पुरुष' इत्यादौ 'चैत्र स्वस्थोऽन्नं भुङ्क्ते' इत्यादौ च राजपदार्थस्वस्थपदार्थयोः कारकत्वाऽतिव्याप्तिवारणाय 'सुन्दरश्चैत्र' इत्यादौ सुन्दरपदार्थेऽव्याप्तिवारणाय च—क्रियानिष्ठविशेष्यतानिरूपितकर्मत्वादिषट्कान्यतरसम्बन्धघटितसम्बन्धाऽनवच्छिन्नप्रकारताऽऽश्रयत्वं कारकत्वमिति लक्षणं परास्तम्, निष्फलत्वात्, क्रियाजनकत्वं तत्त्वमिति भाष्यलक्षणादेव सामञ्जस्यात्। किन्तु—क्रियानिष्ठविशेष्यतानिरूपितकर्मत्वादिषट्केतरसम्बन्धघटितसम्बन्धाऽनवच्छिन्नप्रकारताप्रयोजकविभक्तित्वं कारकविभक्तित्वमिति

एकत्वावच्छिन्नचैत्राभिन्नकर्तृकं भवनमिति बोधः । आख्यातकृदादिना कर्त्रादेरभिधानेऽपि प्रथमयाऽनुद्भूतकर्तृत्वादिशक्तिः प्रतिपाद्यते इति तात्पर्यम् । कर्माख्याते तु चैत्रेण ग्रामो गम्यते इत्यत्र चैत्रकर्तृकव्यापार जन्य एकत्वावच्छिन्नग्रामाभिन्नकर्मनिष्ठः संयोग इति बोधः । सम्बो धनप्रथमार्थस्यापि अनुवाद्यत्वेनोद्देश्यतया युष्मदर्थाभेदेन विधेयक्रिया

---

कारकविभक्तेर्लक्षणं भाष्यमित्यलम् । भाष्ये व्यवहार इति—"सहयुक्ते" इति सूत्रे भाष्ये—अप्रधानग्रहणाऽभावे 'पुत्रेण सहागतो देवदत्त' इत्यादौ देवदत्तादि पदादपि तृतीयापत्तिं मनस्याशङ्क्योपपदविभक्तिन्यायेन समाहितम्—"सहयुक्तेऽ प्रधानवचनमनर्थकम् । किं कारणम् ? उपपदविभक्तेः कारकविभक्तिर्बलीय स्यात् । उपपदविभक्तेः कारकविभक्तिर्बलीयसीति प्रथमा भविष्यती"ति हि तत्रोक्तम् । इति तात्पर्यमिति—"तिङ्समानाधिकरणे"ऽभिहिते इति वार्ति कयोस्तात्पर्यमित्यर्थः । कर्मनिष्ठः संयोग इति—चैत्रकर्तृकग्रामकर्मकव्यापारजन्यः संयोग इत्येव शाब्दबोधाकारः, कारकाणां भावनाऽन्वयव्युत्पत्तेः । कर्मत्वस्य ग्राम निष्ठत्वेऽवगते तत्समानाधिकरणफलस्याऽपि कर्मनिष्ठत्वप्रतीतिरार्थीति, तन्मूलकमे वोक्तं मूले 'कर्मनिष्ठः संयोग इति' । अत एव 'हरिं भजती'त्यत्र हरिकर्मकं भजन मितिबोध इत्युक्तं शेखरे इतिदिक् ।

सम्बोधनप्रथमार्थस्याप्यनुवाद्यत्वेनेति—अयमाशयः—सम्बोधनं अभि मुखीभावः—प्रयोक्तृवचनार्थग्रहणे सादरीभवनम् । तद्व्यञ्जकञ्च मुखपराङ्वृत्यादि । ततश्च सम्बोध्यस्य प्रवृत्तिर्निवृत्तिर्वा । तस्मात्सम्बोधनविभक्तिरनुवाद्यविषयैव, सम्बो ध्यताऽवच्छेदकरूपेण सम्बोध्यस्य सिद्धिं विना तस्याऽभिमुखीभावाऽसम्भवात् । अत एव 'राजन् युध्यस्वे'त्यस्य कुमाराऽवस्थायां, 'राजा भव युध्यस्वे'त्यस्य राजावस्थायाम् न प्रयोगः । एवञ्च सम्बोधनविभक्तेरनुवाद्यविषयतयाऽनुवाद्यस्य च विधेय एवा ऽन्वयेन विधेयतायाश्च क्रियानिष्ठत्वेन तस्यामेव ( विधेयभूतक्रियायामेव ) सम्बोधन विभक्त्यन्तार्थस्याऽन्वय इति युक्तम् । तदुक्तं हरिणा—

"सिद्धस्याऽभिमुखीभावमात्रं सम्बोधनं विदुः ।
प्राप्ताऽभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते ॥" इति ।
"सम्बोधनं न वाक्यार्थ इति वृद्धेभ्य आगमः" । इति च ।

यामन्वयात् क्रियाजनकत्वरूपकारकत्वम् । देवदत्त त्वं गच्छेत्यादौ अभिमुखीभवद्देवदत्ताभिन्नयुष्मदर्थोद्देश्यप्रवर्त्तनादिविषयो गमनमिति बोधः ।

---

एवञ्च क्रियासु विनियोगफलकोऽभिमुखीभावः सम्बोधनमिति फलितम् । अत्र 'सिद्धस्ये'त्यनेन तस्याऽनुवाद्यत्वं, 'विनियुज्यते' इत्यनेन प्रवर्तनाविषयक्रियायां तस्याऽन्वय इति बोधितम् । तथा च सम्बोधनस्य सङ्ख्याया इव प्रकृत्यर्थे यमादावाश्रयत्वसम्बन्धेनाऽन्वयः । प्रकृत्यर्थस्य च स्वोद्देश्यकत्वसम्बन्धेन साक्षाद्विध्यर्थप्रवर्तनायामेवाऽन्वयः तद्द्वारैव तद्विषयीभूतक्रियायामन्वयाङ्गीकारात् । परम्परयाऽन्वयस्वीकारादेव 'नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयोऽव्युत्पन्न' इति व्युत्पत्तेरपि न विरोधः । तादृशप्रवर्तनायाश्च विषयत्वसम्बन्धेन रक्षणादिक्रियायामन्वयः । एवञ्च 'राम मां पाही'त्यादौ 'अभिमुखीभवद्रामाद्युद्देश्यकप्रवर्तनाविषयो मत्कर्मकत्वत्कर्तृक रक्षणमि'ति बोधः । 'अजानि देवदत्ते'त्यादावपि 'जानीही'त्यस्याऽध्याहारो वाक्यैकदेशन्यायाद्बोध्यः । तत्र ज्ञाने अजनस्य कर्मत्वात् देवदत्तस्योद्देश्यत्वात् 'अभिमुखीभवद्देवदत्तोद्देश्यकप्रवर्तनाविषयो मत्कर्तृकप्रातःकालिकगमनकर्मकज्ञानमिति बोधे उभयोः पदयोः समानवाक्यस्थत्वान्निघातसिद्धिः । 'नद्यास्तिष्ठति कूले' इत्याद्यनुरोधेन "आख्यातं—सविशेषणं वाक्यम्" इति समर्थसूत्रस्थभाष्योक्तलक्षणस्य साक्षात्परम्परासाधारणाख्यातार्थनिष्ठविषयतानिरूपितत्ववद्विषयताप्रयोजकत्वमेकवाक्यत्वमित्यत्रैव तात्पर्यात् । अस्ति च देवदत्तपदस्य अजानीत्याख्यातार्थअजननिष्ठविषयतानिरूपितज्ञाननिष्ठविषयतानिरूपितप्रवर्तनानिष्ठविषयतानिरूपितदेवदत्तनिष्ठविषयताप्रयोजकत्वमिति निघातसिद्धिः । अजानीत्यत्र प्रातःकाले लोट् । वाक्यैकदेशन्यायेनाऽध्याहारे "एकतिङ् वाक्यम्" इति लक्षणस्याऽपि नाऽव्याप्तिः । उद्देश्यविधेयभावो वाक्यार्थः । अभिमुखीभवनानुकूलस्य संबोधनविभक्त्यन्तशब्दप्रयोगरूपव्यापारस्य—इतरनैरपेक्ष्येणैव प्रतीतेस्तस्य वाक्यार्थ इति "संबोधनं न वाक्यार्थ" इत्यस्य तात्पर्यम् । एतन्मूलक एव सम्बोधनविभक्त्यन्तार्थस्य कर्तृकारकत्वव्यवहारो वृद्धानाम्, तस्यैव युष्मच्छब्दार्थत्वेन विनियोज्यक्रियाकर्तृत्वात् । अत एव "तिङ्समानाधिकरणे" इति वार्तिकमते प्रथमासिद्धिः सम्बोधने । तद्वार्तिकन्यासे हि "प्रातिपदिकार्थे"ति सूत्रवत् "सम्बोधने"तिसूत्रस्याऽपि प्रत्याख्यानमेव । अत एव "सम्बोधने चे"तिसूत्र कर्मादिविशिष्टे प्रथमाऽभावे ज्ञापकमाश्रित्य मात्रग्रहणं प्रत्याख्यातम् । तेन हि सम्बोधनविषयेऽपि "प्रातिपदिकार्थ" इत्यनेन सिद्धि

इति भाष्यं च सङ्गच्छते । अनुक्तकर्त्रादिषु तृतीयादयो विभक्तयः अनभिहिताधिकारे तासां विधानात् इत्यन्यत्र विस्तरः ॥

ननु क्रियानिमित्तत्वं कारकत्वमिति स्वीकार्यमिति चेन्न । चैत्रस्य तण्डुलं पचतीत्यत्र सम्बन्धिनि चैत्रादावतिव्याप्तेः । अनुमत्यादिप्रकाशनद्वारा सम्प्रदानादेरिव तण्डुलादिद्वारा सम्बन्धिनोऽपि क्रियानिमित्तत्वात् । किन्तु क्रियान्वितविभक्त्यर्थान्वितत्वं क्रियानिर्वर्तकत्वं वा कारकत्वम् । विशेष्यतया क्रिया सुप्तिङन्यतरविभक्त्यर्थेऽन्वेति । स च विशेष्यतयैव चैत्रघटादौ । षष्ठ्यर्थस्य तण्डुलादिनामार्थान्विततया क्रियानन्वितत्वात् । अत एव षष्ठ्यर्थस्योपपदविभक्त्यर्थस्य च न कारकत्वं क्रियान्वयाभावादिति शाब्दिकाः । उपपदविभक्तीनामपि सम्बन्ध एवार्थः । चैत्रस्य पचतीत्यादावपि तण्डुलादिपदाध्याहारेणैव बोधः । षष्ठ्यर्थसम्बन्धस्य नामार्थेनैव क्रियायाः कर्मत्वादिनैव साकाङ्क्षत्वेन सम्बन्धक्रियया निराकाङ्क्षत्वात् । यत्तु कारकान्तराप्रयोज्यत्वे सति

---

काचिच्चेदेकवचनं तदा एकत्र एवे'त्यादिरूपः प्रकृतार्थापेक्षप्रत्ययनियम इत्यर्थ इति बहुवचनसंज्ञासूत्रे भाष्ये "तद्धितश्चासर्वेति"सूत्रे शेखरे च स्पष्टम् ।

सङ्गच्छत इति—सम्बोधनप्रथमार्थस्य कारकत्वाऽभावे "सुपां कर्मादयोऽप्यर्थाः" इति भाष्यस्य आश्रयार्थप्रतिपादकोक्तकारिकायाश्च असङ्गतिः स्पष्टैव । यत्तु सारे द्वितीयातृतीयासप्तमीनामाश्रयोऽर्थ इति उक्तकारिकाया विवरणम्, तन्न्यूनम्, प्रथमायाः परित्यागात्, "तिङ्समानाधिकरणे प्रथमे"ति वार्त्तिकरीत्या प्रथमाया अपि उक्तकर्तृकर्मार्थकत्वेन द्वितीयाद्युक्तरीत्या आश्रयार्थकत्वलाभात्, कारिकायां प्रथमार्थाऽविवरणे न्यूनत्वापत्तेश्च । क्रियानिमित्तत्वमिति—निमित्तत्वं जन्यजनकताऽवच्छेदकसाधारणं प्रयोजकत्वरूपमित्याशयेनाऽयं पूर्वपक्षः । 'निमित्तत्वं जनकत्वरूपम्' इति स्वीकारे तु नाऽयं स्यात् । अतिव्याप्तेरिति—तथा च चैत्रस्य तण्डुलं पचतीत्यत्र चैत्रस्य कारकत्वातिप्रसङ्गे "अकथितञ्चे"ति कर्मत्वापत्तौ पर्यायेण द्वितीयाया आपत्तिः । किन्तु क्रियान्वितेति—अस्य तत्त्वमनुपदमेव निरूपितम् । विशेष्यतया क्रियेति—क्रियानिष्ठविशेष्यतासम्बन्धेन शाब्दबुद्धित्वाऽवच्छिन्नं प्रति विशेष्यतासम्बन्धेन सुप्तिङन्यतरविभक्तिजन्योपस्थितेः कारणत्वस्याङ्गीकारादिति भावः । उपपदविभक्तीनामिति—शेषार्थकषष्ठ्यपवादत्वादिति भावः । तच्च न

कारकचक्रप्रयोजकत्वं कर्तृत्वमिति । तन्न । स्थाली पचति असिश्छिनत्ती त्यादौ स्थाल्यादेः कारकचक्राप्रयोजकत्वात् कारकान्तरप्रयोज्यत्वाच्च तत्त्वं न स्यादित्यलम् । कर्मत्वं च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यफल

---

स्यादिति—वस्तुतस्तु "कारके" इति सूत्रस्थभाष्यात् "कारकचक्रप्रयोजकत्वं कर्तृत्वम्" इत्यपि लक्षणान्तरमायाति । तत्र हि—"कथं पुनर्ज्ञायते कर्ता प्रधान मिति ? यत्सर्वेषु साधनेषु सन्निहितेषु कर्ता प्रवर्तयिता भवती"त्युक्तम् । तस्मात्— स्थाली पचतीत्यादौ प्रयोजकत्वस्याऽऽरोपान्निर्वाहः उद्देश्यत्वघटितकर्मत्वलक्षणे 'ग्रामं गच्छती'त्यादावुद्देश्यत्वस्येवेति दिक् ।

अवसरसङ्गत्या कर्मलक्षणमाह—कर्मत्वञ्चेति—अत्र कर्मत्वं व्याकरणशास्त्रबोधितकर्मसंज्ञकत्वम् । तच्चाऽनेकसूत्रबोधितत्वादनेकम् । तत्र "कर्तुरीप्सित"—सूत्रबोधितं कर्मत्वमत्र परिष्करोति—कर्मत्वञ्चेति ।

अत्रायं सारः—आप्नोतेः सन्नन्तात् "मतिबुद्धि" रिति वर्तमाने कर्मणि क्तः, तदन्तात्तमप् । कर्तुरिति "क्तस्य च वर्तमाने" इति कर्तरि षष्ठी । आप्धातोः सम्बन्धोऽर्थः, सन्नोपस्थितत्वात् कर्तृपदार्थविशेषणीभूतव्यापारद्वारकः—स्ववृत्ति प्रधानव्यापारविशिष्टफलाश्रयत्वरूपः । वै०—स्वप्रयोज्यत्व, स्ववाचकधातुवाच्यत्वोभयसम्बन्धेन । कर्तृपदञ्च प्रकृतधात्वर्थप्रधानीभूतव्यापाराऽऽश्रयरूपस्वतन्त्रपरम्, न तु कर्तृसंज्ञकपरम् । अत एव 'चैत्रः सार्थाद्धीयते' इत्यत्र "अपादाने चाहीयरुहोः" इति ज्ञापकेन कर्तृसंज्ञां बाधित्वाऽपादानसंज्ञायां सत्यामपि स्वातन्त्र्यस्याऽक्षतत्वेन "कर्तुरि"त्यनेन चैत्रादेः कर्मसंज्ञायां कर्मणि लकारसिद्धिः । अत एव च 'शत्रूनगमयत्स्वर्गम्' इत्यादौ प्रयोज्यस्य कर्मत्वेऽपि तदीप्सिततमस्य स्वर्गादेः कर्मत्वसिद्धिः, गम्धात्वर्थप्रयुक्तस्वातन्त्र्यस्य सत्त्वात् । कर्तुरिति कर्तृपदघटकषष्ठ्या आश्रय मात्रमर्थः, व्यापारस्य प्रकृतिलभ्यत्वात् । प्रत्ययार्थे प्रकृत्यर्थस्याऽभेदेनाऽन्वयो 'नीलघटो घट' इतिवत्, विधेयांशेऽधिकाऽनवगाहिज्ञानस्य सत्त्वेन 'घटो घट' इति वत् अभेदान्वयबाधस्याऽप्रसक्तेः । विशिष्टाऽऽश्रयस्य वृत्तित्वसम्बन्धेन सनर्थेच्छाया मन्वयः । क्तप्रत्ययार्थ उद्देश्यताख्यविषयताश्रयः । तदेकदेशविषयतायां निरूपितत्वसम्बन्धेनेच्छाया अन्वयः । आप्धात्वर्थसम्बन्धस्य च स्वप्रकारकत्वेनेच्छाया मन्वयः तथा च—प्रकृतधात्वर्थप्रधानीभूतव्यापाराश्रयाऽभिन्नाश्रयनिष्ठा स्ववृत्ति

( प्रधान ) व्यापारविशिष्टफलाश्रयत्वप्रकारिका येच्छा तन्निरूपितोद्देश्यताख्य विषयताश्रय कर्मसंज्ञक इत्यर्थ सम्पन्न वैशिष्ट्यञ्चोक्तमेव । अत्र प्रकृतत्व वाचक धात्वर्थत्वञ्चेति द्वयमपि कर्तृग्रहणसामर्थ्यलभ्यम् कारकाधिकारेणैव तल्लाभसम्भवात् । तत्फलन्तु क्रमेण 'माषेषु प्रसक्तमश्वं माषनाशोमाऽभूदित्यन्यत्र बध्नाती'-त्यर्थस्थले, पुष्प्यर्थं माषक्षेत्रे पलाश्वत्थ वनस्थले च । माषेष्वश्वं बध्नाती'त्यत्र माषाणां कर्मत्वाऽभाव । 'प्रयागात्काशीं गच्छती'त्यत्र प्रयागस्य कर्मत्वाऽभावो पि वाचकधात्वर्थत्वस्य फलम् । प्रयोज्यत्वञ्च तम ग्रहणलभ्यम् । प्राधान्यांशोऽपि व्यापारे कर्तृग्रहणादेव लभ्य । एतद्द्वयोरपि फलन्तु—'अग्नेर्माणवकं वारयती'त्यत्र माणवकेऽव्याप्तिपरिहार, अग्न्यभाववारणात्पस्याप्यसंयोगरूपफलाऽऽश्रयत्वात् अग्नावपि कर्मसंज्ञाप्राप्तौ "वारणार्थानामि"त्यस्य निरवकाशतयाऽपवादत्वलाभेन स्वीयोद्देश्यताऽवच्छेदकाऽवच्छिन्नाऽतिरिक्तत्वेन कर्मसंज्ञाशास्त्रीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचात् माणवकेऽपि पञ्चम्यापत्ते । 'काशीं गच्छति न प्रयागम्' इत्यादौ तादृगिच्छाविषयत्व प्रयागादावारोप्यैव कर्मत्वम् । अत एव 'रथो ग्राम गच्छती'त्यादौ ग्रामस्य कर्मत्व रथनिरूपितोद्देश्यतामारोप्यैव मञ्जूषायामुक्तम् । परमलघुमञ्जूषायामत्र योग्यताविशेषे लक्षणया समाधानन्तु प्राचामनुरोधेनैव, न तु स्वमतेन गौरवात् योग्यताया अननुगमाच्चेति सर्वमवदातम् ।

अत्र फलाऽऽश्रयता न येन केनाऽपि सम्बन्धेन ग्रहीतव्या 'कालिकसम्बन्धेन फलाऽऽश्रय पाषाण भवतु' इतीच्छोद्देश्यत्वे 'पाषाण पचती'त्यापत्ते । नाऽपि समवायेनैव, 'घटं नाशयति' 'घटमिच्छति' 'घट जानाति' इत्यादावव्याप्ते । नाऽपि कालिकातिरिक्तेनैव, 'जनकत्वसम्बन्धेन फलाऽऽश्रयो व्यापारोऽस्तु' इतीच्छायां 'व्यापारं पचती'त्यापत्ते । नाऽपि कालिकाऽतिरिक्तवृत्तिनियामकसम्बन्धेनैव, विषयितासम्बन्धेन फलाऽऽश्रयो ज्ञानं जायताम्' इतीच्छामादाय 'ज्ञान पचती'त्यापत्तेः 'ज्ञाने घट' इति प्रतीत्या विषयिताया वृत्तिनियामकत्वात् इतिचेत्—फलताऽवच्छेदकसम्बन्धेन सेति गृह्यताम् । फलताऽवच्छेदकसम्बन्धस्य फलनिष्ठाऽऽधेयताऽवच्छेदकतया धात्वर्थताऽवच्छेदको य स एव । एवं हि सर्वेषामेव धातूना फलविशिष्ट व्यापारे शक्तिः । वै०—स्वाऽनुकूलत्व, स्वनिष्ठयत्किञ्चित्सम्बन्धाऽवच्छिन्नाऽऽधेयतानिरूपिताऽधिकरणतावत्त्वप्रकारकेच्छासामानाधिकरण्योभयसम्बन्धेनेति ।

तथा च धात्वर्थफलाश्रयत्वेनोद्देश्यत्वम् । इदमेव कर्मलक्षणे ईप्सिततमत्वम्

---

एवञ्च तत्तद्धातुस्थले फलनिष्ठाऽऽधेयताऽवच्छेदकतया तत्तत्सम्बन्धो निवेश्यः यथा—पच्धातौ विक्लित्तिविशिष्टो व्यापारोऽर्थः । चै०—स्वानुकूलत्व-स्वनिष्ठसमवायसम्बन्धावच्छिन्नाधेयतानिरूपिताऽधिकरणतावत्त्वप्रकारकेच्छासामानाधिकरण्योभयसम्बन्धेनेति । एवं 'नाशयती'त्यादौ नाशविशिष्टो व्यापारो धात्वर्थः चै०—स्वाऽनुकूलत्व स्वनिष्ठप्रतियोगितासम्बन्धाऽवच्छिन्नाधेयतानिरूपिताऽधिकरणतावत्त्वप्रकारकेच्छासामानाधिकरण्योभयसम्बन्धेनेति । एवं जानातीत्या विषयतासम्बन्धस्य तत्त्वम् । एवमेवाऽन्यत्राऽपि तत्त्वम् । 'स्तोकं पचती'त्यादौ फलताऽवच्छेदकतादात्म्याऽन्यतरसम्बन्धेन फलसम्बन्धिता निवेश्या । तथा च—स्वघटकधात्वर्थत्व—स्वप्रयोज्यत्वञ्चेति सम्बन्धाभ्यां स्ववृत्ति ( प्रधान ) व्यापार विशिष्टफलनिष्ठफलताऽवच्छेदकतादात्म्याऽन्यतरसम्बन्धाऽवच्छिन्नप्रकारतानिरूपि विशेष्यताश्रयत्वप्रकारकत्वम्, अथवा तादृशफलनिष्ठप्रतियोगितानिरूपकफलताऽवच्छेदकतादात्म्याऽन्यतरसम्बन्धनिरूपिताऽनुयोगितावत्त्वप्रकारकत्वम् स्वसमवेतत्व स्वोभयसम्बन्धेन स्वत अविशिष्टेच्छानिरूपितोद्देश्यताख्यविषयताश्रय सङ्केतसम्बन्धेन कर्मत्वमिति सूत्रार्थः सम्पन्नः । इच्छायां कर्तृसमवेतत्वविशेषणात् चैत्रस्य तथेच्छायां 'मैत्रः पचती'ति नापत्तिः । तादात्म्यस्य वृत्तिनियामकत्वाभावं समीक्ष्य फलाऽऽश्रयतायाः स्थाने फलसम्बन्धिता निवेशितत्वम् । एवमेव सर्वं फलितार्थकथनं मूलकृताऽत्र परिष्कृतमिति द्रष्टव्यम् ।

प्रकृतधात्वर्थप्रधानीभूतव्यापारेति—अत्र प्रकृतत्वविशेषणात् माषपु प्रसक्तमश्वं माषनाश्यो माऽभूदित्यत्र बध्नाति' इत्यत्र 'माषेष्वश्वं बध्नाती'ति वाक्ये माषाणां कर्मत्वं न । व्यापारे प्राधान्यग्रहणाच्च अन्तर्भावितण्यर्थेन अग्नेर्माणवकं वारयतीत्यादौ माणवकेऽव्याप्तिर्न । प्रकृतधात्वर्थफलेति—अत्र प्रकृतत्वविशेषणात् पुण्याय माषमश्वाय माषदात्र एव यदाऽश्वबन्धनं तदा 'माषेष्वश्वं बध्नाती'त्यत्र माषाणां नाऽतिव्याप्तिः, न च गमनप्रयोज्यगजविभाग संयोगरूप फलाऽऽश्रयत्वेऽपि गजविभागसंयोगस्य बध्नात्यर्थत्वाऽभावात् । अनेकस्य कर्मत्वानां मध्ये इदमेकमेव कर्मत्वं न तु सर्वम्, 'वैकुण्ठमधिशेते' इत्यादावव्याप्तत्वात् । तद सद्ध्वनयन्नाह—इदमेव कर्मलक्षण इति । ईप्सिततमत्वमिति—अनुपदमेव

गां पयो दोग्धीत्यादौ पयोवृत्तिर्यो विभागस्तदनुकूलो व्यापारो गोवृत्ति तदनुकूलश्च गोपवृत्ति । अत्र पयस कर्मत्वसिद्धये प्रयोज्यत्वनिवेशः जन्यत्वनिवेशे तन्न स्यात् । प्रयागात्काशीं गच्छतीत्यत्र प्रयागस्य कर्मत्ववारणाय प्रकृतधात्वर्थफलेति । न हि विभागः प्रकृतधात्वर्थः किन्तु नान्तरीयकतया गमने उत्पद्यते प्रयागस्य फलाश्रयत्वेनानुद्देश्यत्वाच्च ॥

ननु प्रकृतधात्वर्थस्य ग्रहणेनैवात्र वारणादुद्देश्यत्वनिवेश किमर्थं इति चेन्न । तस्यासाधारण प्रयोजन काशीं गच्छन्पथि मृत इति काश्या फलाश्रयत्वाभावेऽपि फलाश्रयत्वेनोद्देश्यत्वात्कर्मत्वम् । ननु काशीं गच्छति चैत्रे चैत्र काशीं गच्छति न प्रयागमिति प्रयोगानुपपत्ति, प्रयागस्य फलाश्रयत्वेनोद्देश्यत्वाभावादितिचेदुच्यते । कर्मलक्षणे ईप्सिततमपदस्य स्वार्थविशिष्टयोग्यताविशेषे लक्षणा । तथा च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वयोग्यताविशेषशालित्वं कर्मत्वम् ।

---

स्पष्टीकृतार्थम् । प्रयोज्यत्वनिवेश इति—जन्यत्वनिवेशाऽपेक्षया जन्यजनकताऽवच्छेदकसाधारणरूपस्य प्रयोज्यत्वस्य निवेशे गौरवमङ्गीकृत्याऽपीत्यादि— 'फलमुखं गौरवं न दोषाये'ति न्यायादितिभाव । तन्न स्यात्—पयोनिष्ठविभागस्य गोपवृत्तिव्यापारप्रयोज्यत्वेऽपि गोपवृत्तिव्यापारजन्यत्वाऽभावादिति शेष । फलताऽवच्छेदकेति—व्याख्यातम् । अनुद्देश्यत्वाच्चेति—प्रयागात्काशीं गच्छतो जनस्य काश्येव फलाश्रयत्वेनेच्छाविषयीभूता न तु प्रयाग, यद्यपि नान्तरीयकतया सोऽपि विभागरूपफलाश्रय सम्पद्यते । परे तु या जनस्य पूर्वदेशत्याग एवोद्देश्य, उत्तरदेशसंयोग एवाऽनुषङ्गिकस्तत्रापि 'विरक्तो गृहाद्वनं गच्छती'त्यादौ विभागाश्रयस्य गृहस्य फले प्रकृतधात्वर्थ विशेषणमन्तरेणाऽपि न कर्मत्वाऽऽपत्तिः, अनुयोगित्वविशिष्टसमवायस्यैव तत्र फलताऽवच्छेदकत्वेन गृहस्याऽनुयोगित्वविशिष्टसमवायेन विभागाश्रयत्वाऽभावात् । अत एव "अपादान-समभिव्याहारे विभागोऽपि धात्वर्थ" इति शेखरमते विभागस्य प्रकृतधात्वर्थफलत्वेऽपि दोषो नेत्याहु । योग्यताविशेषे लक्षणेति—परे तु नाऽस्योपयोग, काशीं गच्छति चैत्रे 'चैत्र काशीं गच्छति न प्रयागम्' इत्यत्र प्रयोगे उद्देश्यत्वस्याऽऽरोपादेव निर्वाहादिति निरूपित

तत्र प्रयागस्याप्यस्तीति कर्मत्वं तस्य सुलभम्। एतेन कार्यान्तरं कुर्वति चैत्रे किं ग्रामं गच्छति अथ वा ओदनं पचतीति प्रश्ने न ग्रामं गच्छति नौदनं पचतीत्यादिप्रयोगा व्याख्याता। यत्र तु ताडनादिना पराधीनतया विषभोजनादिकं तत्र विषादि तादृशफलाश्रयत्वेनोद्देश्यमेव। अत एव "आतश्च विषमीप्सितं यद्भक्षयति ताडनाद्" इति भाष्यं सङ्गच्छते। एतेन काशीं भिद्य कारागारं गच्छतीति व्याख्यातम्। कालत्रये काशीगमनशून्ये चैत्र इति वारणाय विशेष इति। काश्या फलाश्रयत्वेनोद्देश्यत्वयोग्यतासत्त्वेऽपि तद्विशेषाभावान्नकर्मत्वम्। तद्विशेषश्च व्यापारसमकालिकस्तदस्य जनगम्यः। किञ्च ईदृशस्थले तद्विशेषवत्त्वेऽपि निषेध एवानुभवसिद्ध इति काशीं न गच्छतीति किमनुपपन्नम्। नन्वन्नं भक्षयन्विषं भुङ्क्ते ग्रामं गच्छंस्तृणं स्पृशतीत्यादौ विषतृणयोरुद्देश्यत्वाभावात् कथं कर्मत्वमिति चेत् शृणु, तथायुक्तमिति लक्षणान्तरात्। प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वमनीप्सितकर्मत्वमिति तदर्थात्। प्रयागा

---

मित्याहु। अन्नं भक्षयन्निति—परे तु अत्राऽपि अन्नरेणैव विषेऽपीच्छोद्देश्यत्वमस्त्येवेति पूर्वेणैव सिद्धम्, यत्राऽपि च भयादिना विषं भुङ्क्ते तत्राऽपि विषभोजनाऽभाव ताडनादिप्रयोजकमपेक्ष्य विषभोजनस्यैवोद्देश्यत्वमिति पूर्वेणैव सिद्धम्, "आतश्च विषमीप्सितं यद्भक्षयति ताडनात्" इति भाष्यात्। तस्मात् इदं 'चौरान् पश्यति' इत्यस्य शेखरोक्तोदाहरणस्योपलक्षणम्। अत्र विषयेन्द्रियसम्बन्धाद् दृश्यमाना अपि चौरा न दर्शनोद्देश्या, अपि तु अनिष्टदर्शना एवेत्याहुः।

तथायुक्तमिति—तथायुक्तत्वञ्च प्रकृतधात्वर्थप्रधानव्यापारप्रयोज्यप्रकृतधात्वर्थफलाऽऽश्रयत्वम्। अनीप्सितत्वञ्च द्वेष्योदासीनाऽन्यतरत्वम्। द्वेष्यत्वञ्च इच्छाविषयीभूताऽभावप्रतियोगित्वम्। उदासीनत्वञ्च—अद्विष्टत्वे सति इच्छाविषयत्वाऽभाववत्त्वम्। 'चोरान् पश्यती'ति द्वेष्योदाहरणम्। ग्रामं गच्छन् तृणं स्पृशतीति उदासीनोदाहरणम्। अनीप्सितपदाऽभावे कर्तृवृत्तिव्यापारवाचकधातुवाच्यफलाश्रय इत्यर्थस्तथायुक्तपदेन बोधितः स्यादिति अग्नेर्माणवकं वारयतीत्यादौ वारणार्थानामित्यस्याप्रवादत्वप्रसङ्गाभावयन्नेऽव्याप्ति। एवञ्च अनीप्सितपदं तथायुक्तपदस्योक्तार्थकत्वे तात्पर्यग्राहकमित्याभाति। तदाह—प्रकृतधात्वर्थेत्यादि।

त्काशीं गच्छतीत्यत्र प्रयागस्य कर्मत्ववारणाय प्रकृतधात्वर्थफलेऽपि द्वेष्यो दासीनकर्मसंग्रहार्थमिदं लक्षणम्। दुहादीनां व्यापारद्वयार्थकत्वपक्षे अकथितञ्चेति व्यर्थम्, पूर्वेणैवेष्टसिद्धेः। एकव्यापारबोधकत्वपक्षे तु सम्बन्धषष्ठीबाधनार्थं तत्पक्षे कर्मसम्बन्धित्वे सति अपादानादिविशेषा विवक्षितत्वमकथितकर्मत्वमिति तृतीयलक्षणेन गां पयो दोग्धीत्यादौ गामित्यस्य कर्मत्वसिद्धिरित्यन्यत्र विस्तरः।

यत्तु तार्किकाः—कर्मत्वं तु न करणव्यापारवत्त्वं तद्धि करणजन्यव्यापारवत्त्वम्। दात्रेण धान्यं लुनातीत्यादौ हस्तादिकरणजन्यव्यापारवति दात्रादावतिव्याप्तेः। नापि क्रियाजन्यफलशालित्वं तत्

---

प्रयागस्य कर्मत्ववारणायेति—'अपादानसमभिव्याहारे विभागोऽपि धात्वर्थः' इति शेखररीत्या तु विभागस्य फलत्वेऽपि फलताऽवच्छेदकसम्बन्धेन तदाश्रयत्वाऽभावान्न प्रयागस्य कर्मत्वमिति द्रष्टव्यम्।

प्रसङ्गादाह—दुहादीनां व्यापारद्वयार्थकत्वपक्ष इत्यादि—अयं भावः—'गां दोग्धि पयः' इत्यादौ 'गौः पयस्त्यजति, देवदत्तो गवा पयस्त्याजयती'त्याद्यर्थस्याऽपि प्रतीत्या पयोनिष्ठविभागानुकूलगोनिष्ठव्यापारानुकूलव्यापारादिर्दुहाद्यर्थ इति पक्षः सम्पद्यते। अत्र फलद्वयस्योपादानात् "कर्तुरीप्सिततमम्" इत्येव गोः पयसश्चाऽपि कर्मत्वं सिद्धम्। किन्तु 'गां दोग्धि पयः' इत्यादाववस्थाविशेषे निष्क्रियायाश्रपि गवादेर्दोहनादिषु विनियोगात् गोनिष्ठव्यापाराऽप्रतीतावपि दोहनादिविषये दुहादेः प्रयोगदर्शनात् पयोनिष्ठविभागाऽनुकूलव्यापारादिरेव धात्वर्थ इत्यपि पक्षान्तरं निश्चीयते। तदा च अपादानत्वाद्यविवक्षायामन्यसूत्रेणाऽसिद्धकर्मत्वार्थम् "अकथितञ्चे"तिसूत्रमावश्यकमिति।

सम्बन्धषष्ठीबाधनार्थमिति—अपादानत्वाद्यविवक्षायां प्रकृतसूत्राऽभावे सम्बन्धषष्ठी प्राप्नोति, तद्बाधनार्थमिदमावश्यकम्। गवादेः पय आदिना अन्वयविवक्षायां तु कारकत्वाऽभावात् "अकथित"सूत्रस्याऽप्राप्त्या षष्ठीष्टैवेति शेखरे स्पष्टम्। कर्मत्वेन रूपेण विवक्षायामेवेदम्, अत एव बोधोऽपि कर्मत्वेनैवेत्याद्यपि शेखरे विस्तरस्तदाह—अन्यत्र विस्तर इति।

खण्डनाय तार्किकमतमनुवदति—यत्तु इत्यादि। करणजन्येति—

चैत्रश्चैत्रं गच्छतीत्यापत्तेः । संयोगरूपफलस्योभयकर्मकर्तृनिष्ठत्वात् । नापि परसमवेतक्रियाजन्यफलशालित्वं तत्, गमित्यजोः पूर्वस्मिन्देशे त्यजेश्चोत्तरस्मिन्देशे कर्मत्वप्रसङ्गात्, नदी वर्धते इत्यादौ अवयवोपचयरूपवृद्धिक्रियाया तीरप्राप्तिरूपफलाश्रये तीरे कर्मत्वापत्तेश्चेति ।

अत्र ब्रूमः । धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वम् ।

---

करणव्यापारजन्येत्यर्थः, एवमन्यत्र । चैत्रश्चैत्रमिति—क्रियाजन्यफलस्य संयोगात्मकस्य द्विष्ठत्वादिति भावः । वस्तुतस्तु नेयमापत्तिः, ग्रामस्येव चैत्रस्याऽपि फलाऽऽश्रयत्वेऽपि परत्वात्तदीयकर्तृसंज्ञया कर्मसंज्ञाया बाधात्, द्वितीयोत्पत्तौ संज्ञाया एव नियामकत्वात् । परसमवेतेति—परत्वञ्च तृतीयया स्वसमवेतक्रियाऽपेक्षया बोध्यते इति शेषः । अत्र परत्वस्य परसमवेतत्वस्य च द्वितीयावाच्यस्येष्टान्वयलाभायानेकविधकार्यकारणभावाभ्युपगमे गौरवान्तरापत्तिरपि द्रष्टव्या । तथाहि द्वितीयाप्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वाऽवच्छिन्नं प्रति द्वितीयार्थपरत्वोपस्थितिः कारणम् इति, द्वितीयार्थपरसमवेतत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वाऽवच्छिन्नं प्रति क्रियात्वाऽवच्छिन्नविशेष्यतासम्बन्धेन धातुजन्योपस्थितिः कारणमिति च कार्यकारणभावान्तरं कल्पनीयं स्यात् । गमित्यजोः पूर्वस्मिन्निति—गमिधात्वर्थव्यापारेणोत्तरदेशसंयोगस्येव पूर्वदेशविभागस्याऽपि जन्यत्वात् विभागाश्रये पूर्वदेशे लक्षणसमन्वयात्कर्मत्वाऽऽपत्तिरिति भावः । त्यजेश्चोत्तरस्मिन्निति—त्यजधात्वर्थव्यापारेण विभागाऽनुकूलेन पूर्वदेशीयविभागस्येवोत्तरदेशीयसंयोगस्याऽपि जन्यत्वादिति भावः । नदी वर्धते इति—अत्र तीरप्राप्त्यनुकूलोऽवयवोपचयरूपो व्यापारो वृधधात्वर्थ इति भावः ।

स्वसिद्धान्तमाहुः—अत्र ब्रूम इत्यादिना । धात्वर्थताऽवच्छेदकेति—धातुनिष्ठशक्तिरूपकार्यतानिष्ठविशेष्यतावच्छेदकेत्यर्थः । तथा च गमित्वसंयोगानुकूलव्यापारे शक्तिसत्त्वेन तादृशशक्तिनिरूपकार्थीभूतव्यापारनिष्ठविशेष्यतानिरूपिताऽवच्छेदकतायाः संयोग एव सत्त्वेन संयोगाश्रयस्योत्तरदेशस्यैव कर्मत्वम्, विभागस्य नान्तरीयकत्वेन संयोगानुकूलव्यापारजन्यत्वेऽपि तन्निष्ठशक्त्यभावात् प्रकृतधात्वर्थताऽवच्छेदकत्वाऽभावेन न तदाश्रयस्य पूर्वदेशस्य कर्मत्वाऽऽपत्तिः । एवं त्यज्धातोरपि विभागानुकूलव्यापार एव शक्तिसत्त्वेन संयोगस्य नान्तरीयकत्वेऽपि

तादृशफलं च गमेस्संयोगः त्यजेर्विभागः पतेरधोदेशसंयोगः। अधोदेशरूपकर्मणो धात्वर्थनिविष्टत्वादकर्मकत्वे तु पर्णं वृक्षाद्भूमौ पततीति। संयोगमात्रफलपक्षे वृक्षाद्भूमिं पततीति। ननु चतुर्थलक्षणेऽपि चैत्रश्चैत्रं गच्छतीत्यापत्तिः, तत्र हि धात्वर्थतावच्छेदकफलं संयोग इति चेन्न। लक्षणे व्यापारानधिकरणत्वे सतीति विशेषणदानादित्याहुः तन्न। काशीं गच्छन् पथि मृत इत्यादौ काशीं गच्छति न प्रयागमित्यादौ प्रयागस्य, ग्रामं न गच्छतीत्यादौ ग्रामस्य तादृशफलशालित्वाभावात् एतस्य लक्षणस्यात्र सर्वत्राव्याप्तेः। ननु वृक्षं त्यजति खग इत्यत्र वृक्षस्य विभागरूपफलाश्रयत्वेनापादानत्वमस्त्विति चेन्न। अत्र हि विभागः प्रकृतधात्वर्थः। यत्र च विभागो न प्रकृतधात्वर्थस्तद्विभागाश्रयस्यैवापादानत्वम्, यथा वृक्षात्पततीत्यादौ। यत्र च प्रकृतधात्वर्थो विभागस्तत्रोभयप्राप्तौ अपादान-

---

नान्तरीयकत्वेऽपि तदंशे शक्त्यभावेन संयोगस्य प्रकृतधात्वर्थताऽवच्छेदकत्वाऽभावेन न तदाश्रयस्योत्तरदेशस्य कर्मत्वापत्तिरिति तात्पर्यम्। अत्राऽपि इष्टान्वयलाभाय—'द्वितीयार्थधात्वर्थताऽवच्छेदकत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वाऽवच्छिन्नंप्रति धातुजन्यफलोपस्थितिः कारणम्' इति कार्यकारणभावः कल्पनीयः स्यादितिद्रष्टव्यम्। धात्वर्थनिविष्टत्वादकर्मकत्वेति—तदुक्तम्—"धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्। प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया" इति। भाष्येऽपि "सुप आत्मनः" इति सूत्रे—"अभिहितं तत्कर्मान्तर्भूतं धात्वर्थः सम्पन्नः, न चेदानीमन्यत्कर्माऽस्ति येन सकर्मकः स्यादि"त्युक्तम्। एवञ्च अकर्मकत्वम्—'पृथगुपस्थितैतच्छास्त्रविहितकर्मसंज्ञकाऽनन्वय्यर्थकत्वम्' इति भावः। भूमिं पततीति—अत एव पतितशब्दयोगे "द्वितीयाश्रिताऽतीतपतिते"त्यादिना समासविधानं सङ्गच्छते। पत्धातोरकर्मकत्वे तु मूलं मृग्यमेव। चतुर्थलक्षणेति—करणजन्यव्यापारवत्त्वं कर्मत्वमिति प्रथमलक्षणम्। क्रियाजन्यफलशालित्वं तत्त्वमिति द्वितीयलक्षणम्। परसमवेतक्रियाजन्यफलशालित्वं तदिति तृतीयलक्षणम्। धात्वर्थताऽवच्छेदकफलशालित्वं तदिति चतुर्थलक्षणम्।

विभागरूपफलाश्रयत्वेनेति—विभागाश्रयत्वमपादानत्वमिति लक्षणाऽभिप्रायेणेदम्, प्रकृतधात्ववाच्यविभागाश्रयत्वमिति लक्षणाऽभिप्रायेण तु समाधानम्।

मुखराणि बाधन्ते, इति भाष्ययुक्ते कर्मत्वम्। अनुक्ते कर्मणि षष्ठीद्वितीये भारतस्य श्रवणं भारतं शृणोतीति यथा। सकर्मकत्वं च फलव्यधिकरण व्यापारवाचकत्वम्। फलसमानाधिकरणव्यापारवाचकत्वमकर्मकत्वम्। अथ देवदत्तो भवति, उत्पद्यत इत्यर्थः। अत्रोत्पत्तिरूपं फलं बहिर्निस्सरणं च व्यापारः देवदत्तनिष्ठ एव। व्यापारमात्रवाचकत्वं वाऽकर्मकत्वम् अस्ति भवति विद्यते वर्तते इत्यादिधातुषु फलस्य सर्वेऽपिविज्ञेयत्वात्। सत्ता हि स्थितिरूपो व्यापारविशेषः। देवदत्तोऽस्तीत्यादौ देवदत्तकर्तृका सत्तेत्येव बोधाच्च। फलव्यापारयोर्धातुवाच्यत्वं इति तु बाहुल्याभिप्रायेणेति दिक्। स्वनिष्ठव्यापाराव्यवधानेनफलनिष्पादकत्वं करणत्वम्। इदमेव साधकतमत्वम्।

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्॥

इति हर्युक्तेः। क्रियाया इत्यस्य फलात्मिकाया इत्यर्थः। रामेण बाणेन हतो वालीत्यादौ धनुराकर्षणादेर्व्यापारस्य बाणव्यापारात्पूर्वमपि कर्तरि सत्त्वाद्रामाभिन्नकर्तृनिष्ठव्यापारप्रयोज्यो बाणनिष्ठो व्यापारस्तज्जन्य यत्प्राणवियोगरूपं फलं तदाश्रयो वालीतिबोधाच्च। रामो बाणेन हन्तीत्यादौ कर्तृप्रत्यये बाणव्यापारजन्यो यो वालिनिष्ठः प्राणवियोगस्तदनुकूलो राम

---

अनुक्ते कर्मणीति—अनभिहिताधिकारादितिभावः। प्रसङ्गादाह—सकर्मकत्वं चेति। वस्तुतस्तु शब्दशास्त्रीयकर्मसञ्ज्ञकाऽर्थान्वय्यर्थकत्वं सकर्मकत्वम्, तदनन्वय्यर्थकत्वमकर्मकत्वमिति निरूपितम्—तदाह दिगिति।

अवसर आह—स्वनिष्ठेति—यस्य करणत्वं चिकीर्षितं तत् स्वम्। यथा 'रामेण बाणेन हतो वाली'त्यादौ स्वनिष्ठव्यापाराऽव्यवधानेन वालिप्राणवियोग रूपफलनिष्पादकत्वं बाणस्येति लक्षणसमन्वयः। विवक्ष्यत इति—एतेन विवक्षैव सञ्ज्ञायाः प्रयोजिकेति लभ्यते। अत एव 'स्थाल्या पचति' 'स्थाल्यां पचती'त्युभयथा प्रयोगः। प्रकृतकारिकायां क्रियापदेन फलस्य ग्रहणं न व्यापारस्येत्यत्र बीजं दर्शयति—रामेणेत्यादि—करणव्यापारात्परतोऽनन्तरं कर्तृव्यापारस्य निष्पत्ति

कर्तृको व्यापार इति बोधः। अर्थाद्रामव्यापारप्रयोज्यो बाणव्यापार इति पार्ष्णिको बोध । कर्त्रादिपञ्चकारकाणां करणत्ववारणाय व्यापारा व्यवधानेनेति दिक् ।

क्रियामात्रकर्मसम्बन्धाय क्रियायामुद्देश्य यत् कारक तत्त्व सम्प्रदानत्वम् । यथा ब्राह्मणाय गा ददातीत्यादौ दानक्रियाकर्मीभूत-

---

नास्ति, किन्तु फलस्यैव निष्पत्तिरस्तीतिभाव । बोधाश्चेति—मानसेत्यादि । शाब्दे तु कर्तृव्यापारस्य प्रयोज्यत्वसम्बन्धेन प्राणवियोगरूप उक्त एवाऽन्वय, समानशब्दोपात्तत्वप्रत्यासत्त्या फलव्यापारयोस्तथाऽन्वयस्यैव क्लृप्तत्वात्, रामाऽभिन्न कर्तृवृत्तिव्यापारजन्यश्च य प्राणवियोगस्तदाश्रयो वाली' इतिबोधस्यैव शाब्दत्वात् । तदेतद्ध्वनयन्नाह्ययति—अर्थाद्रामव्यापारप्रयोज्यो बाणव्यापार इति पार्ष्णिको बोध इति । एतेन तुल्यन्यायादनुपदोक्तकर्मकृद्दत्तस्थलेऽपि राम व्यापारप्रयोज्यत्वस्य बाणव्यापारे पार्ष्णिकत्वमेव युक्तमिति ध्वनितम् । कर्त्रादिपञ्चेति—सर्वेषामेव कारकाणां फलनिष्पादकत्वस्य तुल्यत्वादिति भाव । व्यापाराऽव्यवधानेनेति—इदञ्च प्रकर्षवाचकतमब्ग्रहणमहिमलभ्यम । तथाहि—साधकतममितिसूत्रे तमबर्थ प्रकर्ष, सचाऽव्यवधानेन फलजनकव्यापारवत्ता । प्रकर्षश्च कारकाऽन्तराऽपेक्ष एव नतु करणान्तराऽपेक्षोऽपि, कारकसामान्यवाचिसाधकशब्दादुत्पन्नेन तमबा करणेतरकारकाऽवधिकप्रकर्षस्यैव द्योतनात् । तेन 'देवदत्तो रथेन दीपिकया राजमार्गेण व्रजतीतियुगपदनेककरणसमावेश सिद्धो भवति, अन्यथा करणान्तरापेक्षस्याऽपि प्रकर्षस्य ग्रहणे तु युगपदेकस्यैव कस्यचित्करणत्व स्यादेकस्यैव कस्यचित्प्रकृष्टत्वादिति बोध्यम्, तदाह—दिगिति ।

अवसर आह—क्रियामात्रेत्यादि । अत्र मात्रशब्दः साकल्यवाचक, "मात्रं कार्त्स्न्येऽवधारणे" इति कोषात् । एवञ्च सकलक्रियाकर्मसम्बन्धायेत्याद्यर्थ । एतेन अन्वर्थसंज्ञाबला'द्दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञ'इत्यर्थं वदन्त प्राचीना कटाक्षिता, संज्ञाया अन्वर्थत्वस्य भाष्यरीत्या प्रत्याख्यास्यमानत्वात्, सूत्रे कर्मणेतिसामान्यकर्मणो निर्देशाच्च तेन मैत्राय वार्तां कथयती'ति । क्रियामात्रकर्मसम्बन्धाय क्रियायामुद्देश्य यत्कारक तत्सम्प्रदानम । तत्त्वमिति—अय भाव —"कर्मणा यमभिप्रैति स सम्प्रदानम्" इति सूत्रे अभिप्रैति सम्बन्धप्रकारकेच्छावाचक, अभिप्रैति = ईप्सति, सम्बन्धुमिच्छति इत्यर्थ इति यावत् ।

**गोसम्बन्धाय ब्राह्मणो दानक्रियोद्देश्य गोब्राह्मणयो स्वस्वामिभाव सम्बन्ध । चैत्रो मैत्राय वार्ता कथयतीत्यत्र मैत्रवार्तयोर्ज्ञेयज्ञातृभावः**

कर्मणेति सहयुक्तृतीयार्थं प्रतियोगित्वम्, यमिति कर्मद्वितीयार्थो विशेष्यतात्मक विषयताश्रय । अभिप्रैतीत्यनेन च अभिप्रैतिकर्तुराक्षेप । तथा च कर्मप्रतियोगिक सम्बन्धप्रकारककर्तृ वृत्तीच्छानिरूपितविशेष्यतात्मकविषयताश्रयो य स सम्प्रदान मिति, कर्मप्रतियोगिकसम्बन्धप्रकारिका यद्विशेष्यिकेच्छा स सम्प्रदानमिति वा सूत्रार्थ । यथा 'विप्राय गा ददाती'त्यत्र कर्मीभूतगोप्रतियोगिकस्वामिभावसम्बन्ध प्रकारिका दानकर्तृवृत्ति 'विप्रो गोप्रतियोगिकस्वस्वामिभावसम्बन्धवान् भवतु' इतीच्छा, तद्विशेष्यो विप्र इति स सम्प्रदानं भवतीतिसमन्वय । एवमन्यत्र । एतेन सूत्रे कर्मणेति करणतृतीयान्तम्, कर्मणा करणत्वञ्च सम्बन्धित्वेनेऽपेदम् इति व्याचक्षाणा, करणस्य च व्यापारवत्त्वनियमात् कर्मत्वप्रयोजकफलस्यैव कर्म वृत्तिव्यापारत्वकल्पनात् तादृशफलस्य धात्वर्थताऽवच्छेदकस्यैव सम्भवात् 'चैत्रो ग्राम गच्छती'त्यत्र ग्रामजन्यसुखे ग्रामरूपकर्मवृत्तिसंयोगरूपव्यापारजन्यत्वस्याऽ सत्त्वात् ग्रामरूपकर्मजन्यसुखादिरूपफलाश्रयत्वेनोद्देश्ये कर्तरि नाऽतिप्रसङ्ग इति च तादृशव्याख्यानस्य फलं ब्रुवाणा भूषणसारदर्पणकारप्रभृतयः परास्ता, य स प्रह णेनैव भाष्ये अभिप्रैतिकर्तुं सम्प्रदानत्वस्य वारणादित्यलम् । तदुद्देश्यम = इच्छाविशेष्यम् । ब्राह्मणाय गा ददातीति—अत्र दानं स्वस्वत्वनिवृत्तिसमानाधि करणपरस्वत्वोत्पत्त्यनुकूलो व्यापारः । उपेक्षायामतिव्याप्तिवारणाय परेति । स्वस्वत्व निवृत्तिं विना परस्वत्वोत्पत्तेरयोगात्साऽपि धात्वर्थः, इद स्वरूपपरिचायकमेव । प्रतिग्रह एव स्वत्वजनक इति मते तु स्वस्वत्वध्वंससमानाधिकरणपरस्वत्वात्पत्तीच्छा घोषानुकूलो व्यापारो दानम् । तदुत्पत्तीच्छामात्रं ▮ न धात्वर्थः, सदिच्छाभावाऽ नुकूलकायिकव्यापारविशेषकाल एव ददातीति प्रयोगात् । वस्तुतस्तु दानमेव स्वत्वजनकम्, प्रतिग्रहस्तु फलाऽतिशयार्थो न स्वत्वजनको दानेनाऽन्यथासिद्धत्वात् । अस्वीकारश्च तदुत्पत्तिप्रतिबन्धक, तस्मिन्सति दानेऽपि न तदुत्पत्ति । अत एव देशान्तरस्थब्राह्मणोद्देशेन द्रव्यदाने तस्य मरणे तत्पुत्राणां तस्य द्रव्यस्य पितृदाय त्वेन ग्रहणमुक्तं निबन्धेष्वित्याहुः । सम्प्रदानचतुर्थ्यर्थताऽवच्छेदको सम्बन्धाधार— गोब्राह्मणयोरित्यादि । एवमन्यत्राऽप्यूह्यम् ।

सम्बन्धश्च । यत्तु वृत्तिकार—सम्यक्प्रदीयते यस्मै तत्सम्प्रदानमित्यन्वर्थसञ्ज्ञेयम् । यथा च गोनिष्ठस्वस्वत्वनिवृत्तिसमानाधिकरणपरस्वत्वोत्पत्त्यनुकूलव्यापाररूपक्रियोद्देश्यस्य ब्राह्मणादेरेव सम्प्रदानत्वम् । पुनर्ग्रहणाय रजकस्य वस्त्रदाने रजकस्य वस्त्र ददातीति सम्बन्धसामान्ये षष्ठ्येवेत्याहु । तन्न । खण्डिकोपाध्याय शिष्याय चपेटा ददातीति भाष्यविरोधात् । "कर्मणा यमभिप्रैती" तिसूत्रव्याख्यावसरे भाष्यकृताऽन्वर्थसञ्ज्ञाया अस्वीकाराच्च । अत एव "तदाचचक्षासुरेन्द्राय स च युक्त करोतु यत्" इति सप्तशतीश्लोक सङ्गच्छते । तस्माद्रजकाय वस्त्र

अन्वर्थसञ्ज्ञेयमिति—महासञ्ज्ञात्वादितिभाव । खण्डिकोपाध्याय—अथर्ववेदाध्यापक, अथर्ववेदाध्यायिनां हि खण्डिकेति सञ्ज्ञेति केचित् । खण्डिका = खलीतिभाषायाम्, तत्सम्बन्धी उपाध्यायो बालशिक्षक इत्यर्थ इत्यन्ये । चपेटाम् = प्रसृतकरतलम् । इति भाष्यविरोधादिति—"वृद्धिरादैच्" सूत्रे भाष्यमिदम्—"कथ पुनर्ज्ञायते भेदका उदात्तादय इति ? एव हि दृश्यते लोके य उदात्ते कर्तव्येऽनुदात्त करोति, खण्डिकोपाध्यायस्तस्मै चपेटां ददाति—'अन्यत्त्व करोषी'ति ' इति ।

अत्र दान सयोगविशेषाऽनुकूलो व्यापारो न तु स्वस्वत्वनिवृत्तिसमानाधिकरणपरस्वत्वोत्पत्त्यनुकूलो व्यापार । तथा च सम्प्रदानसञ्ज्ञाया अन्वर्थत्वे भाष्यविरोध स्पष्ट एव । भाष्यकृता अन्वर्थसञ्ज्ञाया अस्वीकाराच्चेति—अत एव प्रकृतसूत्रे भाष्ये—"क्रियाग्रहणमपि कर्तव्यम् । इहाऽपि यथा स्यात्—श्राद्धाय निगर्हते, युद्धाय सन्नह्यते, पत्ये शेते इति । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । कथम् ? क्रिया हि नाम लोके कर्मेत्युपचरन्ति—'का क्रिया करिष्यसि ?' 'कि कर्म करिष्यसी'ति" इत्युक्तम् । एवञ्च बहुलव्यवहाराऽनुरोधेनाऽत्र कर्मक्रियामयगतिर्भवतीत्याशय । सम्प्रदानमिति महासञ्ज्ञाया अन्वर्थत्वे तु दाधात्वर्थनिरूपितकर्ममात्रग्रहणे भाष्योक्तप्रयोगाऽसिद्धि, भाष्योक्तव्याख्यानाऽसङ्गतिश्च स्फुटैवेति नात्र महासञ्ज्ञाया अन्वर्थत्वम्, महासञ्ज्ञा तु प्राचामनुरोधादेवेति बोध्यम् । एव हि यदा—ग्रामसत्कारार्थं—'ग्रामोऽजासम्बन्धवान् जायतामि'तीच्छया हि अजानयन, नीधात्वर्थश्च संयोगानुकूलव्यापारमात्र, फलताऽवच्छेदकसम्बन्धोऽजामात्रनिष्ठस्तदा

ददातीत्यादि भवत्येव। अत्राधीनीकरणेऽर्थे ददाति। चपेटां ददाती त्यत्र न्यसनेऽर्थ इति। सम्प्रदानचतुर्थ्यर्थो उद्देश्य'। तथा च ब्राह्मणोद्देश्यक गोकर्मक दानमिति बोधो मैत्रोद्देश्यक वार्ताकर्मक कथनमिति च। अकर्मकक्रियोद्देश्यत्वं सम्प्रदानत्वमिति लक्षणान्तरम्। यथा पत्ये

---

'अजां ग्रामाय नयतीति' भवत्येव। यद्वा तु 'अजा ग्रामसम्बद्धा भवतु' इतीच्छयैव हि अजानयन, तत्र ग्रामस्योद्देश्यत्वाऽभावात् सम्प्रदानत्वमित्यपि वाच्यम्।

अत्राधीनीकरणेऽर्थ इति—रजकाय वस्त्रं ददातीत्यत्र अधीनीकरणं दाधात्वर्थं। तच्च—प्रक्षालनेच्छाबोधानुकूलस्थित्यनुकूलो व्यापार। तत्र 'रजको वस्त्रप्रतियोगिकप्रक्षालनप्रक्षालकभावसम्बन्धवान् जायताम्' इतीच्छोद्देश्यत्वे रजकस्य सम्प्रदानत्वम्। अधीनीकरणक्रियाया सम्बन्धसामान्यविवक्षायां तु षष्ठीति तत्त्वम्। न्यसनेऽर्थ इति—न्यसन प्रकृते कपोलानुयोगिकसंयोगानुकूलव्यापार।

सम्प्रदानचतुर्थ्यर्थ उद्देश्य इति—अत्र शेखरे—"सम्प्रदानत्वशक्तिमान् सम्प्रदानचतुर्थ्यर्थ, स एवोद्देश्य इत्युच्यते, क्रियाकारकभाव सम्बन्धश्च तदर्थ। विप्रसम्प्रदानक दानम् ( विप्राऽभिन्नसम्प्रदानत्वशक्तिमद्विशिष्ट क्रियाकारकभाव सम्बन्धेन दानम्, यद्वा विप्राऽभिन्नसम्प्रदानत्वशक्तिमन्निष्ठक्रियाकारकभाव सम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यताशालि दानम् ) इति बोध" इत्युक्तम्। ब्राह्मणोद्देश्यकमिति—क्रियाकारकभावसम्बन्धेन ब्राह्मणाऽभिन्नसम्प्रदानत्व शक्तिमद्विशिष्ट दानमिति बोध इत्यर्थ। एवमन्यत्राऽपि।

ननु 'कर्मणा' इत्युक्तावकर्मकक्रियोद्देश्यस्य सम्प्रदानत्वं न स्यादत आह—अकर्मकक्रियोद्देश्यत्वमित्यादि—अकर्मकक्रियोद्देश्यत्वञ्च—अकर्मकक्रियाप्रतियोगिकसम्बन्धप्रकारकेच्छाविशेष्यत्वम्। यथा 'पत्ये शेते' इत्यत्र शयनप्रतियोगिकस्वप्रयोज्यसमागवत्त्वात्मकसम्बन्धप्रकारिका नायिकावृत्ति 'पतिः मदीयशयनप्रतियोगिकस्वप्रयोज्यसंभोगवत्त्वात्मकसम्बन्धवान् भवतु' इतीच्छा, तद्विशेष्यत्वात् पति सम्प्रदानं भवतीति। अत्र शयनपत्यो संभोगद्वारक स्वप्रयोज्यसंभोगवत्त्व ( संभोगप्रयोजकसंयोगकर्तृभाव ) सम्बन्ध। 'युद्धाय संनह्यते' इत्यत्र संनहन प्रतियोगिकस्वपूर्वकनिश्चयविषयत्वसम्बन्धप्रकारिका संनहनकर्तृवृत्ति 'युद्धं मदीयसनहन ( कवचादिबन्धन ) पूर्वकनिश्चयविषयत्वसम्बन्धि भवतु' इतीच्छा, तद्वि

शेते इत्यादि । पत्युद्देश्यक नायिकाकर्तृक शयनमिति बोधः । ननु दाना-

शेष्यत्वात् युद्धस्य सम्प्रदानत्वम् 'युद्धविषय संनहनपूर्वक निश्चय करोतीत्यर्थ' इति कैयटोक्ते । 'श्राद्धाय निगर्हते' इत्यत्र च निगर्हणप्रतियोगिकस्वसमानाधिकरण नास्तिकत्वप्रयोज्यकुत्साविषयत्वसम्बन्धप्रकारिका निगर्हणकर्तृवृत्ति 'श्राद्ध मदीय निगर्हणसहचरितनास्तिकत्वप्रयोज्यकुत्साविषयत्वसम्बन्धवत्' इतीच्छा । तद्वि शेष्यत्वात् श्राद्धस्य सम्प्रदानत्वम् 'श्राद्धं निन्दति, नास्तिकत्वादित्यर्थं' इति कैयटोक्ते । अत्र सर्वत्र अकर्मको धातु, सकर्मकत्वे कर्मसज्ञया परत्वात् बाधापत्तेः । कैयटस्य सकर्मकयोग्यार्थप्रदर्शनन्तु भावार्थाऽभिप्रायेण । 'निगर्हते' इत्यत्राऽपि गर्हधातु कथञ्चिदकर्मक एव द्रष्टव्य । पतिसम्प्रदानक शयनमित्यादिबोध ।

लक्षणान्तरमिति—कर्मणा यमभिप्रैतीति सूत्रस्य 'क्रियाग्रहण कर्तव्यम्' इति वार्तिकमत्र मूलम् । वार्तिकप्रत्याख्यानपरकभाष्यरीत्या तु पूर्वलक्षणेनैव (कर्मप्रतियोगिकसम्बन्धप्रकारकेच्छाविशेष्यत्व सम्प्रदानत्वमित्यनेन) कर्मशब्देन कर्मक्रियोभयग्रहणात्सिद्धिरिति लक्षणान्तरमिद नावश्यकम् । तथाहि प्रकृतसूत्रे भाष्ये—"क्रियाग्रहणमपि कर्तव्यम्, इहाऽपि यथा स्यात्—श्राद्धाय निगर्हते, युद्धाय सनह्यते, पत्ये शेते इति । तर्हि वक्तव्यम् ? न वक्तव्यम् । कथ ? क्रिया हि नाम लोके कर्मेत्युपाचरन्ति—'का क्रिया करिष्यसि ?' 'किं कर्म करिष्यसीति । एवमपि कर्तव्यम् । कृत्रिमाऽकृत्रिमयो कृत्रिमे सम्प्रत्ययो भवति । क्रियाऽपि कृत्रिम कर्म । न सिध्यति, 'कर्तुरीप्सिततमं कर्म'त्युच्यते, कथं च नाम क्रियया क्रियेप्सितमा स्यात् ? क्रियाऽपि क्रिययेप्सिततमा भवति । कया क्रियया ? सन्दर्शनक्रियया वा, प्रार्थयतिक्रियया वाऽध्यवस्यतिक्रियया वा । इह य एष मनुष्य प्रेक्षापूर्वकारी भवति स बुद्ध्या तावत्किञ्चिदर्थं सपश्यति, सदृष्टे प्रार्थना, प्रार्थनायामध्यवसाय, अध्यवसाये आरम्भ, आरम्भे निर्वृत्ति, निर्वृत्तौ फलाऽवाप्ति । एव क्रियाऽपि कृत्रिमं कर्म इत्युक्तम् । एतद्भाष्यरीत्या तु सन्दर्शनादीनामव्यभिचारेण प्रतीयमानत्वात् प्रविश पिण्डीमित्यादाविव प्रतीयमानसन्दर्शनादि क्रियाऽपेक्षकर्मसंज्ञाविधानात् 'पत्ये शेते' इत्यादेर्दर्शनादिपूर्वकारम्भकर्मभूत पति सम्प्रदानक शयनमित्यादिबोध इत्यलम् ।

दीना तदर्थत्वात्तादर्थ्ये चतुर्थ्यैव सिद्धौ किं "कर्मणा यम्" इति सम्प्रदान सञ्ज्ञया, "चतुर्थी सम्प्रदाने" इति सूत्रं तु रुच्यर्थानामिति विषये चतुर्थ्यर्थमिति चेन्न। दानकर्मणो गवादेर्ब्राह्मणार्थत्वेऽपि दानक्रियायाः परलोकार्थत्वात्। अत एव तादर्थ्यचतुर्थ्यां दानकर्मणो गवादेः सम्प्रदानार्थत्वेऽपि दानक्रियायास्तदर्थत्वाभावेन चतुर्थ्यन्तार्थस्य दानक्रियायामन्वयानापत्त्या कारकत्वानापत्तिरिति हेलाराज। उपकार्योपकारकत्वसम्बन्धस्तादर्थ्यं चतुर्थ्यर्थः। ब्राह्मणाय दधीत्यादौ ब्राह्मणोपकारकं दधीति बोधादिति दिक्।

तत्तत्कर्तृसमवेततत्तत्क्रियाजन्यप्रकृतधात्वर्थवाच्यविभागाश्रयत्वमपादा

---

तदर्थत्वादिति—स्वकर्मगवादिद्वारा दानादीनां ब्राह्मणाद्युपकारकत्वादिति भाव। ननु तर्हि कर्मणेतिसूत्राऽभावे "चतुर्थी सम्प्रदाने" इति सूत्रं किमर्थं स्यादित्यत आह—चतुर्थीति। परलोकाऽर्थत्वादिति—स्वर्गद्वारा दानकर्तुरुपकारकत्वेन विवक्षितत्वादिति भाव। तदर्थत्वाऽभावेनेति—तदर्थत्वेन विवक्षितत्वाऽभावेनेत्यर्थः। हेलाराज इति—इदमुपलक्षणम्—तत्सम्प्रदानकं दानमिति बोधार्थमपि कर्मणेति सूत्रमावश्यकमेवेति। ननु "रुच्यर्थानाम्" इत्यादि सूत्रबोधित सम्प्रदानलक्षणं कुतो न निरूपितमित्यत आह—दिगिति—सम्प्रदानस्य लक्षणान्तराणि अनयैव दिशा स्वयमूह्यानीति भाव।

अवसरे अपादानस्य निरूपयन्नाह—तत्तत्कर्तृसमवेतेति—अत्रेदं तत्त्वम्—"ध्रुवमपाये" इति सूत्रे—अपायो विभागजन्यसंयोगाऽनुकूलोऽवधिसाकाङ्क्षो गतिविशेषः—'गतिविनात्वधिना नाऽपाय इति कथ्यते' इति हर्युक्ते। अन्यदेशसंयोगाऽनुकूलव्यापारमात्रं तु नाऽपाय, वृक्षमग्रहस्यपि पर्णो भूमि सृजति वृक्षात्पर्णं पततीत्यप्रयोगात्। ध्रुवत्वञ्च—अवधिभावमहत्याऽतिरिक्ताऽवधित्वोपयोगिव्यापाराऽनाश्रयत्वे सति अवधिभावमहत्याऽऽश्रयत्वम्। यद्यपि 'ध्रु गतिस्थैर्ययोः' अस्मात्कुटादेः पचाद्यच्, 'ध्रुव स्थैर्ये' इति पाठे तु इगुपधलक्षण कः' इति साधनात् 'ध्रुव स्थिरम्, अचल, चेष्टाऽनाश्रय' इत्यर्थो लभ्यते, "ध्रुवमस्य शीलमि"त्यत्र तथाप्रतीतश्च, तथापि 'अपाये अपायविषये ध्रुवम्' इत्यन्वयऽवधिसाकाङ्क्षगतिविशेषरूपाऽपायेनाऽऽकाङ्क्षितत्वात् अवधित्वमहत्याऽऽश्रयत्वस्यैव लाभ। ध्रुवपदार्थस्याऽपायेन विशेषणात्—'अपायविषये स्थिरं चेष्टाऽनाश्रय',

अन्यत्र स्थिरं स्यादस्थिरं वा' इति प्रतीते —अवधित्वोपयोगितदतिरिक्तव्यापाराऽनाश्रयत्वमित्यस्य लाभः। तथा च वाक्यशक्त्या 'ध्रुव'पदस्य तादृशोऽर्थ इत्यागतम्। एवञ्च—अपाये यत् ध्रुवम् उक्तरूपं तदपादानमिति सूत्रार्थः।

ननु अपायविषये यत्कारकं तदपादानमितिमात्रेणाऽपीष्टसिद्धिः, स्वविषये कर्मादिभिः परत्वाद्बाधेन परिशेषात्, तादृश्येव ध्रुवाऽर्थे प्रवृत्तिसम्भवात् इतिचेत्—अपादानस्य अवधित्वग्रहणाऽतिरिक्तव्यापाराऽभावबोधनार्थं ध्रुवग्रहणम्। तेन सौकर्यविवक्षायां 'ग्राम आगच्छती'ति प्रयोगो नेति फलम्। 'त्रस्तादश्वात्पतित' 'धावतोऽश्वात्पतित' इत्यादौ त्रासधावनादेः सतोऽपि नाऽवधित्वोपयोगित्वेन विवक्षा, 'वृक्षात्पर्णं पतति' इत्यादौ त्रासादेरभावेन तस्य तदुपयोगित्वाऽभावात्, इतीह ध्रुवत्वमेव, अवधित्वोपयोगितदतिरिक्तव्यापाराऽनाश्रयत्वात्। 'परस्परस्मा मेषावपसरत' इत्यत्र मेषपदोपात्तयोरेव क्रियाऽऽश्रयत्वविवक्षणात्कर्तृत्वम्, परस्परशब्दोपात्तयोरेव विभागाश्रयत्वविवक्षणादपादानत्वम्, प्रयोगाऽनुसारित्वाद्विवक्षाया। अत एव 'अयोऽयमाश्लिष्यतश्चैत्रमैत्रावि'त्यादौ तयोः कर्मत्वसिद्धिः। शब्दरूपोपाधिभेदेन एकस्यैवाऽर्थस्य भेदः, शब्दाऽऽलिङ्गितार्थस्यैव स्वमते भानात्।

यत्तु—ध्रुवत्वम्—विश्लेषाऽऽश्रयत्वे सति विश्लेषजनकतत्क्रियाऽनाश्रयत्वमिति, तन्न—'त्रस्तादश्वात्पतित' इत्यत्र अध्रौव्यशङ्कापरकभाष्याऽसङ्गते अध्रौव्यस्याऽविवक्षया समाधानपरकभाष्याऽसङ्गतेश्च। त्वद्रीत्या पतनात्वर्थव्यापाराश्रयत्वरूपस्याऽध्रुवत्वस्याऽत्राऽभावात्। प्रकृतसूत्रे भाष्ये हि—"गतियुक्तेष्वपादानसंज्ञा नोपपद्यते 'अश्वात्त्रस्तात्पतित' 'रथात्प्रवीतात्पतित' 'सार्थाद्गच्छतो हीन' (धावत पतित) इति। किं कारणम्? 'अध्रुवत्वात्'। नवाऽध्रौव्यस्याऽविवक्षितत्वात्। नवैष दोषः। किं कारणम्? अध्रौव्यस्याऽविवक्षितत्वात्' नाऽत्राऽध्रौव्यं विवक्षितम्। किं तर्हि ध्रौव्यम्' इत्युक्तम्। स्वमते तु अत्र त्रासादेरवधित्वोपयोगित्वाऽभिमानेन शङ्काया, 'वृक्षात्पतित' इत्यादौ तदभावेन त्रासादेर्न तदुपयोगित्वम्, इह सतोऽपि तस्य तत्त्वेनाऽविवक्षेति समाधानस्य च सङ्गतिरित्यत्र विस्तरः।

इतीममेव सूत्रार्थं फलितार्थीकृत्य मूलकृता परिष्कृतम्—तत्तत्कर्तृसमवेतेत्यादिना—शेखरे तथैव परिष्कारात्। तत्र 'वृक्ष त्यजति' इत्यत्र फलाऽऽश्रयत्वेन

नत्वम्। तदेवावधित्वं, विभागश्च न वास्तवसम्बन्धपूर्वको वास्तव एव किन्तु बुद्धिपरिकल्पितसम्बन्धपूर्वको बुद्धिपरिकल्पितोऽपि माथुरा पाटलिपुत्रकेभ्य आढ्यतरा इत्यादौ बुद्धिपरिकल्पितापायाश्रयणेनैव भाष्ये पञ्चमीसाधनात्। अत एव चैत्रान्मैत्र सुन्दर इत्यादिः लोके प्रयोगः। वृक्ष स्पर्शति

---

परत्वात्कर्मसंज्ञया बाधादबाधसिद्ध एव सङ्कोच —'प्रकृतधात्वर्थवाच्येति'।'पततोऽश्वात्पतती'त्यपि 'धस्तादश्वात्पतित' इत्यनेन धावत पतित इत्यनेन च भाष्योक्तेन तुल्ययोगक्षेममेवेति तदव्याप्तिवारकत्वेन विवक्षितत्वददितिनिवेशोऽपि अन्नौव्यस्याऽविवक्षेतिभाष्योक्तयुक्तिमूलक एवेति विभावनीयम्। बुद्धिपरिकल्पितसम्बन्धपूर्वकबुद्धिपरिकल्पितविभागाभ्ये बीजमाह—भाष्ये पञ्चमीसाधनादिति—प्रकृतसूत्रे भाष्ये हि—"जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानं कर्तव्यम्—अधर्माज्जुगुप्सते, अधर्माद्बीभत्सते'- धर्माद्विरमति, धर्मान्निवर्तते, धर्मात्प्रमाद्यति, धर्मान्मुह्यति। इहचोपसङ्ख्यानं कर्तव्यम्—'साङ्काश्यकेभ्य पाटलिपुत्रका अभिरूपतरा' इति। तत्तर्हि बहुवक्तव्यम्? न वक्तव्यम्। इह तावदधर्माज्जुगुप्सते, अधर्माद्बीभत्सते, इति—य एष मनुष्य प्रेक्षापूर्वकारी भवति, स पश्यति—'दु खोऽधर्मो नाऽनेन कृत्यमस्ती'ति। स बुद्धया सम्प्राप्य निवर्तते। तत्र ध्रुवमपायेऽपादानमित्येव सिद्धम्। इह च धर्माद्विरमति, धर्मान्निवर्तते इति, धर्मात्प्रमाद्यति, धर्मान्मुह्यतीति—य एष मनुष्य सभिन्नबुद्धिर्भवति, स पश्यति—नेदं किञ्चिद्धर्मो नाम, नैनं करिष्यामी'ति स बुद्धया सम्प्राप्य निवर्तते। तत्र ध्रुवमपायेऽपादानमित्येव सिद्धम्। इह च साङ्काश्यकेभ्य पाटलिपुत्रका अभिरूपतरा इति—यस्तैः साम्यं गतवान् भवति, स एतत्प्रयुङ्क्ते।" इत्युक्तम्। अत्र कैयटः—"साङ्काश्यकेभ्य इति—"पञ्चमी विभक्ते" इत्यनपेक्ष्य वचनम्। सभिन्नबुद्धिरिति—धर्माऽधर्मयोरैक्यकारबुद्धिनास्तिक इत्यर्थः। यस्तैरिति—तै साङ्काश्यकै पाटलिपुत्रकाणां समगुणत्वात्तः साम्यमवगतवान् स प्रकर्षाश्रयेण पुन पृथक् कृत्वा वाक्यं प्रयुङ्क्ते इत्यर्थः।" इति। अत्र बुद्धिपरिकल्पिताऽपायाश्रयणप्रयुक्तमपादानत्वमितिसुस्पष्टमेवोक्तम्। इत्यादा विति—आदिपदात् अधर्माज्जुगुप्सते इत्यादिभाष्योक्तसंग्रहः। वृक्षमिति—विभागाऽनुकूलव्यापारात्मकत्वग्रवारवर्यत्वगसमवेतक्रियाजन्यविभागाभावादिति

सग इत्यादावपादानत्ववारणाय प्रकृतधात्वर्थाच्येति । परस्परस्मान्मेषाव पसरत इत्यत्रापादानत्वाय तत्तत्कर्तृकेति । तत्तत्पशुविशेषनिष्ठव्यापार-जन्यविभागाश्रयस्तत्तत्पशुविशेषः । किं च मेषपदवाच्ययो पशुविशेषयो क्रियाश्रयत्वविवक्षा परस्परपदवाच्ययोस्तयोस्तु विभागाश्रयत्वविवक्षे त्यौपाधिकस्तयोर्भेद । शब्दस्वरूपोपाधिकृतभेदोऽप्यर्थे गृह्यते । यथाऽऽत्माऽऽत्मानमात्मना वेत्तीत्यादौ शरीरावच्छिन्न कर्तृ, अन्त करणा वच्छिन्न करण,निरवच्छिन्न निरीह कर्म । एकस्यैव शब्दभेदाद्भेद' शब्दा द्विश्वस्यैव सर्वत्र वर्तमानात् तदाह—

न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते ।
अनुविद्धमिव ज्ञान सर्वं शब्देन भासते ॥ इति ।

ननु ह्येतदौपाधिकभेदमादायैवात्रापादानत्वे सिद्धे किं तत्तत्कर्तृ सम वेतेत्यनेनेति चेन्न । पर्वतात्पततोऽश्वात्पतत्यश्ववाह इत्यादावश्वस्यापादा

भाव'। परस्परस्मान्मेषाविति--मेषान्तरसमवेतक्रियाजन्यविभागाश्रयत्वान्मेषा-न्तरस्याऽपादानत्वम् , स्वसमवेतक्रियाश्रयत्वाच्च कर्तृत्वमितिभाव , निरूपकभेदाच-योर्नविरोध इति न परया कर्तृसंज्ञया बाध इत्यपि भाव'। ननु क्रियाया निवृत्तभेदाया एव 'न वै तिङन्तानीत्यादि''वक्ष्यमाणभाष्यात्प्रतीतेर्नेद युक्तसमाधानमिति चेदत आह—किञ्चेति--शब्दोपाधिभेदा मेषपदोपात्तपरस्परपदोपात्तयोर्भेदस्य सत्वान्नैकत्र कर्तृत्वाऽपादानत्वयो सम्मेलनमिति नाऽत्र कर्तृसंज्ञया अपादानत्वस्य बाधाशङ्केति भाव । शरीराऽवच्छिन्नमिति—स्थूलशरीराऽवच्छिन्नमित्यर्थ । अन्त करणाऽवच्छिन्नमिति—मनोबुद्ध्यहङ्कारात्मकसूक्ष्मशरीराऽवच्छिन्नमित्यर्थ । निर-वच्छिन्न निरीहमिति—"अनश्नन्नन्योऽभिचाकशीति" इत्यादिश्रुत्या चैतन्यस्य निरीहत्वाऽवगतिरपि एकस्यैवेति—चैतन्यस्येतिशेष । नसोऽस्तीति—प्रत्यय =ज्ञानम् , शब्दाऽनुगमात् =शब्दसाहचर्यात् , ऋते =विना भवति, स प्रत्यय , लोके नाऽस्ति, लोकादन्यत्र स्याद्वा न वा स्यात् । ( यत ) सर्वं प्रत्यक्षा नुमानोपमानशब्दजन्यात्मक ज्ञान शब्देन अनुविद्धं ग्रथितम् इव भासते उपतिष्ठत इत्यर्थ । पर्वतादिति—अश्वीयपतनाऽवधित्वेन पर्वतस्य, अश्ववाहीयपतनाऽवधित्वेन चाश्वस्य अपादानत्वम् । क्रियाया एकत्वेऽपि द्वाभ्यां धातुभ्यां प्रतिपादनात्

नत्वाय तत्स्वीकारात् । ननु वृक्षात्पर्णं पततीत्यादौ तादृशफलाश्रयत्वात् पर्णस्याप्यपादानत्वं विभागस्य द्विष्ठत्वादिति चेन्न । परया कर्तृसंज्ञया बाधात् । अत एव "अपादानमुत्तराणि कारकाणि बाधन्ते" इति भाष्यं सङ्गच्छते ।

यत्तु केचिद्गत्यनाविष्टत्वे सति तज्जन्यविभागाश्रयत्वमपादानत्वमिति । तन्न । तत्तद्वाक्ये मेषाश्वयोरपादानत्वानापत्तेः । यदपि अपसरत इति सृधातुना गतिद्वयस्याप्युपादानादेकनिष्ठा गतिं प्रतीतेरस्यापादानत्वम् विरुद्धमिति तन्न । क्रियाया एकत्वात् । अत एव "न वै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति क्रियाया एकत्वादिति" भाष्यं सङ्गच्छते । पञ्चम्यर्थोऽवधिः । वृक्षावधिकपर्णकर्तृकं पतनमिति बोधः । पर्णतावधिकपतनाश्रया

---

उपाधिभेदात् च स्वपतनं प्रति अश्वस्य कर्तृत्वम्, अश्ववाहीयपतनं प्रति च तस्या ऽपादानत्वमिति निरूपकभेदान्न शक्तयोर्विरोध इति नात्र परया कर्तृसंज्ञया बाध इति भावः । गत्यनाविष्टत्वे सति = विश्लेषजनकक्रियाऽनाश्रयत्वे सति । तज्जन्य = विश्लेषजनकक्रियाजन्य । तत्तद्वाक्ये = "परस्परस्मान्मेषावपसरतः" 'धावतस्तस्माद् श्वात्पतत्यश्ववाह' इत्यादिवाक्ये । भूषणसारस्य मतं कण्ठयति—यदपीति । पञ्चम्यर्थोऽवधिरिति—अवधि = अपादानत्वशक्तिमान्, अपादानत्वं तदेवाऽवधित्वमिति स्वपूर्वोक्तमन्येन तयोरैक्यसाधनात् । इदमुपलक्षणम् क्रियाकारकभाव सम्बन्धस्य अपादानपञ्चम्यर्थ इति निष्कर्षः । वृक्षाऽवधिकमिति—अत्र शेखरे "अपादानत्वशक्तिश्च प्रकृतधात्वर्थविभागाश्रयत्वसमानाधिकरणेति अपादानसमभिव्याहारे विभागोऽपि धात्वर्थ इति भाष्यम् । एवञ्च 'वृक्षात्पतति' इत्यादौ तदपादानकविभागपूर्वकसंयोगानुकूलव्यापार इति भावः । 'वृक्षाद्भूमिं पतति' इत्यादौ वृक्षापादानकविभागपूर्वकसंयोगाऽनुकूलो व्यापार इति बोध" इत्युक्तम् । एवञ्च वृक्षाऽभिन्नाऽपादानत्वशक्तिमन्निष्ठक्रियाकारकभावसम्बन्धाऽवच्छिन्नप्रकारतानिरूपितविशेष्यताशालि विभागपूर्वकपर्णकर्तृकपतनमिति बोध इति तत्त्वम् । एवमन्यत्र ।

ननु 'अपादानसमभिव्याहारे विभागोऽपि धात्वर्थः' इत्युक्तरीत्या परमते अपादानलक्षणे प्रकृतधात्वर्थान्यैकविभागीयविशेषणस्य कथं सङ्गतिरिति चेत्, अत्र

भिन्नाश्वावधिकमश्ववाहद्वयकर्तृकं पतनमिति बोध । परस्परमेपावधिक द्वित्वावच्छिन्नमेषकर्तृकमपसरणमिति बोध इति दिक्।

कर्तृकर्मद्वारकफलव्यापाराधारत्वमधिकरणत्वम्। यथा स्थाल्यामोदन गृहे पचतीत्यादौ कर्मद्वारकविक्लित्तिरूपफलाधार' स्थाली, कर्तृद्वारकव्यापाराधारो गृहमिति। ननु साक्षात्क्रियाधारयोरोदनचैत्रयोरधिकरणत्व कुतो परम्परया तदाधारयोर्गृहस्थाल्योस्तत्संज्ञा त्वयुक्तेति चेन्न। परत्वात्कर्तृकर्मसंज्ञाभ्यां साक्षादाधारीभूते बाधात्। स्थाल्यधिकरणिका या ओदन

घात्ववाच्येत्यस्य प्रकृतधातुवाच्यफलताऽवच्छेदकसम्बन्धाऽवच्छिन्नफलेतर इत्यर्थे तात्पर्यमिति बोध्यम्।

अवसरेऽधिकरणत्व निरूपयति—कर्तृकर्मद्वारकेति—साक्षात् फलव्यापाराऽधारयो परत्वात्कर्तृकर्मसंज्ञाभ्यां बाधाद्बाधसिद्ध एव कर्तृकर्मद्वारकेति सङ्कोचोऽयम्। कर्मद्वारकविक्लित्तिरूपेति—विक्लित्ति ओदने ओदनश्च स्थाल्यामिति ओदनद्वारा विक्लित्तिरूपफलाधार स्थालीतितस्या अधिकरणत्वम्। कर्तृद्वारकेति—व्यापार कर्तरि, कर्ता च गृहे, इति कर्तृद्वारकपरम्परया व्यापाराधारो गृहमिति तस्याधिकरणत्वम् इति भाव ।

स्थाल्यधिकरणिका या ओदननिष्ठा विक्लित्तिरिति—अत्र मञ्जूषाकारा—"परे [illegible] 'अधिकरणस्य कर्मान्वय एव। 'कटे शेते' इत्यादौ कटाधिकरणकचैत्रकर्तृक शयनमित्यादिरीत्या बोध । तद्द्वारकमेवाऽस्य क्रियाऽन्वयित्वम्। कारकाणा भावनान्वयव्युत्पत्तिरपि एतच्छास्त्रबलादीदृशपरम्पराऽन्वयविषयाऽपि। अत एव 'अक्षेषु शौण्ड' इत्यादौ समास । अत एव भाष्ये तत्राऽसामर्थ्यशङ्का न कृता। एवञ्चाऽत्र अन्तर्भूतक्रियाद्वारा सामर्थ्यमिति कैयटादयश्चिन्त्या एव। 'अक्ष शौण्डोऽक्षप्रवीण' इत्यादौ दध्योदनादाविव क्रियाऽन्तर्भावेण बोधस्याऽननुभवात्, अक्षविषयकप्रावीण्यवानित्येव प्रतीते । ध्वनितञ्चेद हरिग्रन्थेऽपि। तत्र हि—

"कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम्।
उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥"

इति कारिकायां व्यवहितामित्युक्तेऽपि असाक्षादित्युक्तिर्लोकाऽनुसारेणाऽन्ययोऽपि परम्परयैवेति सूचनाय" इत्याहु ।

निष्ठा विक्लित्तिस्त्वदनुकूलो गृहाधिकरणको मैत्रकर्तृको व्यापार इति बोधः।
तथाधिकरणं त्रिधा। अभिव्यापकमौपश्लेषिकं वैषयिकं चेति। तत्र

अक्षशौण्डस्य धनमित्यादौ कर्तृकर्मणोऽभावेऽपि शौण्डपदस्य आसक्तौ लक्षणा। अक्षशौण्ड इत्यत्र तु न लक्षणा 'न विधौ परः शब्दार्थः' इतिन्यायादिति तद्भाव" इत्यप्याहुः।

तथाधिकरणं त्रिधेति—अत्र मूलं "संहितायामिति" सूत्रस्य भाष्य तत्र हि—अधिकरणं नाम त्रिप्रकारम्—व्यापकम्, औपश्लेषिकम्, वैषयिकमिति। शब्दस्य च शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हति अन्यदत उपश्लेषात्? 'इको यणचि' अच्युदश्लिष्टस्येति" 'तदस्मिन्नधिकमि'तिसूत्रेऽपि भाष्ये—"यद्यपि तावद्व्यापके वैषयिके वाऽधिकरणत्वे सम्भवो नास्ति, औपश्लेषिकमधिकरणं विज्ञास्यते—एकादश कार्षापणा उपश्लिष्टा अस्मिन् शते एकादशं शतम् इति" इत्युक्तम्।

तत्र व्यापकाऽधार एव मुख्य आधार इति "स्वरितेनाऽधिकार" "साधकतमं करणम्" इतिसूत्रस्यभाष्ययो स्पष्टम्। तत्र हि "स्वरितेने" तिसूत्रे—"तथाऽधिकरणमाचार्यः किं न्याय्यं मन्यते? यत्र कृत्स्न आधारात्मा व्याप्तो भवति। तेनैव स्यात्—'तिलेषु तैलम्' 'दध्नि सर्पि'रिति। 'गङ्गायां गाव' 'कूपे गर्गकुलम्' इत्यत्र न स्यात्। स्वरितेनाधिकं कार्यं भवतीत्यत्राऽपि सिद्धं भवति अधिकं कार्यम्" इत्युक्तम्। "साधकतमम्" इति सूत्रेऽपि तत्र—"तथाऽऽधारमाचार्यः किं न्याय्यं मन्यते?

यत्र कृत्स्न आधारात्मा व्याप्तो भवति। तेनैव स्यात्—'तिलेषु तैलम्' 'दध्नि सर्पि'रिति, 'गङ्गायां गाव' 'कूपे गर्गकुलम्' इत्यत्र न स्यात्। कारकसंज्ञायां तरतमयोगो न भवतीत्यत्राऽपि सिद्धं भवति" इत्युक्तम्। आभ्यामेव च भाष्याभ्यामितरयोर्गौणाधारत्वमप्यावेदितं भवति, भवति च सप्तमीशब्दस्यार्थे गौणाधारयोरपि स्वरितत्वप्रतिज्ञानादिति। एवञ्च यत्र सर्वाऽवयवावच्छेदेन आधेयस्य व्याप्तिः, यथा—'तिलेषु तैलम्' 'दध्नि सर्पि'रिति, समवायेन यदधिकरणमिति यावत्, एतद्व्यापकम्। यत्तु उप समीपे श्लेषः सम्बन्धस्तत्कृतम्, यथा—'इको यणची' त्यादावचीति, तदौपश्लेषिकम्। अत्र अत्सामीप्यमेव इक इति 'संहिताया'मिति सू०े भाष्ये स्पष्टम्। 'तत्रोपश्लिष्टपदाऽध्याहारेण च सप्तमी'त्यपि

सकलावयव व्याप्तौ व्यापकाधारत्वम्, यथा तिलेषु तैलमस्तीत्यादि। उप समीपे श्लेष सम्बन्ध उपश्लेषस्तत्कृतमौपश्लेषिकम्। यथा कटे गावः सन्ति। अत एवेकोयणचीत्यादावौपश्लेषिकाधारे सप्तम्युक्ता संहितायामिति सूत्रे भाष्ये। तत्राजादिसामीप्यमेवेगादीना। यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधिकरणम्। मासिकं धान्यमित्युक्त 'तत्र च दीयते' इति सूत्रे भाष्ये। यत्तु कटे आस्ते इत्यौपश्लेषिकोदाहरणमुक्त तदयुक्त मुक्तभाष्यविरोधात्। एतद्द्वयातिरिक्तवैषयिकमधिकरणम्। कटे आस्ते जले सन्ति मत्स्या इत्यादि। अभिव्यापकातिरिक्त गौणमधिकरणमिति

---

तत्रैव भाष्ये स्पष्टम्। "तत्र च दीयते" इति सूत्रेऽपि भाष्ये—"यन्मासेऽतिक्रान्ते दीयते तस्य स मास अधिकरणम्" इत्युक्तम्। यत्किञ्चिदवयवावच्छेदेनाऽऽधारस्याऽऽधेयेन व्याप्तिरपि उपश्लेषः—श्लेषस्य मुख्यस्य सर्वाधारव्याप्तिरूपस्य समीपं यत् आधारीययत्किञ्चिदवयवव्याप्तिरूपमिति व्युत्पत्ते, तत्कृतमपि औपश्लेषिकम्—यथा 'कटे आस्ते' इति। एवमेव गङ्गैकदेशे तरन्तीषु गोषु, कूपैकदेशस्थिते गर्गकुले 'गङ्गायां गावः' 'कूपे गर्गकुलम्' इत्यादौ बोध्यम्। सामीप्य-संयोगाऽन्यतरसम्बन्धेन अधिकरणं यत् तदौपश्लेषिकमिति तत्त्वम्। यद्यपि उपश्लेषशब्दस्य द्वितीयोऽयमर्थो भाष्यारूढो नास्ति, "संहितायाम्" "तदस्मिन्नधिकम्" "तत्र च दीयते" इति सूत्रत्रयोदाहृतभाष्येषु प्रथमस्यैवाऽर्थस्यसम्मतत्वात्, तथाऽपि 'कटे शेते' इत्यादौ 'कटविषये शेते' इति प्रतीतेरभावेन तथाऽर्थान्तरस्याऽवश्यकल्पनीयत्वम्। अत एव मञ्जूषायाम् स्वीकृतोऽयमर्थः, शेखरेऽपि यद्वेत्यादिना स्वीकृत एव। किन्तु परमलघुमञ्जूषायामत्र कस्मात्तस्य निरादरणमिति मृग्यम्।

यत्तु—सामीप्यसंयोगसमवायैतद्भिन्नसम्बन्धेनाऽधिकरणम् तद् वैषयिकम्। यथा—'खे शकुनयः' इति। अथाऽऽकाशस्य तात्त्विकाऽवयवाऽभावेन कल्पितदेशत्वाद्वैषयिकत्वम्। 'गुरौ वसती'त्यत्रापि गुर्वधीनायां वृत्तौ गुरोर्वैषयिकत्वम्। 'व्यापकाऽऽधारस्यैवाधिकरणता न्याय्या (मुख्या)' इत्यत्र मानन्तु प्रकृत्यर्थताऽवच्छेदकविशिष्टे विभक्त्यर्थाऽन्वयौचित्यमिति। नहि कटैकदेशे कटत्वमस्ति, एकदेश एव चाऽधिकरणत्वस्य भानम्। तस्मादेकदेशगताऽऽधारत्वस्य कटे आरो-

बोध्य सप्तम्यर्थोऽधिकरणमिति दिक् । ज्ञापकक्रियाश्रयवाचकादुत्तरायाः सत्सप्तम्यास्तु क्रियान्तरज्ञापकत्वमित्यर्थ । तत्रानिर्णीतकालिकायाः

---

पेण घोष इति गौण एव स आधार । एवमेव वैषयिकाऽऽधारेऽपि 'खे शकुनय' इत्यादौ खत्वविशिष्टे सकले नाऽधिकरणत्वस्य भानम्, इति तदपि गौणमेव। व्यापकाऽऽधारे तु 'दध्नि सर्पि'रित्यादौ दधित्वविशिष्टेऽधिकरणत्वस्य भानात् आरोपमन्तरेणैवाधिकरणत्वाऽन्वयबोध इति मुख्योऽयमाधारः । गौणाऽऽधारस्याऽपि स्वरितत्वप्रतिज्ञानात्सप्तमी शक्यतैवेति "स्वरितेने" ति सूत्रस्थभाष्ये स्पष्टम् ।

स्यादेतत्—'गङ्गायां घोष' इत्यत्राऽपि सामीप्यमूलकौपश्लेषिकाऽधिकरणत्वस्य सत्त्वेन शक्त्यैवाऽन्वयबोधे सिद्धे कस्माल्लक्षणायां प्रयासस्तत्राऽऽस्थास्यामः ! इति चेत्—नैवम्—अव्यवहितसामीप्यमेवाऽऽधारतानियामकम्, न तु व्यवहितसामीप्यमपीति "संहितायामि"ति सूत्रे भाष्ये ध्वनितम् । तत्र हि—"अयं योग शक्योऽवक्तुम् । 'इको यणचि' इत्युपश्लिष्टस्येति । तत्राऽन्तरेण संहिताग्रहणं संहितायामेव भविष्यति" इत्युक्तम् । अत्र कैयट —"उपश्लेषे चाऽऽश्रिते निर्दिष्टग्रहणमपि न कर्तव्यम्, व्यवहितयोरुपश्लेषाऽभावात्" इत्युक्तम्। भाष्येऽपि वर्णानां परसन्निकर्षरूपसंहिताऽधिकारस्य वैकल्यमुपश्लेषाश्रयणेनैवेति व्याख्यानेन उपश्लेषस्य परसन्निकर्षरूपता सूचितैवेति । एवञ्च व्यवहित सामीप्ये सति 'गङ्गायां घोष' इत्यादौ गङ्गाशब्दस्य तीरे लक्षणाश्रयणमावश्यकमेवेत्यायातम् । तदपि गौणमेवाधारत्वम्, सर्वाऽवयवावच्छेदेन तीरस्य घोषसम्बन्धा भावादित्यलम् ।

"यस्य च भावेन भावलक्षणम्" इत्येतत्सूत्रविहितसप्तम्या अर्थमाह—ज्ञापकक्रियाश्रयेति—यस्य क्रियया क्रियान्तरं लक्ष्यते ततः क्रियान्तरलक्षकक्रियाश्रयवाचकात् सप्तमीति सूत्रार्थः । तद्बलादेव तद्विहितसप्तम्या क्रियान्तरज्ञापकत्वमर्थ इति लभ्यते, तत्र क्रियान्तरस्योपलक्षणविधया प्रवेशेन ज्ञाप्यज्ञापकभावसम्बन्धश्चात्र सप्तम्यर्थ इति निष्कर्ष इति । 'गोषु दुह्यमानासु गत' इत्यादावुभयोरपि पदयोर्ज्ञापकक्रियाश्रयवाचकत्वादुभाभ्यामपि सप्तमी ।

तत्राऽनिर्णीतेति—अयं भाव—निर्ज्ञातदेशकाला क्रिया अनिर्ज्ञातदेशकालक्रियासम्बन्धिदेशकालपरिच्छेदकत्वेन अनिर्ज्ञातदेशकालक्रियाया ज्ञापिका

क्रियाया निर्णीतकालिका ज्ञापिका । गोषु दुह्यमानासु गत इत्यादौ गोनिष्ठ-दोहनक्रियाज्ञापितगमनाश्रयश्चैत्र इति बोधः । कारकप्रातिपदिकार्थव्यति-

भवतीति । एवञ्च नाऽत्र वह्निधूमयोरिव व्याप्तिज्ञानसापेक्षो ज्ञाप्यज्ञापकभावोऽपेक्षित , परिच्छेदकत्वरूपस्यैवाऽत्र ज्ञापकत्वस्य प्रकृतसूत्रे ग्रहणात् । एतेन भूयो दर्शनाश्रयत्वाद्ज्ञाप्यज्ञापकभावस्य, 'उदिते आदित्ये तमो नष्टमि'त्यादावेव स्यान्न तु 'गोषु दुह्यमानासु गत' इत्यत्र कादाचित्कगमनस्थले इत्यपास्तम् । अत्र मूले कालेति देशस्याऽप्युपलक्षणं बोध्यम् । तत्र देशोदाहरणम्—'सति गुणे द्रव्यत्वमस्तीत्यादि । कालोदाहरणम्—'गोषु दुह्यमानासु गत' इत्यादि । दुह्यमानगोज्ञाप्यगमनाश्रय इति शाब्दो बोधः । अत्र गतेः ज्ञापकत्वस्य विशेषणीभूतक्रियाद्वारैव पर्यवसानात्—गोनिष्ठदोहनक्रियाज्ञापितगमनाश्रय इति बोधः फलितो भवति—तदाह—गोनिष्ठेति । इतिबोध इति—फलित इत्यादि । इति सप्तमीवादः ।

अथ शेषषष्ठ्यर्थं निरूपयति—कारकप्रातिपदिकार्थव्यतिरिक्त इति—अत्राऽयं परिष्कारः—"षष्ठी शेषे" इति सूत्रे शेषः उपयुक्तादन्यः । उपयुक्तत्वञ्च पूर्वत्र कारकप्रातिपदिकार्थयोः ? अतस्तद्व्यतिरिक्तः स्वस्वामिभावादि सम्बन्ध एव शेषपदार्थः, तद्वाचिका षष्ठीति सूत्रार्थः । यथा—'राज्ञः पुरुषः' इत्यत्र कर्तृत्वादिशक्तिभ्योऽन्यः प्रातिपदिकार्थाच्चान्यः स्वस्वामिभावो नाम सम्बन्धः । यद्यपि कारकप्रातिपदिकार्थव्यतिरिक्तो नास्त्येवाऽर्थः—'राज्ञः पुरुषः' इत्यत्राऽपि राजा कर्ता पुरुषः सम्प्रदानम्—'राजा पुरुषाय ददातीति' सम्प्रत्ययात्, एवं पुरुषः कर्ता राजा कर्म—'पुरुषो राजानं सेवते' इति सम्प्रत्ययाच्च । अयात्—राजकर्तृकपुरुषसम्प्रदानकदानमन्तरेण, पुरुषकर्तृकराजकर्मकसेवनमन्तरेण च राजपुरुषयोः स्वस्वामिभावः कथमपि भवितुं नार्हत्येव, सर्वथा सम्बन्धस्य क्रियाकारकभावमूलकत्वात् । एवञ्च सम्बन्धस्यापि कर्तृत्वकर्मत्वादिशक्तिरूपत्वैवेतिचेत्—तथापि सतोऽपि क्रियाकारकभावस्य कर्मत्वादितत्तद्विशेषरूपेणाऽविवक्षायां कर्मत्वादितत्तद्व्यापकसम्बन्धत्वेन रूपेण विवक्षायां स्वस्वामिभावादितत्तद्रूपेण विवक्षायाञ्च स्वस्वामिभावादिर्नाम शेषपदार्थः प्रसिध्यत्येव । तदुक्तं प्रकृतसूत्रे भाष्ये—"कः शेषो नाम ? कर्मादिभ्यो येऽन्येऽर्थाः स शेषः । यद्येवं शेषो न प्रकल्पते, नहि कर्मादिभ्योऽन्येऽर्थाः संभवन्ति । इह तावत्—'राज्ञः पुरुषः'

रिक्तः स्वस्वामिभावादिः सम्बन्धः षष्ठ्या वाच्यः । अत्र राज्ञः पुरुष इत्यादौ षष्ठीवाच्यसम्बन्धस्याश्रयाश्रयिभावसम्बन्धेन पुरुषेऽन्वयः । राजनिरूपितसम्बन्धवान् पुरुष इति बोधात् । ननु सम्बन्धस्योभयनिष्ठत्वात् पुरुषशब्दादपि षष्ठ्युत्पत्तिरस्त्विति चेन्न । राजसम्बन्धिपुरुष इति विवक्षायां राजशब्दादेव षष्ठी । प्रकृत्यर्थप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति

---

इति—राजा कर्ता पुरुषः सम्प्रदानम् । 'वृक्षस्य शाखे'ति—वृक्षः शाखाया अधिकरणम् । तथा यदेतत् स्व नामचतुर्भिरेतत्प्रकारैर्भवति—क्रयणादपहरणाद् याच्ञाया विनिमयाद्दिति । अत्र च सर्वत्र कर्मादयः सन्ति । एव तर्हि कर्मादीनामविवक्षा शेषः । कथं पुनः सतो नामाऽविवक्षा स्यात् ? सतोऽप्यविवक्षा भवति । तद्यथा—"अलोमिकैडका, अनुदरा कन्येति" इति । हरिणाऽप्युक्तम्—

*सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः ।*
*श्रुतायामश्रुतायां वा क्रियायामभिधीयते ॥ इति ।*

अत्र क्रियाकारकभावसम्बन्धः कारणम्, शेषाः सम्बन्धास्तु फलभूताः । अश्रुतायां दानादिक्रियायां उक्तरीत्या 'राज्ञः पुरुषः' इत्यादौ । सम्बन्धबोधकस्य कार्यस्याऽन्यथाऽनुपपत्त्या अनुमितदानादिक्रियानिमित्तकः सम्बन्धस्तत्र । श्रुतायां यथा—'मातुः स्मरती'त्यादौ । अत्र क्रियाकारकभावमूलको विशेष्यविशेषणभावो विषयविषयिभावो वा सम्बन्धः । सिद्धस्वभावानां हि द्रव्याणां क्रियां विना परस्परसम्बन्धाऽभावात् क्रियाकारकभावमूलकत्वं सम्बन्धस्येति युक्तमेव, क्रिया हि निःश्रयणीव सम्बन्धं करोति । एवञ्च सम्बन्धिनोरपि अनुमीयमानक्रियानिमित्तत्वरूपं कारकत्वमस्ति । सामीप्याद्यपि बुद्धिस्थैकदेशाधिकरणकास्थितिक्रियाकर्तृत्वनिमित्तकम् इत्याद्यूह्यम् । अत्र षष्ठी तु न, अनभिधानात् । अत एव 'पर्वतस्य वृक्षा' इति न, पर्वतवृक्षयोः क्रियाकारकभावमूलकसम्बन्धाऽभावात् । आधाराधेयभावमूलकः संयोगस्तयोः सम्बन्ध इति न, विपरीतमाधाराधेयभावस्यैव संयोगमूलकत्वात् । आधाराधेयभावस्य च कारकत्वेन शेषत्वाऽभावात् । न च विनिगमनाविरहात् 'संयोग एव तन्मूलकोऽस्तु' इतिवाच्यम्, 'मेषौ परस्परं संयुक्तौ'-इत्यादावाधाराधेयभावमन्तरेणाऽपि संयोगस्य सद्भावात्तस्य तन्मूलकत्वाऽयोगस्यैव विनिगमकत्वात् । किञ्च संयोगो नहि सम्बन्धः, सम्बन्धस्य [illegible]

व्युत्पत्त्यनुरोधात्। अन्यथा तद्विवक्षाया राजा पुरुषस्येति पुरुषशब्दात् षष्ठया पुरुषार्थं प्रति षष्ठ्यर्थस्य विशेषणत्वापत्त्या व्युत्पत्तिभङ्गापत्ते। अत एवाह—

---

हेतुत्वात्, संयोगस्य च स्वत पदार्थत्वात्, सांसर्गिकविषयतया तस्याऽभानाच्च। सम्बन्धो हि सांसर्गिकविषयतया षष्ठयादिभिर्बोध्यते, सम्बन्धपदेनाऽपि सांसर्गिक विषयतावत्त्वेन बोध्यते, इति सम्बन्ध सर्वथा पदाऽगम्य। संयोगस्तु न कदापि सांसर्गिकविषयतयोच्यते, 'संयोगेनेमौ विशिष्टा'वितिव्यवहाराऽभावात् 'इमौ संयुक्ता'वि'त्येव व्यवहारात्, अत्र च व्यवहारे प्रकारतयैव तस्य भानात्। संयोगे सम्बन्धत्वव्यवहारस्तु उभयाश्रितत्वरूपसम्बन्धीयधर्मवत्त्वाद्गौण। अत एव मतुप्सूत्रे 'वृक्षवान्पर्वत' इत्याद्यर्थं सप्तम्युपादानम् 'गोमान् देवदत्त' इत्याद्यर्थञ्च षष्ठ्युपादानमिति भाष्य उक्तम्—"नैतयोरावश्यक समावेश, भवन्ति देवदत्तस्यगावो न च तास्तस्मिन्नाश्रिता भवन्ति। भवन्ति च पर्वते वृक्षा न च ते तस्य भवन्ति, तस्मादस्याऽस्मिन्ग्रहणम्" इति। एतेन—'संयोग सम्बन्ध' इति नैयायिकोक्तमपास्तम्। षष्ठयर्थश्च सांसर्गिकविषयतयैव भासते—'स्वस्वामिभावसम्बन्धेन राजविशिष्ट पुरुष' इति बोधात्। अत एव "षष्ठी शेष" इति सूत्रे भाष्ये—"राज्ञ पुरुष इत्यत्र राजा विशेषण पुरुषो विशेष्य" इत्युक्तम्, अन्यथा सम्बन्ध विशेष्यतया विशेषण तया वा ब्रूयात्। 'राज्ञ पुरुष' इत्यत्र स्वस्वामिभाव षष्ठ्यर्थ, स च स्वत्वस्वामित्वसमूहरूप। यत्तु स्वामित्व स्वत्व वा षष्ठ्यर्थ इति, तन्न, तस्यैकमात्रवृत्तितया सम्बन्धत्वाऽयोगात्। सम्बन्धो हि सम्बन्धिद्वयभिन्नो द्विष्ठश्च। न च तदप्येकत्राऽऽश्रयतया, परत्रनिरूपकतयाऽस्त्येवेतिवाच्यम्, निरूपकत्वस्य वृत्त्यनियामकत्वयोभयत्र सम्बन्धवत्त्वप्रतीत्यनापत्ते। सम्बन्धस्य द्विष्ठत्वञ्च—"यस्मादधिकमि"तिसूत्रे भाष्ये स्पष्टम्। तत्र हि—"अधिब्रह्मदत्ते पञ्चाला' इत्यत्र "यस्मादधिक" मित्यनेन ब्रह्मदत्ते सप्तम्यां पञ्चालाद्द्वितीया प्राप्नोति, अधेर्योत्यस्य ब्रह्मदत्तनिष्ठस्य सम्बन्धस्य सप्तम्योक्तत्वेऽपि तद्द्योत्यपञ्चालनिष्ठसम्बन्धस्य तयाऽसम्प्रत्ययात्" इत्युक्तम्। उपपदविभक्तेरिति न्यायेन समाहितमित्यन्यदेतत्। विशेष्यपदात्षष्ठीवारणयुक्त्याऽपि तद्वारण बोध्यम्। अत एव स्वस्वामिभावोऽवयवाऽवयविभाव इत्यादिर्व्यवहार। सर्वैकदेशाऽवच्छेदेन विशेष्यविशेषणोभयनिष्ठ इतिबोध्यम्।

भेद्यभेदकयोश्चैकसम्बन्धोऽन्योन्यमिष्यते ।
द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात् ॥ इति ।

---

स च सम्बन्धः स्वस्वामिभावत्वादितत्तद्रूपेण सम्बन्धत्वेन रूपेण च षष्ठ्यर्थः। आद्यम्—अनेकसम्बन्धसत्त्वेऽपि सम्बन्धविशेषतात्पर्येण 'चैत्रस्य नेदं वासः' इत्यादौ। अन्त्यन्तु—'देवदत्तस्य पाणिपुत्रकम्बलानि' इत्यादौ। सम्बन्धरूपेण बोधादेव—"एकशतं षष्ठ्यर्थाः श्राया, मौना, मौला, स्रौवाश्चेति" "षष्ठी स्थाने" इति सूत्रे भाष्यं सङ्गच्छते ।

नन्वेवं 'राज्ञः पुरुषः' इत्यत्र पुरुषपदादपि षष्ठी स्यादिति चेन्न—भेदे सति, विशेषणतया, विवक्षितस्य सम्बन्धं विना विशेषणत्वाऽसम्भवेन तन्नियामकत्वेनाऽऽकाङ्क्षितत्वात् विशेषणे सम्बन्ध उद्भूत, इति तद्वाचकादेव सम्बन्धार्थिका षष्ठी। विशेष्यस्य तु पदार्थाऽन्तरनिरूपितसम्बन्धमन्तरेणाऽपि स्वप्रवृत्तिनिमित्तनिरूपितविशेष्यत्वस्य भानमिति न विशेष्यतानियामकसम्बन्धाऽऽकाङ्क्षेति तत्र सम्बन्धस्य बहिरङ्गत्वेन अन्तरङ्गत्वात्प्रातिपदिकार्थमात्रवाचिका प्रथमैव भवतीति स्वीकारात्। तदुक्तं प्रकृतसूत्रे भाष्ये—"यथैव तर्हि राजनि स्वकृतं स्वामित्वं तत्र षष्ठी भवत्येवं पुरुषेऽपि स्वामिकृतं स्वत्वं, तत्र षष्ठी प्राप्नोति। राजशब्दादुत्पद्यमानया षष्ठ्याऽभिहितः सोऽर्थ इति कृत्वा पुरुषशब्दात्षष्ठी न भविष्यति" इति। तस्योक्त एवाशयः। हरिणाऽपि—

*"द्विष्ठोऽप्यसौ परार्थत्वाद्गुणेषु व्यतिरिच्यते ।*
*तत्राऽभिधीयमानश्च प्रधानेऽप्युपयुज्यते ॥"*

इत्युक्तम्। परार्थत्वात् = परंप्रति विशेषणत्वेन विवक्षितत्वादित्यर्थः। व्यतिरिच्यते उद्भूततया प्रतीयत इत्यर्थः। प्रधाने तस्यान्वयोगश्च तत्सम्बन्धाऽवच्छिन्नगुणनिष्ठप्रकारतानिरूपितविशेष्यतया भानमिति बोध्यम्। अत्र मूले विशेष्यात्षष्ठीवारणन्तु प्रकारतया भानमहीत्स्य प्राचामनुरोधादिति ध्येयम्।

संयोग इवाऽभेदोऽपि सम्बन्धो नास्त्येव, तस्य सम्बन्धत्वे मानाऽभावात्, सम्बन्धस्य द्विष्ठत्वात्। अत एव 'आद्यन्तवत्सूत्रे 'राहोः शिरः' इत्यादौ षष्ठ्युत्पादनाय व्यपदेशिवद्भाव इति भाष्य उक्तम्। किञ्च तस्य सम्बन्धत्वे 'नीलः पटः' इत्यादौ षष्ठ्याऽऽपत्तिः 'भेदसम्बन्ध एव षष्ठी'त्यस्य सूत्रतोऽलाभात्। नाऽऽ

भेदक सम्बन्धनिरूपको, भेद्य सम्बन्धाश्रयः । इति षट्कारकाणि ॥
अथ नामार्थ । अत्र मीमासका —शब्दाना जातौ शक्तिर्लाघवात् ।

---

काङ्क्षालभ्य स इति वाच्यम् , वाक्ये विशेष्यविशेषणभावाऽतिरिक्तस्याऽऽकाङ्क्षा लभ्यत्वाऽभावात् । एवञ्च 'वीर पुरुष' इत्यादौ पदद्वयोपस्थाप्ययस्योरेकत्वेन सम्बन्धाऽभावेऽपि विशेष्यविशेषणभावो बोध्य । अत एव प्रतिपादिकार्थसूत्रे 'विशेष्यविशेषणभावस्याऽधिकस्य प्रतीत्या प्रथमा न प्राप्नोती' त्याशङ्क्य यद् घाऽधिकं स वाक्यार्थ इति समाहितम् । तस्मात् विशेष्यविशेषणभावो द्वेधा— द्वयार्थर्मिणो सम्बन्धेन वैकत्वेन वेति बोध्यम् । तस्मा'दभेदान्वय' इत्यस्याऽ'भेदेऽप्यन्वयो विशेष्यविशेषणभाव ( विशेषणविशेष्यभाव ) इत्येवार्थो नत्वभेदसंसर्गको बोध' इति । किञ्च वीरत्वपुरुषत्वोभयसमूहवान् 'वीरः पुरुष' इति बोध । अत एव कर्मधारयविषये द्वन्द्वाऽपादानं भाष्ये शङ्कितम् 'चार्थे द्वन्द्व' इति सूत्रे इत्यलम् ।

अत्रेदमपि बोद्धव्यम्—कर्मविहितद्वितीयादीना कर्मत्वशक्तिमानर्थ , क्रियाकारकभाव ( क्रियाकर्मभाव ) सम्बन्धश्चार्थ —"राज्ञ पुरुष' इत्यत्र राजपुरुषयो सम्बन्धस्य षष्ठी वाचिका, 'कष्ट श्रित' इत्यत्र क्रियाकारकयो सम्बन्धस्य द्वितीया वाचिका" इति समर्थसूत्रस्थभाष्यात् । एवञ्च — हरिं भजती'त्यादौ हर्यभिन्न कर्मत्वशक्तिमद्विशिष्ट क्रियाकारकभावसम्बन्धेन भजनमिति ( हर्यभिन्नकर्मत्वशक्तिमन्निष्ठक्रियाकारकभावसम्बन्धाऽवच्छिन्नप्रकारतानिरूपितविशेष्यताशालिभजन - मिति ) रीत्या बोध । कर्तृतृतीयाया कर्तृत्वशक्तिमान् कर्तृक्रियाभावसम्बन्धश्चार्थ । करणतृतीयायाः करणत्वशक्तिमान् क्रियाकरणभावसम्बन्धश्चार्थ । सम्प्रदानचतुर्थ्या सम्प्रदानत्वशक्तिमान् क्रियाकारकभावसम्बन्धश्चार्थ । एवमन्यत्राऽप्यूह्यम् । प्रथमा यास्तु सूत्रमते प्रातिपदिकार्थ एवाऽर्थः, वार्तिकमते उक्तत्वेच्छक्तिमान् क्रियाकारकभावसम्बन्धश्च तदर्थ । उपकार्योपकारकभावसम्बन्धश्च तादर्थ्यचतुर्थ्यर्थ । ज्ञाप्यज्ञापकभाव सम्बन्धश्च सतिसप्तम्या अर्थ इत्यलम् । इति कारकवाद ।

कारकवादे कारकविहितसुपामर्थाना निरूपणादनन्तरं सुबुद्देश्यत्वेन स्मृतस्य नाम्नोऽर्थाना प्रसङ्गसङ्गत्या निरूपणारम्भ प्रतिजानीते—अथ नामार्थ इति । निराकरणार्थं मीमांसकमतमनुवदति—अत्र मीमासका इत्यादिना । जातावितिजातिरिति प्रवृत्तिनिमित्तोपलक्षणम् । तेन गौ , शुक्ल , चलो, डित्थ इत्येतेषां

भेद्यभेदकयोश्चैकसम्बन्धोऽन्योन्यमिष्यते ।
द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात् ॥ इति ।

---

स च सम्बन्धः स्वस्वामिभावत्वादितद्रूपेण सम्बन्धत्वेन रूपेण च षष्ठीशक्यः । आद्यम्—अनेकसम्बन्धसत्त्वेऽपि सम्बन्धविशेषतात्पर्येण 'चैत्रस्य नेत्रं वास' इत्यादौ । अन्त्यन्तु—देवदत्तस्य पाणिपुत्रकमलानि' इत्यादौ । तद्रूपेण बोधादेव—"एकशतं षष्ठ्यर्था आर्या, मौना, मौखा, स्रौवाश्चेति" "षष्ठी स्थाने" इति सूत्रे भाष्यं सङ्गच्छते ।

नन्वेवं 'राज्ञः पुरुषः' इत्यत्र पुरुषपदादपि षष्ठी स्यादिति चेन्न—भेदे सति विशेषणतया विवक्षितस्य सम्बन्धं विना विशेषणत्वाऽसम्भवेन तन्नियामकत्वेनाऽऽकाङ्क्षितत्वात् विशेषणे सम्बन्ध उद्भूत, इति तद्वाचकादेव सम्बन्धार्थिका षष्ठी । विशेष्यस्य तु पदार्थाऽन्तरनिरूपितसम्बन्धमन्तरेणाऽपि स्वप्रवृत्तिनिमित्तनिरूपितविशेष्यत्वस्य भानमिति न विशेष्यतानियामकसम्बन्धाऽऽकाङ्क्षेति तत्र सम्बन्धस्य बहिरङ्गत्वेन अन्तरङ्गत्वात्प्रातिपदिकार्थवाचिका प्रथमैव भवतीति स्वीकारात् । तदुक्तं प्रकृतसूत्रे भाष्ये—"यथैव तर्हि राजनि स्वकृतं स्वामित्वं तत्र षष्ठी भवत्येवं पुरुषेऽपि स्वामिकृतं स्वत्वं, तत्र षष्ठी प्राप्नोति । राजार्थस्तद्गुणस्य मानतया षष्ठ्याऽभिहितः सोऽर्थ इति कृत्वा पुरुषशब्दात्षष्ठी न भविष्यति" इति । तस्योक्त एवाशयः । हरिणाऽपि—

*"द्विष्ठोऽप्यसौ परार्थत्वाद्गुणेषु व्यतिरिच्यते ।*
*तत्राऽभिधीयमानश्च प्रधानेऽप्युपयुज्यते ॥"*

इत्युक्तम् । परार्थत्वात्—परम्प्रति विशेषणत्वेन विवक्षितत्वादित्यर्थः । व्यतिरिच्यते उद्भूततया प्रतीयत इत्यर्थः । प्रधाने तस्योपयोगश्च तत्सम्बन्धाऽवच्छिन्नगुणनिष्ठप्रकारतानिरूपितविशेष्यताया भानमिति बोध्यम् । अत्र मूले विशेष्यात्षष्ठीवारणन्तु प्रकारतया भानमङ्गीकृत्य प्राचामनुरोधादिति ध्येयम् ।

संयोग इवाऽभेदोऽपि सम्बन्धो नास्त्येव, तस्य सम्बन्धत्वे मानाऽभावात्, सम्बन्धस्य द्विष्ठत्वात् । अत एव 'आद्यन्तवत्सूत्रे 'राहोः शिरः' इत्यादौ षष्ठ्युपपादनाय व्यपदेशिवद्भाव इति भाष्य उक्तम् । किञ्च तस्य सम्बन्धत्वे 'नीलो घटः' इत्यादौ षष्ठ्याऽऽपत्तिः 'भेदसम्बन्ध एव षष्ठी'त्यर्थस्य सूत्रतोऽलाभात् । नचाऽऽ

भेदक सम्बन्धनिरूपको, भेद्य सम्बन्धाश्रय । इति षट्कारकाणि ॥
अथ नामार्थ । अत्र मीमांसका —शब्दाना जातौ शक्तिर्लाघवात् ।

---

काङ्क्षालभ्य स इति वाच्यम् , वाक्ये विशेष्यविशेषणभावाऽतिरिक्तस्याऽऽकाङ्क्षालभ्यत्वाऽभावात् । एवञ्च 'वीर. पुरुष' इत्यादौ पदद्वयोपस्थाप्यव्यक्त्योरेकत्वेन सम्बन्धाऽभावेऽपि विशेष्यविशेषणभावो बोध्य । अत एव प्रतिपादिकार्थसूत्रे 'विशेष्यविशेषणभावस्याऽधिकस्य प्रतीत्या प्रथमा न प्राप्नोती' त्याशङ्क्य यद् श्चाऽधिक स वाक्यार्थ इति समाहितम् । तस्मात् विशेष्यविशेषणभावो द्वेधा— द्वयोर्धर्मिणो सम्बन्धेन ऐकत्वेन वेति बोध्यम् । तस्मा'दभेदान्वय' इत्यस्याऽ'भेदेऽप्यन्वयो विशेष्यविशेषणभाव ( विशेषणविशेष्यभाव ) इत्येवार्थो नत्वभेदसंसर्गको बोध' इति । किञ्च वीरत्वपुरुषत्वोभयसमूहवान् 'वीरः पुरुष' इति बोध । अत एव कर्मधारयविषये द्वन्द्वाऽपादानं भाष्ये शङ्कितम् 'चार्थे द्वन्द्व' इति सूत्रे इत्यलम् ।

अत्रेदमपि बोद्धव्यम्—कर्मविहितद्वितीयादीना कर्मत्वशक्तिमानर्थ , क्रियाकारकभाव ( क्रियाकर्मभाव ) सम्बन्धश्चार्थ —''राज पुरुष' इत्यत्र राजपुरुषयो सम्बन्धस्य षष्ठी वाचिका, 'कष्ट श्रित' इत्यत्र क्रियाकारकयो सम्बन्धस्य द्वितीया वाचिका'' इति समर्थसूत्रस्थभाष्यात् । एवञ्च— हरिं भजती'त्यादौ हर्यभिन्नकर्मत्वशक्तिमद्विशिष्ट क्रियाकारकभावसम्बन्धेन भजनमिति ( हर्यभिन्नकर्मत्वशक्तिमन्निष्ठक्रियाकारकभावसम्बन्धाऽवच्छिन्नप्रकारतानिरूपितविशेष्यताशालिभजनमिति ) रीत्या बोध । कर्तृतृतीयाया कर्तृत्वशक्तिमान् कर्तृक्रियाभावसम्बन्धश्चार्थ । करणतृतीयायाः करणत्वशक्तिमान् क्रियाकरणभावसम्बन्धश्चार्थ । सम्प्रदानचतुर्थ्या सम्प्रदानत्वशक्तिमान् क्रियाकारकभावसम्बन्धश्चार्थं । एवमन्यत्राऽप्यूह्यम् । प्रथमायास्तु सूत्रमते प्रातिपदिकार्थ एवाऽर्थः, वार्तिकमते उक्तत्वच्छक्तिमान् क्रियाकारकभावसम्बन्धश्च तदर्थं । उपकार्योपकारकभावसम्बन्धश्च तादर्थ्यचतुर्थ्यर्थं । ज्ञाप्यज्ञापकभाव सम्बन्धश्च सतिसप्तम्या अर्थं इत्यलम् । इति कारकवाद ।

कारकवादे कारकविहितसुपामर्थानां निरूपणादनन्तर सुबुद्देश्यत्वेन स्मृतस्य नाम्नोऽर्थाना प्रसङ्गसङ्गत्या निरूपणारम्भ प्रतिजानीते—अथ नामार्थ इति । निराकरणार्थं मीमांसकमतमनुवदति—अत्र मीमासका इत्यादिना । जाताविति—जातिरिति प्रवृत्तिनिमित्तोपलक्षणम् । तेन गौ , शुक्ल , चलो, डित्थ इत्येतेषां

व्यक्तीनामानन्त्येन तत्र शक्तौ गौरवात्। "नागृहीतविशेषणा बुद्धिर्विशेष्ये उपजायते" इति न्यायस्य विशेषणे शक्तिर्विशेष्ये लक्षणेति तात्पर्यात्। किञ्च एकस्या व्यक्तौ शक्त्युपदेशे व्यक्त्यन्तरे तदभावेन तद्बोधाप्रसङ्गात्। गामानयेत्यादावन्वयानुपपत्त्या तदाश्रयलक्षकत्वेन निर्वाहश्चेत्याहुः। तन्न। गोत्वमस्तीत्यर्थेऽन्वयानुपपत्त्यभावेन गौरस्तीति प्रयोगे व्यक्तिमाना नापत्तेः। व्यक्तीनामानन्त्येऽपि शक्यतावच्छेदकजातेरुपलक्षणत्वेन तदैक्येन

---

जातिगुणक्रियासञ्ज्ञानिरूपितशक्तिमत्त्वं सिद्धयति। गौरवादिति—अनन्तशक्ति कल्पनापत्तेरित्यर्थः। ननु नागृहीतविशेषणेतिन्यायेन विशेषणविशेष्ययोर्जाति व्यक्त्योरुभयोरपि शक्तिरावश्यकीत्यत आह—नागृहीतेति। विशेषणे शक्ति रिति—विशिष्टज्ञानं प्रति विशेषणज्ञानस्य कारणत्वेनान्तरङ्गत्वात् विशेषण एव शक्तिरितिभावः। तदुक्तम्—'विशेष्यं नाऽभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति। ननु एकस्यां व्यक्तावेव शक्त्युपदेशो गौरवं नास्तीत्यत आह—किञ्चेति। तद्बोधाऽप्रसङ्गादिति—तद्विषयकशाब्दबोधं प्रति तद्विषयकशक्तिग्रहस्य कारणत्व मित्युक्तत्वात्, अन्यथा गवादिपदादश्वादेरपि बोधापत्तेरितिभावः। मीमांसकमतं निराकरोति—तन्नेति। अन्वयाऽनुपपत्त्यभावेनेति—अन्वयानुपपत्तेरेव तन्मते लक्षणाबीजत्वात् व्यक्तौ लक्षणाऽनापत्तिरिति भावः। जातेरुपलक्षणत्वेनेति— एतदेव जात्यादेरुपलक्षणत्वम् यत् स्वाऽऽश्रयाणां सर्वेषां स्वरूपतः शक्तिग्रह विषयत्वं संपाद्य स्वयं शक्तिग्रहाऽविषयो बोधाऽविषयश्च भवतीति। यथा— 'यः शुक्लवासाः स देवदत्तः' इत्यादौ शुक्लवाससोपलक्षिते शक्तिग्रहेऽपि देव दत्तपदजन्यबोधे न तद्भानम्, तथा जात्यादेरपि न भानम्। यथा वा—'काक वन्तो देवदत्तस्य गृहाः' इत्यादौ काकः स्वोपलक्षितान् देवदत्तस्य गृहानितरेभ्यो व्यावर्तयति तथा जातिरपि स्वाश्रयव्यक्तीरितराभ्यो व्यावर्तयतीति। उपलक्षण त्वञ्च—स्ववृत्तिप्रतियोगि समानाधिकरणविभिन्नकालिकाऽभावप्रतियोगित्वमिति। स्वम् उपलक्षणीयं ग्राह्यम्। यथा 'काकवन्तो गृहाः' इत्यत्र स्व = गृहा, तद्वृत्ति प्रतियोगिसमानाधिकरणविभिन्नकालिकोऽभावः—'अन्यदा काको नास्ती'ति, तत्प्रतियोगित्वं काकस्येति काकः उपलक्षणम्। प्रकृते स्व = व्यक्तिः, तद्वृत्ति प्रतियोगिसमानाधिकरणो विभिन्नकालिकोऽभावः—व्यक्तिपदं स्वविषयकबोध

च तादृशजात्युपलक्षितव्यक्तौ शक्तिस्वीकारेणानन्तशक्तिकल्पनाविरहेण गौरवात्। लक्ष्यतावच्छेदकतीरत्वादिवत् शक्यतावच्छेदकस्यावाच्यत्वे दोषाभावात्। नागृहीतेति न्यायस्य विशेषणविशिष्टविशेष्यबोधे तात्पर्येऽपि त्वदुक्ततात्पर्ये मानाभावात्। जात्येकोपलक्षकत्वेन तदाश्रयसकलव्यक्तिबोधेन व्यक्त्यन्तरबोधाप्रसङ्गभङ्गाच्च। तदाह—

आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम्।
शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति॥ इति।

---

विषयत्वसम्बन्धेन जात्यादिर्नास्तीति, तत्प्रतियोगित्वं जात्यादेरिति समन्वयः। अनित्यविद्यमानत्वे सति व्यावर्तकत्वमुपलक्षणत्वं, नित्यविद्यमानत्वे सति व्यावर्तकत्वं विशेषणत्वमिति च फलितं भवति। अनन्तशक्तिकल्पनाविरहेणेति—जात्युपलक्षितव्यक्तौ शक्तिस्वीकारे एकयैव शक्त्या जात्युपलक्षितानां सकलव्यक्तीनां बोधस्य सम्भवादिति भावः। ननु जातेः शक्यतावच्छेदकत्वे तस्या अपि वाच्यत्वमावश्यकमित्यत आह—लक्ष्यतावच्छेदकतीरत्वेति। उक्तरीत्योपलक्षणविधया
५ शक्यतावच्छेदकत्वे शक्तिग्रहविषयत्वं नावश्यकमिति भावः। त्वदुक्ततात्पर्ये इति—विशेषणे शक्तिर्विशेष्ये लक्षणेति शक्तिलक्षणाप्रवेशांशे मानाभावः, तत्र न्याये बुद्धिपदेन प्रत्यक्षादीनामपि ग्रहणात्तत्र शक्तिलक्षणयोरसम्भवादिति भावः। किञ्चैकस्यां व्यक्तावित्यादिना यदुक्तं तन्निराकरोति—जात्येकोपलक्षकत्वेनेति। तदाश्रयसकलव्यक्तीति—नहि एकस्यामेव कस्याञ्चिद्व्यक्तौ शक्तिः स्वीक्रियते, किन्तु जात्युपलक्षितासु यावतीष्वेव व्यक्तिषु एकैव शक्तिः कल्प्यत इति भावः।

तदाहेति—अस्य हरिरिति शेषः। आनन्त्येऽपीति—भावानाम् = व्यक्ती-
१ नाम् आनन्त्येऽपि (व्यक्तौ पदार्थे अनन्तव्यक्तिनिरूपिताऽनन्तव्यक्तिकल्पनापत्तिर्नास्ति, न वा सकलव्यक्तिबोधकैकशक्तिस्वीकारे व्यक्तीनामानन्त्यात् शक्तिग्रहाऽशक्यत्वम्, यस्मात्) एकं = प्रवृत्तिनिमित्तात्मकं जात्यादिरूपमनुगतधर्मम् उपलक्षणं परिचायकं कृत्वा = स्वीकृत्य (तादृशैकधर्मोपलक्षितासु यावतीष्वेव व्यक्तिषु परिचायकधर्मस्यैक्यात्, परिचायकधर्मज्ञानद्वारेण) शब्दो गौरित्यादिः सुकरसम्बन्धः सुग्रहवाच्यवाचकभावसम्बन्धात्मकशक्तिः (भविष्यति। प्रवृत्तिनिमित्ताऽवच्छिन्न

युक्त ह्येतत् ।

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

---

निरूपितैकशक्तिस्वीकारे अवच्छेदकस्य प्रवृत्तिनिमित्तस्यैक्येन अनन्तानामपि व्यक्तीनामेकप्रवृत्तिनिमित्ताश्रयीभूतानामेकप्रवृत्तिनिमित्तस्य ज्ञानद्वारा ज्ञानस्य सम्भवेन अनन्तास्वपि व्यक्तिषु शब्दस्यैकस्या एव शक्तेर्ज्ञानं सुलभमेव भविष्यतीति यावत् । एवञ्च शब्दः समास्वपि व्यक्तिषूपलक्षणीभूतप्रवृत्तिनिमित्तज्ञानद्वारेण सुग्रहशक्तिकत्वात् शक्तिग्रहतो ) न च व्यभिचरिष्यति = न च पृथग्भूत्वा चरिष्यति = बोधयिष्यतीत्यर्थः । अत्राऽयं परिष्कार —सहचारो हि द्विविध —अन्वय सहचारो व्यतिरेकसहचारश्च । कारणसत्त्वे कार्यसत्त्वमन्वयसहचार । कारणाऽभावे कार्याऽभावो व्यतिरेकसहचार । सहचारभङ्ग एव च व्यभिचार । एवञ्च व्यभिचारोऽपि द्विविध —अन्वयव्यभिचारो व्यतिरेकव्यभिचारश्चेति । शाब्दबोध प्रति शक्तिज्ञानस्य कारणत्वात्—यत्र यत्र विषयतासम्बन्धेन शक्तिग्रह तत्र तत्र स्वजन्य बोधीयविषयतासम्बन्धेन शाब्द , यत्र यत्र च तेन सम्बन्धेन शक्तिग्रहाऽभावस्तत्र तत्र तेन सम्बन्धेन शाब्दाऽभाव इति शक्तिग्रहशाब्दयो सहचारो फलत । यदि च प्रवृत्तिनिमित्तस्योपलक्षणत्वमनादृत्यैव सकलव्यक्तिषु एका शक्ति स्वीक्रियेत शब्दस्य । अनन्तव्यक्तिषु च शक्तिज्ञानाऽसम्भवेन शक्तिग्रहाऽविषयीभूतव्यक्तेरपि बोधश्चाङ्गीक्रियते तर्हि शक्तिग्रहाऽभावसत्त्वेऽपि उक्तसम्बन्धेन शाब्दाऽभावस्याऽसत्त्वात् शब्दे व्यतिरेकसहचारस्य भङ्गरूपो व्यतिरेकव्यभिचार स्फुट एव स्यात् । किन्तु एव नास्ति यत प्रवृत्तिनिमित्तस्योपलक्षणत्वमादृत्य तदवच्छिन्नासु सकलास्वेव व्यक्तिषु शक्तिग्रहस्य विद्यमानत्वमेवास्ति न च कुत्रचिदभावो यथोक्त सम्बन्धेन शब्दस्य स्थितिरस्तीति नाऽत्र शब्दो व्यभिचारी भवतीत्यलम् ।

युक्त ह्येतत् इति—एतत् = व्यक्तेर्वाच्यत्वम् हीतिनिश्चयेन युक्तमित्यर्थः । ननु कस्मादेतद्युक्तम् ? इत्यत आह—शक्तिग्रहमिति—व्याकरणाच्छक्तिग्रहो यथा—पचति, पाचक इत्यादौ । आद्ये 'ल कर्मणि च भावे चाकर्मकेभ्य ' इत्यनेन प्रत्ययस्य 'डुपचष् पाके' इत्यनेन च प्रकृते शक्तिग्रह । अन्त्ये च 'कर्तरि कृत्' इत्यनेन प्रत्ययस्य 'डुपचष्पाके' इत्यनेन च प्रकृते स । उपमानात्

इत्येतेषु शक्तिग्राहकशिरोमणिर्व्यवहारो व्यक्तावेव शक्तिं ग्राहयति

'गौरिव गवय' इति वाक्यात् गवयपदस्य शक्तिग्रह । कोशात्—'अमरा निर्जरा देवा' इत्यादितोऽमरादिपदानां शक्तिग्रह । आप्तवाक्यात् 'लक्ष्यलक्षणे व्याकरणम्' इत्यादितो व्याकरणादिपदानां शक्तिग्रह । आप्तत्वञ्च—तदर्थविषयक यथार्थज्ञानवत्त्वम् । व्यवहारात्=प्रयोज्यप्रयोजकवृद्धव्यवहारात्—'घटमानये'त्यादिवाक्यानां तद्घटकपदानाञ्च शक्तिग्रह । यथा—प्रयोजकवृद्धेन प्रयोज्यवृद्धमुद्दिश्य—'घटमानय' इत्युक्ते घटमानयन्तं प्रयोज्यवृद्ध पश्यता बालेन—'अस्य प्रयोज्यवृद्धस्य चेष्टा घटाऽऽनयनविषयकप्रवृत्तिजन्या चेष्टात्वात्, मदीयस्तन्यपानात्मकचेष्टावत्' इति चेष्टाकारणीभूता तदीयप्रवृत्तिरनुमीयते । तत —'अस्य प्रयोज्यवृद्धस्य प्रवृत्ति —घटानयनविषयकेच्छाजन्या प्रवृत्तित्वात्, मदीयस्तन्यपानविषयकप्रवृत्तिवत्' इति प्रवृत्तिकारणीभूतामिच्छामनुमिनोति । तत —'अस्य प्रयोज्यवृद्धस्येच्छा—'घटानयन मदिष्टसाधनम्' इतीष्टसाधनताज्ञानजन्या इच्छात्वात्, मदीयेच्छावत्' इतीच्छाकारणीभूतमिष्टसाधनत्वप्रकारकज्ञानमनुमिनोति, तत —'अस्य मध्यमवृद्धस्य घटानयनविषयकेष्टसाधनताज्ञान 'घटमानये'ति प्रयोजकवृद्धप्रयुक्तवाक्यजन्य तदन्वयव्यतिरेकसहचारित्वात्, यो हि यदन्वयव्यतिरेकसहचारी स तज्जन्यो यथा दण्डान्वयव्यतिरेकसहचारी घटो दण्डजन्य' इति वाक्यमेव तत्कारणत्वेनानुमिनोति । एव रीत्या 'घटमानये'ति वाक्यस्य 'घटानयन मदिष्टसाधनम्' इत्यर्थे तादृशव्यवहारात् शक्तिग्रहो भवति । तत आवापोद्वापाभ्यां पदादिष्वपि तत्तदर्थविषयकशक्तिग्रहो जायते इति । वाक्यस्य शेषात्—'यवैर्जुहोती'त्यत्र यवपदस्य दीर्घशूकविशिष्टे आर्याणा प्रयोगात् कङ्गौ म्लेच्छानां प्रयोगात् क्व शक्तिरितिसन्देहे—'यत्राऽन्या ओषधयो म्लायन्ते अथैते मोदमानास्तिष्ठन्ति" इति वाक्यशेषेण दीर्घशूकविशिष्टे तन्निर्णय (तच्छक्तिग्रह)। विवरणस्य शक्तिग्राहकत्व यथा—'पाक करोति', 'पाकानुकूला भावना' इत्यादि विवरणेन पचतीत्यस्य शक्तिग्रह इति । सिद्धपदस्य प्रसिद्धार्थकपदस्य—'इह सहकारतरौ मधुरं पिको रौति' इत्यादौ सहकार इत्यादेः सन्निधानात्—पिकादिपदानां कोकिलादौ शक्तिग्रह इति ।

शक्तिग्राहकशिरोमणिरिति—व्यवहारस्य शक्तिग्राहकशिरोमणित्वञ्च—

गवादिपदेन लोके व्यक्तेरेव बोधात्।

वस्तुतस्तु "न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः" इति सरूप सूत्रभाष्याद्विशिष्टमेव वाच्यं तथैवानुभवात्। अनुभवसिद्धस्यापलापा नर्हत्वाच्च।

लिङ्गमपि नामार्थः। प्रत्ययानां द्योतकत्वात्। अन्यथा यागुपानद्

बालानामाद्यबोधकालिकत्वेनान्तरङ्गत्वमूलकमित्युक्तं प्राक्। इतिसरूपसूत्रभाष्यादिति—इत्यादिसरूपसूत्रभाष्यादित्यर्थः। एवं हि तत्र भाष्यम्—"नह्याकृतिपदार्थकस्य द्रव्यं न पदार्थो, द्रव्यपदार्थकस्य वा आकृतिर्न पदार्थः, उभयोरुभय पदार्थः। कस्यचित्तु किञ्चित्प्रधानभूतं किञ्चिद्गुणभूतम्। आकृतिपदार्थकस्याऽऽकृतिः प्रधानभूता, द्रव्यं गुणभूतम्। द्रव्यपदार्थकस्य द्रव्यं प्रधानभूतमाकृतिर्गुणभूता" इति। एतेन 'विशिष्टमेव वाच्यमि'त्युत्तरग्रन्थाऽसङ्गतिः, "नह्याकृति पदार्थकस्य द्रव्यं न पदार्थः" इति भाष्येण आकृतिद्रव्ययोर्वाच्यतायालाभेऽपि तयोर्वैऽशिष्टयस्याऽलाभादिति परास्तम्, "किञ्चित्प्रधानभूतम् किञ्चिद्गुणभूतम्" इति भाष्यशेषेण तयोर्वैशिष्टयस्य स्फुटमेव लाभात्।

विशिष्टमिति—आकृतिविशिष्टं द्रव्यम्, द्रव्यविशिष्टाऽऽकृतिर्वेत्यर्थः। मूले च सामान्ये नपुंसकम्। तत्र आकृतेः प्राधान्ये—'ब्राह्मणो न हन्तव्यः' 'सुरा न पेया' इति एकत्वं स्वरसत उपपन्नं भवति। अत्र द्रव्यद्वारकः क्रियान्वय इति कैयटः। द्रव्यप्राधान्ये च— ब्राह्मणो' 'ब्राह्मणौ' 'ब्राह्मणाः' इति लिङ्गवचन योगः स्वरसत उपपन्ना भवति। आकृतिप्राधान्येऽपि द्रव्यसङ्ख्यामादाय द्विवच नाद्युपपत्तिर्बोध्या। तदुक्तं कैयटेन—'यथा—पचति, पचतः, पचन्तीतिक्रिया प्राधान्येऽपि साधनसङ्ख्याकृतो वचनभेदः, एवमाकृतिप्राधान्येऽपि द्रव्यसङ्ख्या कृत इत्यदोषः' इति। तुल्यन्यायात् द्रव्यप्राधान्यवादेऽपि क्वचिदाकृतिसङ्ख्या मादायैकवचनम् 'ब्राह्मणो न हन्तव्य' इति। अधिकन्त्वन्यत्र द्रष्टव्यम्। आकृति प्राधान्यवादी आचार्यो वाजप्यायनः, द्रव्यप्राधान्यवादी च व्याडिरिति "आकृत्य भिधानाद्वैकं विभक्तौ वाजप्यायनः" "द्रव्याभिधानं व्याडिः"रित्यादिवार्तिकभा ष्याभ्यां लभ्यत इत्यलम्।

लिङ्गमपि नामार्थ इति—लिङ्गं प्रकृतेः परिणामविशेषः। तच्च त्रिविधम्—

दिशब्देभ्य इव सर्व वागिति स्त्रीत्वबोधानापत्ते । अयमिति व्यवहारविषयत्व पुंस्त्वम्, इयमितिव्यवहारविषयत्व स्त्रीत्वम्, इदमितिव्यवहारविषयत्वं क्लीबत्वमिति विलक्षण शास्त्रीय स्त्रीपुन्नपुंसकत्वम्। अत एव

---

पुंस्त्व, स्त्रीत्व, नपुंसकत्वञ्चेति । अस्य नामार्थत्वे "ह्रस्वो नपुंसके प्रातिपदिकस्य" "स्वमोर्नपुंसकात्" "रात्सस्य पुंसि" इत्याद्यष्टाध्यायीसूत्राणि, लिङ्गानुशासन सूत्राणि, नामलिङ्गानुशासनात्मका कोशाश्च लिङ्गानि । अत एव च वागादि शब्दानां लिङ्गबोधकत्वोपपत्ति । रमादिशब्देष्वपि प्रत्ययानां द्योतकत्वमेव, वाचकत्व तु 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयो प्रत्ययार्थस्य प्राधान्यमि'ति तस्य प्राधान्यापत्तिरित्यलम् ।

इति विलक्षण शास्त्रीयमिति--अत्राऽय परिष्कार —

"स्तनकेशवती स्त्रीस्याल्लोमश पुरुष स्मृत ।
उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥"

इति हि लौकिक लिङ्ग "स्त्रियामिति"सूत्रे वार्तिककृतोक्तम् । अत्र स्तनकेशौ भगस्योपलक्षणम्, अथवा केशशब्दो भगवाचक एव 'कामस्य केशसूत्रिन्य' इत्यत्र तथा दर्शनात् । लोमशब्दस्तु शिश्नपर्याय । अन्तरशब्दश्च सदृशवाची । तथा च—भगवत्त्व स्त्रीत्वम्, शिश्नवत्त्व पुंस्त्वम्, भगशिश्नाऽन्यतराऽभाववत्त्वे सति स्त्रीपुंससदृशत्व नपुंसकत्वमिति लक्षणम । तृतीये—मयूरीकुक्कुटादिद्वन्द्ववाच्यस्य स्त्रीपुंससमुदायस्य नपुंसकत्ववारणाय सत्यन्तम्, अन्यथा भवति हि समुदाय समुदायिन सदृश इति स्यान्नपुंसकत्वम्। अव्ययार्थस्याताद्यर्थस्य नपुंसकत्ववारणाय स्त्रीपुंससदृशत्वमिति । सादृश्यञ्च—भगशिश्नाऽन्यतराकृतिचिह्नवत्त्वेन । वार्तिके यद्यपि लिङ्गिनो लक्षण तथापि तद्द्वारा लिङ्गलक्षणमेव तात्पर्यविषयीभूतमितिबोध्यम् ।

नन्विद लक्षण खट्वावृक्षतटादिष्वव्याप्तमितिचेत्—अत्र "स्त्रिया" मितिसूत्रे भाष्यवार्तिककृत –"तस्मान्न वैयाकरणैं शक्य लौकिक लिङ्गमास्थातुम् । अवश्यञ्च कश्चित्स्वकृतान्त आस्थेय । कोऽसौ स्वकृतान्त ? 'संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्तत' संस्त्यानं ( तिरोभाव ) स्त्री, प्रवृत्तिश्च ( आविर्भाव ) पुमान्। कस्य पुन संस्त्यान स्त्री ? प्रवृत्तिर्वा पुमान् ? गुणानाम्। केषाम्?

शब्दस्पर्शरूपरसगन्धानाम्। सर्वाश्च पुनर्मूर्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः शब्दस्पर्शरूपरसगन्धवत्यः। प्रवृत्तिः खल्वपि नित्या। नहीह कश्चिदपि स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते, वर्द्धते वा यावदनेन वर्धितव्यम्, अपायेन वा युज्यते। तच्चोभयं सर्वत्र। यद्युभयं सर्वत्र कुतो व्यवस्था? 'विवक्षातः'। संस्त्यानविवक्षायां स्त्री, प्रसवविवक्षायां पुमान्। उभय (योर) विवक्षायां नपुंसकम्" इत्याहुः। अत्र भाष्ये संस्त्यानप्रसवाभ्यां तृतीयमपि साम्याऽवस्थात्मकं स्थितिरूपं बद्ध्यते। स्वकृतान्तेत्युक्त्वा सांख्यशास्त्रीयगुणानां शब्दादीनां निदर्शनेन 'साङ्ख्यशास्त्राऽनुसारित्वं व्याकरणस्य' इति सूच्यते। सर्वस्य जगतः सुखदुःखमोहाऽन्वयात्कल्पितानि 'सत्त्वरजस्तमांसि' गुणा इति कथ्यन्ते साङ्ख्ये। एतत्त्रिगुणात्मिका प्रकृतिः महदादिसप्तकेन्द्रियादिषोडशकात्मना परिणमते, पुरुषस्तु न प्रकृतिनाऽपि तद्विकृतिः केवलचैतन्यरूपोऽपरिणामी शुद्ध इति साङ्ख्यसिद्धान्तः। गुणानां परिणामस्याऽपि वस्तुतस्तदात्मकत्वात् शब्दादिना भाष्ये सत्त्वादीनामेव तात्पर्यविषयता बोध्या। 'मूर्तयः' इति मूर्तिशब्देन भाष्ये सविपिंडितत्वेमात्राश्चक्षुर्गोचरा विवक्षिता, तेन वाय्वाकाशतेजसां रसगन्धयोरभावेऽपि नाऽसङ्गतिः। पुंस्त्वादिलिङ्गत्रिकस्य सर्वपदार्थव्यापित्वमाह भाष्ये—"प्रवृत्तिः खल्वपि नित्या" इत्यादिना। अत्र प्रवृत्तिः सत्त्वादीनामाविर्भावादिरूपः परिणामो लिङ्गसामान्यमितियावत्।

तदित्थम्—सत्त्वादिगुणानामाविर्भावः पुंस्त्वम्, तिरोभावः स्त्रीत्वम्, स्थित्यपरपर्यायाऽन्तरालावस्था च नपुंसकत्वमिति सारं फलितम्। तच्चार्थनिष्ठं केवलान्वयि, उक्तभाष्यात्। 'अयं पदार्थः, इयं व्यक्तिः, इदं वस्तु' इति व्यवहारस्य पदार्थमात्रे सत्त्वात्।

पुरुषो यद्यपि अपरिणामी गुणाविर्भावादिपरिहीनः तथापि भोक्तृत्वाऽवस्थायां भोग्यवस्तुशबलित एव प्रतीयते, स एव च शब्दगोचरः, नहि शुद्धं परिणामरहितं वस्तु शब्दविषयः, आकाराऽवग्रहेणैव शब्दवाच्यत्वात्। एतेन पुरुषे परिणामाऽनभ्युपगमात् कथं 'पुरुषः, चितिः, चैतन्यम्' इति लिङ्गत्रययोग इत्यपास्तम्। तत्र केनचिच्छब्देन किञ्चिद्वस्तु एकैकलिङ्गविशिष्टमेव, केनचिच्छब्देन लिङ्गद्वयविशिष्टम्, केनचित्पर्यायेण लिङ्गत्रयविशिष्टमिति लिङ्गानुशासनादितो निर्णेयम्। तत्र लौकिकलिङ्गाऽसम्भवे शास्त्रीयलिङ्गे कार्यम्, तदसम्भवे तु महासंज्ञाकरणात्

खट्वादिशब्दवाच्यस्य स्तनकेशभगादिमत्त्वरूपलौकिकस्त्रीत्वाभावेऽपि तद्वाचकाट्टायादिप्रत्ययः।

सङ्ख्याऽपि नामार्थः। विभक्तीनां द्योतकत्वात्। अत एव "आदिर्ञिटुडवः" इति सूत्रे बहुत्वे एकवचनम्। वाच्यत्वेऽन्वयव्यतिरेकाभ्यां जस् विना नामार्थबहुत्वप्रतीत्यभावापत्तेः।

कारकमपि प्रातिपदिकार्थ इति पञ्चकं प्रातिपदिकार्थः। नन्वन्वयव्यतिरेकाभ्यां प्रत्ययस्यैव तद्वाच्यमिति चेन्न। दधि तिष्ठति, दधि पश्येत्यादौ कर्त्रादिकारकप्रतीतेः प्रत्ययं विनापि सिद्धत्वात्। न च लुप्तप्रत्ययस्मरणात्तत्प्रतीतिरिति वाच्यम्। प्रत्ययलोपमजानतोऽपि नामत एव तत्प्रतीतेः। विशेषणतया शब्दोऽपि शाब्दबोधे भासते। युधिष्ठिर आसीदित्यादौ युधिष्ठिरशब्दवाच्यः कश्चिदासीदिति बोधात्।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ इत्यभियुक्तोक्तेः।

---

तद्विशिष्ट एव शास्त्रीयलिङ्गे कार्यम्। अत एव 'पशुना यजेत' इत्यत्र लौकिकपुंस्त्वविशिष्टशास्त्रीयपुंस्त्ववता यागो विधीयते, न तु पशुस्त्रिया शास्त्रीयपुंस्त्वविशिष्टयाऽपीत्यलम्।

सङ्ख्याऽपि नामार्थ इति—राम रामावित्यादौ सङ्ख्याबोधस्याऽनुभवसिद्धत्वादिति भावः। ननु अन्वयव्यतिरेकाभ्यां विभक्तेरेव तद्बोधजनकत्वमितिचेत्, न 'दधिमधु'इत्यादौ विभक्तिं विनाऽपि तत्प्रतीतेः। न च लुप्तविभक्तिस्मरणात्तत्प्रतीतिरितिवाच्यम् विभक्तिलोपमजानतोऽपि नामत एव तत्प्रतीतेः। ननु तर्हि 'द्व्येकयोर्द्विवचनैकवचने' इत्यादिसूत्राणां का गतिरितिचेत् न, सङ्ख्याद्योतकत्वेन तेषामुपपत्तेः। तदाह—विभक्तीनां द्योतकत्वादिति। आदिर्ञिटुडव' इति' इतिसूत्रे आदिरिति निर्देशोऽप्यत्रार्थेऽनुकूलः। तदाह—अत एवेति।

पञ्चकमिति—जातिव्यक्तिलिङ्गसङ्ख्याकारकाणीत्यर्थः।

"एकं द्विकं त्रिकञ्चाऽथ, चतुष्कं पञ्चकं तथा।
नामार्थ इतिसर्वेऽमी पक्षाः शास्त्रे निरूपिता॥"

इत्यपि केषाञ्चिद्भणितिरत्र।

न सोऽस्तीति—यः प्रत्ययो ज्ञानं शब्दाऽनुगमात् शब्दभानात् ऋते=

ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा ।
तथैव सर्वशब्दानामेते पृथगवस्थिते ॥
विषयत्वमनादृत्य शब्दैर्नार्थः प्रकाश्यते ॥ इति वाक्यपदीयाच ।

अत एव विष्णुमुच्चारयेत्यादावर्थोच्चारणासम्भवाच्छब्दप्रतीतिः । अत एवानुकरणेनानुकार्य्यस्वरूपप्रतीतिः । तथा हि—स्वसदृशशब्दमात्रबोधतात्पर्यकोच्चारणविषयत्वमनुकरणत्वम् । स्वसदृशशब्दप्रतिपाद्यत्वे सति शब्दत्वमनुकार्यत्वम् । तत्रानुकार्यादनुकरणं भिद्यत इति तयोर्भेदविवक्षायामनुकार्य्यस्वरूपप्रतिपादकत्वेनार्थवत्त्वात् प्रातिपदिकत्वात्स्वादिविधिः । भेदपक्षज्ञापकः "भुवोवुग्लुङ् लिटो" रित्यादिनिर्देशः । अनुकार्यादनुकरणमभिन्नमित्यभेदविवक्षायां चार्थवत्त्वाभावान्न प्रातिपदि

---

विना ( स्यात् ) स प्रत्ययो लोके नास्त्येव, [ वेदेऽपि स्यान्नवा ] (यत) सर्वं=प्रत्यक्षानुमित्युपमितिशब्दजन्यात्मकं ज्ञानं शब्देन अनुविद्धमिव नीरक्षीरन्यायेन संभिन्नमिव भासते = अनुव्यवसीयमानं भवति [ प्रत्यक्षानुमित्योरपि मूकबधिरयोरपि आन्तरस्फोटसम्भिन्नत्वस्य सत्त्वान्नासङ्गतिः सर्वज्ञानानुवेधनादेव च शब्दस्य ब्रह्मरूपत्वमप्युपपद्यत इति द्रष्टव्यम् ] इत्यर्थः । ग्राह्यत्वमिति—यथा प्रदीपः स्वं प्रकाशयन्नेव परप्रकाशको भवति, तथैव सर्वे शब्दाः स्वपरप्रकाशका भवन्ति इति भावार्थः । पृथगवस्थित इत्यनेन शब्देऽर्थे च शक्तिर्नां लाघवात् एकैव शक्तिरिति सूचितम् । घोषस्तु आकाङ्क्षया विशिष्ट एवेति 'विशेषणतया भावत' इति नाऽसङ्गतम् । विषयत्वमिति—शब्दे स्वविषयत्वमनादृत्य स्वरूपमानमकृत्वा अर्थो न प्रकाश्यते । शाब्दबोधस्यार्थोऽपि विषयः स्वरूपमपि विषय इत्यर्थः ।

अनुकार्यादनुकरणं भिद्यत इति—अत्र प्रमाणम्—"मतौ छः" इतिसूत्रस्य भाष्यम् । तत्र हि—अस्यवामीयमित्यत्र 'अस्यवामस्ये'ति पदसमूहस्य वेदे पठ्यमानस्यैकदेशानुकरणेऽस्यवामशब्दे छप्रसिद्ध्यर्थम्, तस्य अनुकार्येणाऽर्थेनाऽर्थवत्त्वात्प्रातिपदिकत्वस्य समर्थनाय—"योऽसावाम्नायेऽस्यवामशब्दः पठ्यते, सोऽस्य ( छप्रकृतित्वेन विवक्षितस्यास्यवामशब्दस्य ) पदार्थः । किम्पुनरन्ये आम्नायशब्दा अन्य इमे ? ओमित्याह" इत्युक्तम् । अभिन्नमिति—'ऌलृक्सूत्रे "इदमवश्यकर्त्तव्यम्—प्रकृतिवदनुकरणम् भवतीति । किं प्रयोजनम् ? "द्वि पचन्तु" इत्याह—"तिर

कत्व न वा पदत्वम् । अभेदपक्षज्ञापकस्तु भूसत्तायामित्यादिनिर्देशः । प्रातिपदिकत्वपदत्वाभावेऽपि भू इत्यादि साधु भवत्येव ।

ननु "अपदं न प्रयुञ्जीत" इति भाष्यादसाध्विदमिति चेन्न । अपद मित्यस्य हि अपरिनिष्ठितमित्यर्थः । परिनिष्ठितत्वं च अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वं, देवदत्तो भवतीत्यादौ "तिङ्ङतिङः" इति निघाते जातेऽतिङन्तपदपररूपोद्देश्यतावच्छेदकसत्त्वे अपरिनिष्ठितत्व वारणाय अप्रवृत्तेति । स्वरतीत्यादि विकल्पसूत्रस्य पाक्षिकप्रवृत्तौ सेद्धेत्यादावसाधुत्ववारणाय नित्यविधीति । अभेदपक्षे तु "अर्थवद्" इतिसूत्रस्यार्थवत्स्वरूपोद्देश्यतावच्छेदकानाक्रान्तत्वात्सूत्राप्रवृत्तावपि भू इत्यादि परिनिष्ठितम्, परिनिष्ठितसाधुशब्दौ पर्य्यायौ ।

न त्वनुकरणस्यानुकार्यस्वरूपबोधकत्वस्याप्यभावेन कथमनुकार्यस्व रूपप्रतीतिरितिचेत् सादृश्याख्यसम्बन्धेनेति गृहाण । यथा मैत्रसदृश पिण्डदर्शने मैत्रस्मरणम् । एवं भू इत्याद्यनुकरणज्ञाने तादृशानुकार्यस्य ज्ञानमिति सङ्क्षेपः ।

अथ समासादिवृत्त्यर्थः । वृत्तिर्द्विधा । जहत्स्वार्थाऽजहत्स्वार्था च ।

---

तिङः" इति निघातो यथा स्यात्" इति भाष्ये "प्रकृतिवत्" इत्यनेन लाघवात् सादृश्यमूलकाऽभेदविवक्षायामेव तात्पर्यम्, वचनेन प्रकृतिधर्मारोपतात्पर्यकत्वेगौर वात्" इत्यस्मद्गुरव । साधु भवत्येवेति—शिष्टप्रयोगादिति भाव । सादृश्या ख्यसम्बन्धेनेति—नन्वेवमनुकार्यप्रत्यायकत्वे अर्थवत्त्वमपि स्यादिति प्रातिपदि कत्वाऽऽपत्तिरेवेतिचेन्न, अर्थवत्सूत्रे वृत्त्याऽर्थप्रत्यायकस्यैवाऽर्थवत्त्वाङ्गीकारात् । ननु शाब्दे वृत्तिज्ञानजन्योपस्थितेरेव हेतुत्वस्य व्यवस्थापितत्वादभेदपक्षे सादृश्याख्य-सम्बन्धेनोपस्थितौ अनुकार्यस्य शाब्दत्वाऽनापत्तिरितिचेत् न वृत्तिज्ञानस्य अनु-करणाऽजन्यशाब्दत्वमेव कार्यताऽवच्छेदकम्, अनुकार्यविषयकशाब्दत्वाऽवच्छिन्नं प्रति अनुकरणजन्योपस्थितित्वेन कारणताया विशेषरूपेण स्वीकारादित्याशयात् इत्यलम् । इति नामार्थवाद ।

अथ समासादिवृत्त्यर्थवाद । नामार्थनिरूपणप्रसङ्गात्समासादिवृत्त्यर्थनिरूपण प्रतिजानीते—अथ समासादिवृत्त्यर्थ इति—आदिना कृत्तद्धितैकशेषसनाद्यन्त

अवयवार्थनिरपेक्षत्वे सति समुदायार्थबोधिकात्वं, जहत्स्वार्थात्वम्। अवयवार्थसवलितसमुदायार्थबोधिकात्वमजहत्स्वार्थात्वम्। इयनयोः साम भेदः। शुश्रूषा सेवा इति पूर्वस्योदाहरणम्। राजपुरुष इत्यादावन्त्या।

---

धातुसञ्ज्ञकानां परामर्शः। वृत्तिर्द्विधा जहत्स्वार्थेति—तदुक्तं "समर्थः पदविधि" रितिसूत्रे भाष्ये—"अथ तेषामेव भवतां किं जहत्स्वार्था वृत्तिर्भवति, आहो स्विदजहत्स्वार्था? किं चातः? यदि जहत्स्वार्था वृत्तिः, 'राजपुरुषमानये'त्युक्ते, पुरुषमात्रस्याऽऽनयनं प्राप्नोति, 'औपगवमानये' त्युक्तेऽपत्यमात्रस्य। अथाऽजहत्स्वार्था वृत्तिः उभयोर्विद्यमानस्वार्थयोर्द्वयोर्द्विवचनं प्राप्नोति। का पुनर्वृत्तिर्न्याय्या? जहत्स्वार्था। ननु चोक्तम्—'राजपुरुषमानये'त्युक्ते पुरुषमात्रस्याऽऽनयनं प्राप्नोति, 'औपगवमानये'त्युक्तेऽपत्यमात्रस्येति? नैष दोषः, जहदप्यसौ स्वार्थं नात्यन्ताय जहाति, यः परार्थविरोधी स्वार्थस्तं जहाति। अथवा पुनरस्तु अजहत्स्वार्था वृत्तिः। ननु चोक्तम्—उभयोर्विद्यमानस्वार्थयोर्द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोतीति? कस्याः पुनर्द्विवचनं प्राप्नोति? प्रथमायाः। न प्रथमासमर्थो राजा। षष्ठ्यास्तर्हि प्राप्नोति, न षष्ठीसमर्थं पुरुषः। प्रथमायास्तर्हि प्राप्नोति। ननु चोक्तम्—न प्रथमासमर्थो राजेति? अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः। तत्र "प्रातिपदिकार्थे प्रथमे"तिप्रथमाया एव द्विवचनं प्राप्नोति। 'संघातस्यैकत्वा त्साऽवयवसङ्ख्यातः सुबुत्पत्ति'। संघातस्यैकत्वमर्थं, तेनाऽवयवसङ्ख्याव सुबुत्पत्तिर्न भविष्यति।" इति। 'ईदूतौ चे'ति सूत्रेऽपि—अथ क्रियमाणेऽ प्यर्थग्रहणे कस्मादेवात्र न भवति? जहत्स्वार्था वृत्तिरिति। अथाऽजहत्स्वार्थायां वृत्तौ दोष एव? अजहत्स्वार्थायाञ्च न दोषः, समुदायाऽर्थोऽभिधीयते" इत्युक्तम्। तत्र 'जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था' इति विवरणं भूषणसारे। 'जहति (शत्रन्तप्रयोगः) स्वानि—वृत्तिघटकीभूतपदानि यः सः जहत्स्वः, स आहो ऽर्थो यस्या'मिति समानाधिकरणपदकोऽपि बहुव्रीहिः संभवतीति परे। पूर्वत्र विवरणे "सप्तमी विशेषणे" इति सूत्रे सप्तमीग्रहणाज्ज्ञापकाद्व्यधिकरणपदको बहुव्रीहिरितिबोध्यम्, क्रमेण द्वयोर्लक्षणमाह—अवयवार्थेति। इति पूर्वस्या उदाहरणमिति—"यः परार्थविरोधीस्वार्थस्तं जहाति" इत्युक्तभाष्येण जहत्स्वार्था यास्तादृश एव विषयो लभ्यत इति बोध्यम्।

समासादिवृत्तिषु विशिष्ट एव शक्तिर्नावयवे रथन्तरम्, सप्तपर्णं, शुश्रूषेत्यादौ अवयवार्थानुभवाऽभावात् । अत एव भाष्ये व्यपेक्षापक्ष मुद्भाव्य "अथैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेष [redacted] वक्तव्य" इत्युक्तम् । धवखदिरौ, निष्कौशाम्बि, गोरथो, घृतघटो, गुडधाना, केशचूड, सुवर्णालङ्कारो, द्विदशा, सप्तपर्ण इत्यादौ साहित्य क्रीत युक्त पूर्ण मिश्र सङ्घात विकार सुप्प्रत्ययलोप वीप्साद्यर्था वाचनिका एव वाच्या इति तद्भाष्याशय ॥

---

विशिष्ट एव शक्तिरिति—समाससञ्ज्ञके समुदाये, कृदन्ते, तद्धितान्ते, एक शेषे, सनाद्यन्तधातुसञ्ज्ञके समुदाये एव शक्तिपर्याप्तिरित्यर्थं —"समर्थ पद-विधि"रिति सूत्रेण एकार्थीभावात्मकसामर्थ्यस्य विशिष्ट एव बोधनादिति भाव । विशिष्ट एवेत्येवकारेण व्यवच्छेद्यमाह—नत्ववयव इति ।

'विशिष्ट एव शक्तिर्नत्ववयवे' इत्यत्र प्रतीत्यभावमपि प्रमाणयति—अव यवार्थानुभवाऽभावादिति । अवयवे रथन्तरमित्यादिना रथकरणकतरणकर्त्रा-द्यर्थस्य बोध स्यादेव तु नास्ति, तस्मान्नाऽवयवे शक्तिरिति भाव । अत्र भाष्य मपि प्रमाणमित्याह—अत एव भाष्य इति । भाष्याशयमाह—धवखदिरा वित्यादि । वाचनिका एव वाच्या इति—तथा च तत्तदर्थबोधक-तत्तद्वचनानां कर्तव्यत्वे महागौरवम्, एकार्थीभावे तु धत्वाऽवच्छिन्ने घट पदस्येव साहित्याद्यवच्छिन्न एव धवखदिरादिपदानां "समर्थ पदविधि" रिति सूत्रेण शक्तिबोधनमिति लाघवम् । अयमेव एकार्थीभावकृतो विशेषो भाष्योक्त इति भाव । एकार्थीभावकृत इति—एकार्थीभावश्च विशेष्यविशेषणभावापन्ना र्थोपस्थितिजनकत्वमिति विशेषरकृत । यत्किञ्चित्पदजन्यपृथगुपस्थितिविषयार्थकत्वेन लोके दृष्टानां शब्दानां विशिष्टविषयैकशक्त्यैवोपस्थितिजनकत्वमेकार्थीभाव । घट इत्यादौ वारणाय दृष्टानामित्यन्तम् । औपगवादौ प्रत्ययानां यथा दृष्टत्वाऽ भावेनोपस्थितौ यत्किञ्चित्पदजन्यत्वेति विशेषणम् । अपत्यरूपार्थस्योपगोरपत्य मित्यादौ तथा दर्शनसत्त्वात्तत्त्वम् । विभक्त्यर्थस्य तु न तथात्वम्, तद्वाच्याय वाचकस्य शब्दान्तरस्याऽभावादिति मञ्जूषाकृत ।

यत्तु व्यपेक्षावादिनो नैयायिकमीमांसकाद्य—न समासे शक्तिः।

---

ननु पूर्वत्र लक्षणे घट इत्यादावतिव्याप्तिः, उत्तरत्र तु लोमगम्भाद्यंशुलाव च्छिन्नवाचकपशुपदेऽतिव्याप्तिरितिचेत्—न, शक्तिविशिष्टत्वमेकार्थीभाव इति स्वीकारात्। वै० च—स्वपर्याप्त्यधिकरणघटितत्वम्, स्वनिरूपकेतरनिरूपितशक्ति पर्याप्त्यधिकरणघटितत्वम्, स्वज्ञानप्रयोज्यज्ञानविषयीभूतशक्तिपर्याप्त्यधिकरण त्वमित्येतत्त्रितयसम्बन्धेन। अन्यसम्बन्धाऽभावेन रथन्तरादिषु तु नाऽव्याप्तिः, तादृशार्थे तेषां रूढत्वस्वीकारात् घटपदादिवत्। तादृशार्थे सामविशेषादौ रथन्तरादिशब्दानां रूढत्वस्वीकारेणाऽन्यसम्बन्धाऽभावकृता तेष्वव्याप्तिरिति न वाच्यम्, 'रथेन तरती'ति विग्रहदर्शनात् सामविशेषनिरूपितशक्तिज्ञाने रथपदे तरपदनिष्ठशक्तिज्ञाननिरूपितप्रयोज्यत्वस्यारोपाद् त्वसम्बन्धस्य सत्त्वादिति भावः।

एवम्—एकशेषे रामावित्यादौ व्यपदेशिवद्भावेन स्वपर्याप्त्यधिकरणघटितत्व, स्वनिरूपकेतरव्यक्तिनिरूपितशक्तिपर्याप्त्यधिकरणघटितत्व बोध्यम्।

राजपुरुष इत्यत्र स्व विशिष्टार्थघटकनिरूपिता शक्तिः राजत्वाऽवच्छिन्ननि रूपिता तत्पर्याप्त्यधिकरणराजपदघटितत्वस्य, स्वनिरूपको राजरूपोऽर्थस्तदितर पुरुषरूपाऽर्थः, तन्निरूपितशक्तिपर्याप्त्यधिकरणपुरुषपदघटितत्वस्य, राजत्वाऽव च्छिन्ननिरूपितशक्तिज्ञानप्रयोज्य राजसम्बन्धिभिन्नपुरुषत्वाऽवच्छिन्ननिरूपितशक्ति ज्ञान, तद्विषयीभूतशक्तिपर्याप्त्यधिकरणत्वस्य च 'राजपुरुष' इति समुदाये सत्त्वा ल्लक्षणसमन्वयः। अन्यसम्बन्धेन घटादिपदे वाक्ये च नाऽतिव्याप्तिः। वाक्य शक्तिनये वाक्ये, वाक्यैकदेशस्य वाक्यार्थे शक्तिरिति नये 'दधि मुद्गम्' इत्यर्थे 'दधि' इत्यत्र चाऽतिव्याप्तिरिति न वाच्यम्, अन्यसम्बन्धघटकस्वज्ञानप्रयोज्यज्ञान विषयीभूताया शक्तेरारोपिताया एव ग्रहणेनाऽदोषात्। एकार्थीभावेत्यत्र विनि वेशेनारोपितस्यैवैकार्थत्वस्य वृत्तौ वृत्तिप्रयोजकतत्तत्सूत्रारम्भसामर्थ्येन स्वीकारात्। वाक्ये वाक्यैकदेशे च वास्तविकशक्तेः सत्त्वादित्यलमित्यस्मद्गुरुचरणाः। "संयुक्ता ऽर्थं समर्थम्" इतिसमर्थसूत्रस्य भाष्य तादृशैकार्थीभावस्वीकारे मानमितिद्रष्टव्यम्।

प्रतिवादिमतं निराकरणार्थमनुवदति—यत्तु इति। व्यपेक्षावादिन इति—

राजपुरुष इत्यादौ राजपदादे सम्बन्धिनि लक्षणयैव राजसम्बन्धवदभिन्न पुरुष इति बोधात्। अत एव राज्ञ पदार्थैकदेशत्वान्न तत्र ऋद्धस्येत्यादि विशेषणान्वय। 'पदार्थ पदार्थेनान्वेति नतु पदार्थैकदेशेन' इत्युक्ते। 'सविशेषणाना वृत्तिर्न वृत्तस्य च विशेषणयोगो न' इत्युक्तेश्च। न वा घन श्यामो, सिंहो माणवक, गौरथ इत्यादावपि वादिप्रयोगापत्ति। लक्षणयैवो क्तार्थतया 'उक्तार्थानामप्रयोग' इति न्यायेन इवादीनामप्रयोगात्। नापि "विभाषा" इति सूत्रमावश्यकम्, लक्षणया राजसम्बन्ध्यभिन्न इति बुबोध यिषाया समासस्य, राजसम्बन्धवानिति बुबोधयिषाया विग्रहस्य च प्रयोगनियमसम्भवात्। नापि शक्ति, पङ्कजशब्दवदितिपङ्कजशब्दप्रति द्वन्द्विता शक्तिसाधिका तत्रावयवशक्तिमजानतोऽपि ततो बोधात्।

न च शक्त्यग्रहे लक्षणया तस्माद्विशिष्टार्थप्रत्यय सम्भवति। अत एव राजपदादिशक्त्यग्रहे राजपुरुष इत्यादिषु न बोधः। न च चित्रगुरित्यादौ लक्षणासम्भवेऽप्यपष्ठपर्थबहुव्रीहौ लक्षणाया असम्भव,

---

व्यपेक्षा च—पृथगुपस्थिताना पदार्थानामाकाङ्क्षावशात्परस्पर य सम्बन्धः स। यथा—वाक्ये। एकार्थीभावश्च वृत्ताविति तयोर्भेद। नैयायिकादीनां मते तूभयत्राऽपि व्यपेक्षैवेतिबोध्यम्। अतएवेति—राजपदादे राजसम्बन्धिनि लक्षणासत्त्वादेवे त्यर्थ। पदार्थ=पदजन्यप्रतीतिविशेष्य, पदार्थेन=पदजन्यप्रतीतिविशेष्येने त्यर्थ। घटत्वाऽन्वयतात्पर्येण 'नित्यो घट' इति प्रयोगो नेति तद्व्युत्पत्ते फलम्। सविशेषणानामिति वृत्तस्येति च वार्तिकद्वय समर्थसूत्र भाष्ये व्याख्यातम्। लक्ष णयैवेति—घनश्यामादौ घनादिशब्दस्य घनसादृश्याद्यर्थे लक्षणयैवेत्यर्थ। राज सम्बन्ध्यभिन्न इति बुबोधयिषायामिति—अभेदसम्बन्धेन राजसम्बन्धवत्प्रकारत्वेन बोधनेच्छायामित्यर्थ। राजसम्बन्धवानिति बुबोधयिषाया मिति—आश्रयत्वसम्बन्धेन राजसम्बन्धस्य पुरुषे प्रकारतया बोधनेच्छायामित्यर्थ। प्रतिद्वन्द्विता=दृष्टान्तता। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमित्याशयेनाह—तत्राऽवयवेति। राजपुरुषादिपदे चावयवशक्तिग्रहाधीना लक्षणाग्रह इत्याह—न चेति-शक्यसम्बन्धरूपलक्षणायां शक्तिग्रहस्य कारणत्वादिति भाव। चित्रगुरित्यादौ लक्षणासम्भवेऽपीति—चित्राऽभिन्ना गौरिति शक्त्युपस्थाप्ययोरन्वयबोधोत्तर

बहुव्र्युत्पत्तिभञ्जनापत्तेरितिवाच्यम् । प्राप्तोदक इत्यादौ उदकपदे एव लक्षणास्वीकारात् । पूर्वपदस्य यौगिकत्वे तत्र लक्षणाया धातुप्रत्यय तदर्थज्ञानसाध्यतया विलम्बितत्वात् । प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोध

---

तादृशगोस्वामी गोपदेन लक्ष्यते । गोपदस्य चित्रपदस्य वा विनिगमनाविरहेण लक्षकत्वाऽसम्भव इति न वाच्यम्, गोपदार्थे साक्षात्सम्बन्धस्यैव विनिगमकत्वात् 'स्वबोध्यसम्बन्धो लक्षणे'ति मते तु समूहस्यैव लक्षकत्वमिति लक्षणामभ्युपगम्य । अपष्ठ्यर्थबहुव्रीहाविति—प्राप्तोदक इत्यादौ । बहुव्र्युत्पत्तिभञ्जनापत्तेरिति—अपष्ठ्यर्थबहुव्रीहौ 'प्राप्तोदक' इत्यादौ पृथक्शक्त्यादिना भवे प्राप्तिकर्तृभिन्नमुदकमित्यादिबोधोत्तरं तत्सम्बन्धिग्रामलक्षणायामपि उदककर्तृकप्राप्तिकर्म ग्राम इत्यर्थाऽलाभे प्राप्ते 'प्राप्ते'ति क्तप्रत्ययस्य कर्त्रर्थकस्य कर्मार्थे लक्षणायामपि समानाधिकरणनामार्थयोरभेद एव संसर्ग इति व्युत्पत्तेरुदकाऽऽभिन्न प्राप्तिकर्मेति-बाध स्यात् । उदकस्य प्राप्तौ कर्तृतयाऽन्वय तु नामार्थयोरभेदान्वय इति व्युत्पत्ति-भञ्जन स्यात्, प्राप्तेर्धात्वर्थतया तत्रोदकस्य कर्तृतासम्बन्धेन भेदेनान्वये नामार्थधात्वर्थयो साक्षाद्भेदेनाऽन्वयोऽव्युत्पन्न' इति व्युत्पत्तेश्च भङ्गापत्ति अन्यथा देवदत्तेन पच्यत इत्यर्थे 'देवदत्त पच्यते' इत्यपि स्यात्कर्तृतासम्बन्धेन पाके देवदत्त स्यान्वयसम्भवात् । अत एव च तण्डुलं पचतीत्यर्थे तण्डुल पचतीतिप्रयोगो न । अन्यथा कर्मत्वेन पाकेऽन्वयापत्ते । अस्या अपि व्युत्पत्तेस्तदेव फलम् । नामार्थप्रकारकशाब्दबोधं प्रति विभक्तिजन्योपस्थिते कारणत्वमिति व्युत्पत्तिभञ्जनञ्च स्यादित्यर्थ । उदकपद एव लक्षणेति—प्राप्तोदक इत्यादौ उदकपदे एव उदकत्वेन लक्षणाया शीघ्रोपस्थितिकत्वरूपादिविनिगमकात् उदककर्तृकप्राप्तिकर्म इत्यर्थे लक्षणा, प्राप्तपदं तु तात्पर्यग्राहकमिति भाव । उदकपद एव लक्षणेऽपरं विनिगमकमाह—पूर्वपदस्येति । ननु व्युत्पत्तिभङ्ग उदकपदस्याऽपि यौगिकत्व तुल्यमत आह—प्रत्ययानामिति ।

न चैवं घटादिपदेष्वपि चरमवर्ण एव वाचकताकल्पना स्यात्, पूर्वपूर्ववर्णानां तात्पर्यग्राहकत्वेनोपयोगसम्भवात्, प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्व व्युत्पत्त्यनुरोधादिति चेत्, नैवम्—घटादिपदे व्यवहारादिना समुदाय एव शक्तिग्रहात् प्रत्येकवर्णे पर्याप्त्या बोधकत्व नास्ति, समासे च प्रत्येकपदे पर्याप्त्या बोध

बोधकत्वव्युत्पत्त्यनुरोधाच्च । घटादिपदे चातिरिक्ता शक्तिः कल्प्यमाना प्रत्येकं वर्णेषु बोधकत्वेऽपि विशिष्टे कल्प्यते, विशिष्टस्यैव सङ्केतितत्वात् । प्रकृते चात्यन्तसन्निधानेन प्रत्ययाचयसौलभ्यायोत्तरपदे एव लक्षणा कल्प्यत इति विशेषः । स्वीकृतं च घटादिपदेष्वपि चरमवर्णस्यैव वाचकत्वं मीमांसकम्मन्यैरित्याहुः । अत्रोच्यते—समासे शक्त्यस्वीकारे विशिष्टस्यार्थवत्त्वाभावेन प्रातिपदिकत्वं न स्यात् । अत एवार्थवत्सूत्रे भाष्ये "अथर्वदिति किम्, अर्थवता समुदायोऽनर्थकः दशदाडिमानि षडपूपाः कुण्डमजाजिनम्" इति प्रत्युदाहृतम् । एवं च राजपुरुषपदयोस्त्वन्मते प्रत्येकमर्थवत्त्वेऽपि समुदायस्य दशदाडिमादिवदनर्थकत्वात्प्रातिपदि-

---

कत्वमस्तीति विशेषस्त्वस्य तुल्य इत्याह—घटादिपदे चेति । अतिरिक्ता शक्तिरिति—व्युत्पत्तिपक्षाश्रितघटपदघटकधातुप्रत्ययनिष्ठशक्त्यतिरिक्तेत्यर्थः । प्रत्येकं वर्णेषु बोधकत्वेऽपीति—अन्वयव्यतिरेकाभ्यां प्रत्येकवर्णानां बोधकत्वाभ्युपगमेऽपीत्यर्थः । विशिष्टे=विशिष्ट एवेत्यर्थः । विशिष्टस्यैव=समुदायस्यैव, सङ्केतितत्वात्=कोशव्यवहारादिना सङ्केतितत्वेन बोधनात्, कोशव्यवहारादिना विशिष्ट एव शक्तिग्रहादिति यावत् । अत्र भूषणसारे अपेक्षावादिनैयायिकमीमांसकमतोद्धरणेऽयं पाठभेदः—"घटादिपदे चाऽतिरिक्ता शक्तिः कल्प्यमाना विशिष्टे कल्प्यते, विशिष्टस्यैव सङ्केतितत्वात्, बोधकत्वस्याऽपि प्रत्येकवर्णेष्वसत्वात्" इति । अत्र पाठे बोधकत्वस्याऽपि बोधकतापर्याप्तेरपीत्यर्थः । ननु प्रासादकपदेऽपि विशिष्ट एव शक्तिः कल्प्यतामत आह—प्रकृते चात्यन्तेति । कोशादिना विशिष्टप्रासादकपदस्य सङ्केतितत्वेनाऽबोधनान्न प्रासादकपदे विशिष्टे शक्तिकल्पनेति भावः । पूर्वोक्तापत्तिमिष्टापत्त्याऽपि परिहरति—स्वीकृतश्चेति ।

"व्यपदार्थो सामर्थ्ये समास एकाऽसद्गृहीतो भवती"ति भाष्याशय प्रकाशी कुर्वन्नैयायिकादिमतं दूषयति—अत्रोच्यत इति । विशिष्टस्यार्थवत्त्वाऽभावेनेति—विशिष्टस्य अर्थनिरूपितैकवृत्त्याश्रयत्वाभावेनेत्यर्थः । ननु वृत्तिद्वयाश्रयत्वमप्यर्थवत्त्वमस्तु इत्यत आह—अत एवेति । एकवृत्त्याश्रयत्वमर्थवत्त्वमितिस्वीकारादेवेत्यर्थः । दशदाडिमानीति—अत्र समुदाये परस्पराऽऽकाङ्क्षाऽभावेनैकवृत्त्याश्रयत्वरूपाऽर्थवत्त्वाऽभावान्न प्रातिपदिकत्वमितिभावः । अनर्थकत्वात्—एक-

कत्वानापत्ते। न च "कृत्तद्धित" इतिसूत्रे समासग्रहणात् तत्सञ्ज्ञेति वाच्यम्। तस्य नियमार्थताया भाष्यकृतैव प्रतिपादितत्वात्। अन्यथा सिद्धिं विना नियमायोगात्। अत एव राज्ञः पुरुषः देवदत्त पचतीत्यादि वाक्यस्य मूलकेनोपदंशमित्यादेश्च न प्रातिपदिकत्वम्। किंच समासे शक्त्यस्वीकारे शक्यसम्बन्धरूपलक्षणाया अप्यसम्भवेन लाक्षणिकार्थवत्त्वस्याप्यसम्भवेन सर्वथाप्रातिपदिकत्वाभाव एव निश्चित स्यादिति स्याद्यनुत्पत्तौ "अपदं न प्रयुञ्जीत" इति भाष्यात् समस्तप्रयोगविलयापत्ते।

अथ तिप्तसझीत्यत वीत्यारभ्य ङयो सुमिति पकारेण तिप्प्रत्याहारो भाष्यसिद्ध। तत्पर्युदासेन "अतिप्प्रातिपदिकम्"इत्येव सूत्र्यताम्,

वृत्त्यानाश्रयत्वात्। तत्सञ्ज्ञा = समासस्य प्रातिपदिकसंज्ञा। अर्थवत्त्वाऽभावेऽपीति शेषाऽस्य। नियमार्थताया इति—एवञ्च अन्यनिवृत्तिफलकसिद्धविषयकविधित्व रूपनियमत्वाय समासस्यार्थवत्त्वमावश्यकम्। भाष्यकृतैवेति—अर्थवत्समुदायानां समासग्रहणं नियमार्थमिति भाष्योक्तेरितिभाव। ननु नियमस्य किं फलमित्यत आह—अत एवेति। अत एव = समासग्रहणस्य नियमार्थत्वादेव। ननु नैयायिकादिमते वाक्यशक्तेरभावेन राज्ञः पुरुष इत्यादेरर्थवत्त्वाऽभावादेव न प्रातिपदिकत्व मित्यत आह—मूलकेनोपदंशमिति—नैयायिकादिमते उत्तरसूत्रेऽर्थवत्तदाऽ सम्बन्धात्कृद्ग्रहणपरिभाषया विशिष्टस्य कृदन्तत्वदादित्वाद्दोषापत्तिरेवेतिभाव। तद्वारणाय समासग्रहणकृतनियमस्य सार्थक्यम्। वैयाकरणमते तूत्तरसूत्रेऽप्यर्थवत्पदस्य सम्बन्धेऽपि मूलकेनोपदंशमित्यादौ वाक्यशक्तेः स्वीकारेणाऽर्थवत्त्वेऽपि समासग्रहणीयनियमेन दोषवारणं भवतीति। नैयायिकमते राजपुरुषादौ शक्त्यनङ्गीकारेण समासग्रहणस्य सञ्ज्ञाविधायकतया नियमत्वाऽभावे समासादावर्थवत्त्वाऽभावेनोत्तरसूत्रेऽर्थवत्पदस्याऽसम्बन्धे मूलकेनोपदंशमित्यादौ कृद्ग्रहणपरिभाषया दोषः स्यादेवेति निष्कर्ष।

ननु समासे शक्त्यभावेऽपि लक्षणयाऽर्थवत्त्वं स्यादत आह—किञ्चेति। समस्तप्रयोगेति—समाससञ्ज्ञकशब्दप्रयोगेत्यर्थ, समाससंज्ञाया अन्वर्थत्वात्समस्तेति प्रयोग। ननु अर्थवत्त्वाद्यनपेक्षित्वात्सेऽर्थवत्त्वाऽभावेऽपि समासे संज्ञासिद्धि रित्याशयेन शङ्कते—अथेति। भाष्यसिद्ध इति—"अप्रत्यय इतिचेत् तिबेका

वत "समासश्च", इति सूत्र नियमार्थमस्तु किं सूत्रद्वयेनेति। सुप्तिङन्तभिन्न प्रातिपदिकमित्यर्थात् समासस्यापि सा स्यादिति समासश्चेत्यस्य नियमार्थत्व सुलभमिति चेत्सत्यम्। प्रत्येक वर्णेषु सञ्ज्ञावारणायार्थवदित्यस्यावश्यकत्वेन समासेऽव्याप्तिस्तदवस्थैव। तथा च प्रातिपदिकसञ्ज्ञारूपकार्येणार्थवत्त्वमनुमापयति। समासोऽर्थवान्, प्रातिपदिकत्वात्, यन्नार्थवत् तन्न प्रातिपदिकम्, अभेदविवक्षापक्षे भूसत्तायामित्याद्यनुकरणवदिति।

यत्तु "पदार्थ पदार्थेन" इति "वृत्तस्य विशेषणयोगो न" इति वचनद्वयेन ऋद्धस्येत्यादिविशेषणान्वयो न भवति, तत्तु समासे एकार्थीभावे स्वीकृतेऽवयवाना निरर्थकत्वेन विशेषणान्वयासम्भवात् फलितार्थपरमस्माकम् युष्माकं तु अपूर्ववाचनिकमिति गौरवमित्यग्रे वक्ष्यते।

---

देशे प्रतिषेधोऽन्तवत्त्वात्,' अप्रत्यय इतिचेत् तिबेकादेशे प्रतिषेधो वक्तव्य — काण्डे, कुड्ये" त्यत्रवत्सूत्रस्थभाष्यमिह इत्यर्थ। सुप्तिङन्तभिन्नमिति— पूर्वोक्ततिप्प्रत्याहारे सुप्तिङोरन्तर्भूतत्वात् तिबन्तभिन्नमिति वाच्यार्थे सुप्तिङन्तभिन्नमिति फलितार्थो भवतीति भाव। समासस्याऽपीति—समासस्याऽपि तिबन्ततदादिभिन्नत्वात्। तिप प्रत्ययत्वेन 'प्रत्ययग्रहणे यस्मा'दिति परिभाषाया प्रवृत्तेरितिभावः। अर्थवदित्यस्याऽऽवश्यकत्वेनेति—अर्थवदिति विशेषणस्यावश्यकत्वेनेत्यर्थ। ननु सङ्ख्याकर्मादेरभावादेकैकस्माद्वर्णात्सुबुत्पत्तिर्न भविष्यति, औत्सर्गिकमेकवचनमपि गमकसत्त्व एवेति भाष्ये स्पष्टम्, यथाऽव्ययेभ्य सुबुत्पत्त्यावव्ययादाप्सुप इति गमकम्। एवञ्च फलाऽभावात्प्रतिवर्ण प्रातिपदिकसंज्ञाऽपि न भविष्यतीतिचेत्—तथापि 'दशदाडिमानि, षडपूपा' इत्याद्यनन्वितार्थकसमुदायस्य वारणाय 'अर्थवदि'ति विशेषणस्यावश्यकत्वम्, तत्र हि प्रातिपदिकत्वे सति "सुपो धातु"रिति लुक् स्यादिति भाष्यादौ स्पष्टम्। समासग्रहणीयनियमेन तु न वारण कर्तुं शक्यम्, नियमस्य सजातीयापेक्षतया परस्परान्वितार्थकसमुदायस्यैव तेन वारणादितिशेखरे स्पष्टम्। अनुमानस्वरूपमाह—समासोऽर्थवानिति। "निपातस्याऽनर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या" इतिवार्त्तिकेन अनर्थकस्याऽपि निपातस्य संज्ञा भवतीति ज्ञापयेतत्।

व्यपेक्षावादे दूषणान्तरमाह—यत्तु पदार्थ इति। अस्माकम् = एकार्थी

यत्तु प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिरिति, तन्न उपकुम्भम्, अर्द्धपिप्पलीत्यादौ पूर्वपदार्थे विभक्त्यर्थान्वयेन व्यभिचारात्। मम तु प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तौ विशिष्टोत्तरमेव प्रत्ययोत्पत्तेर्विशिष्टस्यैव प्रकृतित्वात् विशिष्टस्यैवार्थवत्त्वाच्च न दोषः। किं च राजपुरुषादौ राजपदादेः सम्बन्धिनि सम्बन्धे वा लक्षणा। नाद्यः। राज्ञः पुरुष इति विवरणविरोधात्। वृत्तिसमानार्थवाक्यस्यैव विग्रहत्वात्। अन्यथा तस्माच्छक्तिनिर्णयो न

---

भाववादिनाम्। युष्माकम्—व्यपेक्षावादिनाम्। गृह्यते इति—बहूनां वृत्तिधर्माणामिति कारिकांशविवरणवेलायामित्यादि।

प्राप्तोदक इत्यादौ उदकपद एव लक्षणायां प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्त्यनुरोध इति नैयायिकादिमतानुसरणे यदुक्तं तत्खण्डयति—यत्तु प्रत्ययानामिति। व्यभिचारादिति—अव्यवहितपूर्वत्वेनाऽनुसन्धीयमानत्वरूपसन्निहितत्वस्योपकुम्भादौ पूर्वपदार्थेऽभावेन तादृशव्युत्पत्तेर्भङ्गादिति भावः। प्रकृतित्वादिति—प्रकृतित्वञ्च प्रत्ययविधावुद्देश्यत्वम्। विशिष्टस्यैवाऽर्थवत्त्वाच्चेति—व्यपेक्षावादिमते तु 'चित्रगुमानये'त्यादौ, 'प्राप्तोदकं गच्छे'त्यादौ च विशिष्टस्याऽर्थवत्त्वाऽभावेन 'प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमि'ति व्युत्पत्तौ प्रकृत्यर्थाऽभावात्प्रत्ययार्थकर्मत्वादेन्वयाऽऽपत्तिरपि, उदकपदेऽलक्षणायां विनिगमकाऽभावरूपो दोषश्च स्यादेवेति भावः।

व्यपेक्षावादिमतप्रस्तावे 'राजपदादेः सम्बन्धिनि लक्षणयैवे'ति यदुक्तं तत्खण्डयति—किञ्चेति—सम्बन्धिनि लक्षणेत्यनेन सम्बन्धिनि लक्षणेति तात्पर्यम्, सम्बन्धे लक्षणेति वा। तदुभयमपि न युक्तिक्षममित्याह—नाद्य इति। इति विवरणविरोधादिति। राजपुरुषादौ राजपदादेः सम्बन्धिनि लक्षणायां तस्याऽभेदसंसर्गेण पुरुषपदार्थादावन्वयस्य वाच्यतया 'राजपुरुष' इति समासाद्राजसम्बन्धिप्रकारकस्याऽभेदसंसर्गकस्य, 'राज्ञः पुरुष' इति वाक्याच्च राजसम्बन्धप्रकारकस्याऽऽश्रयत्वसंसर्गकस्य बोधस्योदये समासविग्रहवाक्ययोः समानार्थकत्वाऽभावात् समासवाक्यस्य विवियमाणस्य विग्रहवाक्येन विवरणेन विरोध स्पष्ट एवेति भावः। वृत्तिसमानार्थवाक्यस्यैवेति—वृत्तिविग्रहयोः समानार्थत्वे "कालाः परिमाणिना"

स्यात्। नान्य । राजसम्बन्धरूपपुरुष इत्यनन्वयप्रसङ्गात्।

---

इत्यादिसूत्रस्थभाष्यमप्यनुकूलम्। तत्र हि—किंप्रधानोऽय समास इति प्रश्नस्य "उत्तरपदार्थप्रधान" इत्युत्तरे 'राज पुरुष राजपुरुष इत्यादौ विग्रहे उत्तरपदादुत्तर श्रूयमाणा विभक्तिर्यथा समासादपि श्रूयते तथाऽत्राऽपि मासो जातस्येति विग्रहे जातपदादुत्तर श्रूयमाणा षष्ठी विभक्ति 'मासजात' इतिसमासादपि श्रूयेत' इत्याशङ्कितम् आशङ्क्य च "अभिहित सोऽर्थोऽन्तर्भूत प्रातिपदिकार्थ सम्पन्न इति षष्ठी न भवती"तिसमाहितम्। अत्र विग्रहीयषष्ठीविभक्तेः समास आपत्तिशङ्काया तस्यार्थस्य समासेऽन्तर्भावेन समाधानेन च वृत्तिविग्रहयो समानार्थकत्वभावेदितमेव भवति। ननूक्तभाष्यादितो विवरणत्व वृत्तिजन्यप्रतीतिविषयाथप्रतीतिजनकत्वमेवास्तु, तच्च प्रकृतेऽक्षतम्, समास (वृत्ति) जन्यप्रतीतिविषयसमासाजन्यप्रतीतिविषयराजसम्बन्धविषयकप्रतीतिजनकत्वात् राज पुरुष इतिवाक्यस्य, समासार्थे सम्बन्धिनि सम्बन्धस्याऽपि प्रविष्टत्वादित्यत आह—अन्यथेति—अन्यथा = वृत्त्यसमानार्थवाक्यस्याऽपि उक्तप्रतीतिजनकत्वावच्छिन्नस्य विवरणत्वे। तस्मात् = विवरणात्। शक्तिनिर्णयो न स्यादिति—विवरणविव्रियमाणयो समानार्थकत्वनियमे हि विवरणस्य शक्तिग्राहकत्व सम्भवेत्। असमानार्थकस्याऽपि उक्तस्य विवरणत्वाङ्गीकारे तु विवरणविव्रियमाणयो समानार्थकत्वनियमभङ्गे विवरणाद्विव्रियमाणस्य शक्तिग्रहो 'विवृतेर्वदन्ती'त्यनेन वृद्धोक्तेन सूचितो न स्यादिति भाव ।

'राजपदादे सम्बन्धे लक्षणा' इत्यपि न विचारसहमित्याह—नान्य इति। इत्यन्वयप्रसङ्गादिति—राजसम्बन्धस्य नामार्थत्वेन अभेदसम्बन्धेनैव पुरुषेणाऽन्वयबोध स्यान्नत्वाश्रयसम्बन्धेनेतिभाव । ननु समानविभक्तिकत्व नामार्थयोरभेदबोधे तन्त्रम्, तच्चाऽत्र नास्तीति, कथ राजसम्बन्धरूप पुरुष इति बोधापत्तिरिति चेत्?—न, नीलोत्पलादिसमासे दधिसुन्दरमित्यादौ वाक्ये च व्यभिचारात् समानविभक्तिकत्वस्योक्तबोधे प्रयोजकत्वाऽसम्भवेन विरुद्धविभक्तिराहित्यस्यैव नामार्थयोरभेदबोधे तन्त्रत्वाङ्गीकारात् इत्यन्यत्र प्रपञ्चितम्।

ननु विवरणविव्रियमाणयोर्वृत्तिविग्रहयोर्विग्रहविरहमाणयोर्वा समानार्थकत्वनियम विवरणस्य शक्तिग्राहकत्वानुरोधात्समानार्थकत्व समानविशेष्यप्रकारकबोध

ननु तर्हि वैयाकरण इत्यस्य व्याकरणमधीते इति, पाचक इत्यस्य पचतीति कथं विग्रहः, वृत्तिसमानार्थत्वाभावादित्यत आह—

आख्यातं तद्धितकृतोर्यत्किञ्चिदुपदर्शकम् ।
गुणप्रधानभावादौ तत्र दृष्टो विपर्ययः ॥ इति ।

तद्धितकृतोर्यत्किञ्चिदर्थबोधकं विवरणमाख्यातं तिङन्तमिति यावत्, तत्र विवरणविव्रियमाणयोर्विशेष्यविशेषणभावविपर्ययो दृष्ट इति । कृदन्ततद्धितान्तयोराश्रयप्रधान्यम्, आख्याते व्यापारस्येति बोध्यम् । नन

---

जनकत्वरूपं समानाकारकबोधजनकत्वं वाच्यम्, तथा च वैयाकरणादौ तद्धिते व्याकरणमधीते इत्यादे 'पाचक' इत्यादौ कृदन्ते च पचतीत्यादेः कथं विग्रहत्वम्, विशेष्यविशेषणभावव्यत्यासादित्याशयेनाऽऽशङ्कते—ननु तर्हीति । समाधत्ते—आख्यातमिति—आख्यातं = तिङन्तम् तद्धितकृतोस्तद्धितान्तकृदन्तयोर्यत्किञ्चित् = विशेष्यविशेषणभावतदवच्छेदकसंसर्गाऽतिरिक्तत्वेन, उपदर्शकं = विवरणं भवति । उपदर्शकमित्यस्य व्याख्यानमाह—अर्थबोधकमिति तस्याऽपि व्याख्यानमाह-विवरणमिति । ननु साकल्येन विवरणं कस्मान्न भवतीत्यत आह—गुणप्रधानभावादौ विशेषणविशेष्यभावतदवच्छेदकसंसर्गेषु तत्र आख्याते तिङन्ते विपर्ययः तद्धितान्तकृदन्तापेक्षया व्यत्यासो वैपरीत्यमिति यावत् दृष्टः शिष्टानुभवसिद्धोऽस्तीत्यर्थः । ननु कोऽसौ विपर्यय इत्यत आह—कृदन्ततद्धितान्तयोराश्रयप्राधान्यम्, आख्याते च व्यापारस्य (प्राधान्यम्) इतिबोध्यमिति ।

एवञ्च तिङन्तं तद्धितान्तकृदन्तयोर्यत्किञ्चिद्विवरणमेव, न तु साकल्येन विवरणम् । एवञ्च विवरणतुल्यत्वाद्गौणमिदं विवरणमिति भावः ।

परे तु 'तत्र दृष्टो विपर्ययः' इत्यस्य तद्धितान्तकृदन्तयोः कर्त्रादिमुख्यविशेष्यकबोधजनकत्वम्, विग्रहवाक्यस्य तिङ्घटितस्य भावनामुख्यविशेष्यकबोधजनकत्वम्—तद्धितान्तादेर्यत्प्रकारकयद्विशेष्यकबोधजनकत्वं तद्विपरीतविशेष्यविशेषणभावापन्नार्थविषयकबोधजनकत्वमिति यावत् इत्यर्थो न, एकाधिकरणे पूर्वदृष्टगुणत्यागपूर्वकं गुणान्तरस्वीकारस्यैव विपर्ययपदार्थत्वात् आश्रयव्यापारयोः विशेष्यत्वादिविपर्यये सत्वेऽपि तस्याऽऽख्यातनिष्ठत्वाऽभावात्, तत्रेत्यनेन चाख्यातस्यैव परामर्शेन तत्र विपर्ययस्यादर्शनात् । किन्तु—लोकेऽन्यत्र प्रयुक्ततिङन्तस्य यथा भावनामुख्य

विशेष्यकबोधजनकत्व न तथा बोधजनकत्व विग्रहवाक्यघटकस्यापि तस्य, अपितु तद्धितान्तादिवत् कआदिमुख्यविशेष्यकबोधजनकत्वमेव तस्येत्यर्थ । एवञ्च न वृत्तिवाक्ययो समानार्थत्वभङ्ग इतिभाव । हरिपदमेतत्समानार्थक, पुञ्जरा जेनाप्येवमेव व्याख्यातम् । अनेन तुल्यन्यायात्सर्वत्र वृत्त्यर्थप्रदर्शकवाक्ये एवमेवेति सूचितम् । तथा च "तद्वहति" इतिसूत्रभाष्ये "वहत्यर्थे रथादिभ्य प्रत्ययविधान मनर्थकम् "तस्येदम्" इति विहितत्वात्" इत्युक्त्वा वोढेति द्रव्यप्रधान वहतीति क्रियाप्रधानमित्याशयेनान्य शब्दो रथ वहति, अन्यो रथस्य वोढेति, तेन न सिध्यतीत्याशङ्क्य "यसामान्यात्सिद्ध, य एवार्थो रथ वहति, स एव रथस्य वोढे"ति तद्वैयर्थ्यदार्ढ्यं कृत्वा "द्विरथ्य इत्यादौ यतो लुङ्माभूदित्येतदर्थं तदि"ति सिद्धान्त उक्त, इदमर्थे प्रत्यये तु तस्य प्राग्दीव्यतीयत्वेन "द्विगोर्लुक्" इति लुक्स्यात्, अय तु न प्राग्दीव्यतीय, इति न लुक् । "य एवार्थ" इत्यादे — रथस्य विग्रहभूते रथ वहतीत्यत्र य एवार्थ स एवायस्तद्विग्रहभूते रथस्य वोढेत्यत्र-त्यर्थ । विग्रहाऽघटकतिङन्ते तु क्रियाप्राधान्यमेव । वृत्तिवाक्ययो समानार्थत्वाऽनुरोधात् 'चित्रा गावो यस्ये'ति विग्रहस्याऽपि चित्रगोस्वामीत्याकारकबोधजनकत्व-मङ्गीक्रियते । एव 'प्राप्तोदक' इति समास प्राप्तिकर्तृदककर्मेत्याकारकमेव बोध जनयति, उदके विशेष्यभूते कर्मत्वनिरूपकत्वस्य बाधाद्विशेषणीभूतप्राप्तौ 'शिखी ध्वस्त' इति यत्पर्यवसानम् । शाब्दबोधस्तु विशिष्टे तदारोपेणोपपाद्य । अत एव—प्राप्तादिपदे विशेष्यविशेषणभावव्यत्यासकल्पनप्रयुक्तगौरव न । अत एव पूर्वोत्तरत्या सामानाधिकरण्यस्य बहुव्रीह्युपजीव्यस्य भङ्गापत्ति पुंवद्भावाऽना पत्तिश्च नेति यद्वोत्तरमन्यत्र विस्तर इति सारीयकारिकाकृत ।

अत्र यत्र तु 'वैयाकरण' इत्यस्य 'व्याकरणमधीते य स' इत्येतावानेव विग्रह, "तदधीते" इत्यनुशासनेऽपि 'वाक्ये वाक्यैकदेश' इति न्यायेन 'य' 'स' इत्ये तयारध्याहार एव । 'पाचक' इत्यस्य च 'पचति य स' इत्येव विग्रह । व्या-करणमधीते' 'पचति' इत्येत मात्र विग्रह इति तु अध्याहारवादात् । एव 'प्राप्त मुदक यम्' 'चित्रा गावो यस्य' इत्यादावपि निराकाङ्क्षत्वाय तच्छब्दाध्याहार एव, यच्छब्दयो परस्पर नित्यसाकाङ्क्षत्वात् । एवञ्च यत्कर्तृकव्याकरणाध्ययनं स, अर्थात्—व्याकरणाऽध्ययनकर्तेत्येव विग्रहार्थो वृत्त्यर्थश्च तच्छब्दघटितविग्रहे

ननु तर्हि वैयाकरण इत्यस्य व्याकरणमधीते इति, पाचक इत्यस्य पचतीति कथं विग्रह, वृत्तिसमानार्थत्वाभावादित्यत आह—

आख्यात तद्धितकृतोर्यत्किञ्चिदुपदर्शकम्।
गुणप्रधानभावादौ तत्र दृष्टो विपर्य्ययः ॥ इति।

तद्धितकृतोर्यत्किञ्चिदर्थबोधकं विवरणमाख्यातं तिङन्तमिति यावत्, तत्र विवरणविव्रियमाणयोर्विशेष्यविशेषणभावविपर्ययो दृष्ट इति। कृदन्त तद्धितान्तयोराश्रयप्राधान्यम्, आख्याते व्यापारस्येतिबोध्यम्। ननु

जनकत्वरूप समानाकारकबोधजनकत्वं वाच्यम्, तथा च वैयाकरणादौ तद्धिते व्याकरणमधीते इत्यादे 'पाचक' इत्यादौ कृदन्ते च पचतीत्यादे कथं विग्रहत्वम्, विशेष्यविशेषणभाव-व्यत्यासादित्याशयेनाऽऽशङ्कते—ननु तर्हीति। समाधत्ते—आख्यातमिति—आख्यात = तिङन्तम् तद्धितकृतास्तद्धितान्तकृदन्तयोर्यत्किञ्चित् = विशेष्यविशेषणभावतदवच्छेदकसंसर्गाऽतिरिक्तत्वेन, उपदर्शक = विवरणं भवति। उपदर्शकमित्यस्य व्याख्यानमाह—अर्थबोधकमिति तस्याऽपि व्याख्यानमाह-विवरणमिति। ननु साकल्येन विवरणं कस्मान्न भवतीत्यत आह—गुण प्रधानभावादौ विशेषणविशेष्यभावतदवच्छेदकसंसर्गेषु तत्र आख्याते विग्रहे विपर्ययः तद्धितान्तकृदन्तापेक्षया व्यत्यासो वैपरीत्यमिति यावत् दृष्टः शिष्टानुभवसिद्धोऽस्तीत्यर्थः। ननु कोऽसौ विपर्यय इत्यत आह—कृदन्ततद्धितान्तयोराश्रयप्राधान्यम्, आख्याते च व्यापारस्य (प्राधान्यम्) इतिबोध्यमिति।

एवञ्च तिङन्तं तद्धितान्तकृदन्तयोर्यत्किञ्चिद्विवरणमेव, न तु साकल्येन विवरणम्। एवञ्च विवरणतुल्यत्वाद्गौणमिदं विवरणमिति भावः।

परे तु 'तत्र दृष्टो विपर्यय' इत्यस्य तद्धितान्तकृदन्तयो कर्त्रादिमुख्यविशेष्यकबोधजनकत्वम्, विग्रहवाक्यस्य तिङघटितस्य भावनामुख्यविशेष्यकबोधजनकत्वम्—तद्धितान्तादेर्यत्प्रकारकयद्विशेष्यकबोधजनकत्वं तद्विपरीतविशेष्यविशेषणभावापन्नार्थविषयकबोधजनकत्वमिति यावत् इत्यर्थो न, एकाधिकरणे पूर्वदृष्टगुणत्यागपूर्वकं गुणान्तरस्वीकारस्यैव विपर्ययपदार्थत्वात् आश्रयव्यापारयो विशेष्यतायां विपर्ययसत्वेऽपि तस्याऽऽख्यातनिष्ठत्वाऽभावात्, तत्रेत्यनेन चाख्यातस्यैव परामर्शेन तत्र विपर्ययस्यादर्शनात्। किन्तु—लोकेऽन्यत्र प्रयुक्ततिङन्तस्य यथा भावनामुख्य

प्रतीतिर्माभूत् समुदायशक्त्यैव कमलपदात्पुष्पविशेषप्रत्ययः स्यादिति चेन्न—

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी ।

इत्यभियुक्तोक्तेः अवयवार्थसंवलितसमुदायार्थे पद्मे शक्तिस्वीकारात् ।

अत एव चतुर्विधः शब्दः । यथा—रूढः, योगरूढः, यौगिकः, यौगिकरूढश्चेति । अवयवार्थमनपेक्ष्य समुदायशक्तिमात्रेणार्थबोधकत्वं रूढत्वम्, रथन्तरमित्यादौ । अवयवार्थसंवलितसमुदायशक्त्याऽर्थबोधकत्वं योगरूढत्वम्, पङ्कजमित्यत्र । अवयवशक्त्यैवार्थबोधकत्वं यौगिकत्वम्, पाचिकापाठिकेत्यादौ । अवयवशक्त्या समुदायशक्त्या चार्थबोधकत्वं यौगिकरूढत्वम्, मण्डपानकर्तृपरोऽपि गृहविशेषपरोऽपि मण्डपशब्द उदाहरण

---

विशेषे रथकरणकर्तृत्वारोपात्सङ्गच्छते । अत एव च वृत्तिविग्रहयोः समार्थत्वमपि सङ्गच्छत इति भावः । ननु एकार्थीभावे पङ्कजपदे पङ्कजनिकर्तृपद्मस्य बोधस्य स्थाने कमलपद इव 'पद्म' इत्येतन्मात्रस्यैव बोधो जायताम्, अत्र वृत्तेर्जहत्स्वार्थत्वादित्याशयेनाऽऽशङ्कते—ननु विशिष्टेति । समाधत्ते—नेति । अभियुक्तोक्तेरिति—शब्दशक्तिस्वभावादत्र पङ्कजनिकर्तृपद्मत्वेनैव बोधः । अत एव 'कुजनमुखपङ्कजनिशाकरोऽहम्' इत्यादौ 'कुजनमुखपद्मनिशाकरोऽहम्' इत्यपेक्षया विलक्षणविच्छित्तिविशेषो ध्वनिविशेषः, पूर्वत्र कुजनमुखानां पङ्कलिप्तत्वध्वनिः, उत्तरत्र तद्विपरीतः सौष्ठवध्वनिरिति । एवञ्चाऽत्र रूढेर्विरोधिन्या अभावाद्वृत्तेर्जहत्स्वार्थत्वं नास्ति, किन्तु अवयवार्थसंवलितसमुदायार्थबोधादजहत्स्वार्थत्वमेव । रूढेर्विरोधिनीत्वे जहत्स्वार्था, तस्या अविरोधिनीत्वे त्वजहत्स्वार्थेति वृद्धानां भेदव्यवहारादिति भावः ।

अत एवेति—अवयवार्थसंवलितसमुदायार्थे शक्तिस्वीकारादेवेत्यर्थः । इयमेव शक्तिर्योगरूढिरिति बोध्यम् । एतदस्वीकारे योगरूढशब्दस्याऽभावात् शब्दस्य त्रैविध्यापत्तौ चतुर्विधत्वं न स्यादिति भावः । चतुर्विध इति—अत्र सर्वत्र शक्तित्रयम्—रूढशब्दे रूढिरिति, योगरूढशब्दे योगरूढिरिति, यौगिकशब्दे योग इति, यौगिकरूढशब्दे चार्थभेदेन शक्तिद्वयम्—योगो रूढिश्चेति । क्रमेण तल्लक्षणमाह—अवयवार्थेति । यौगिकरूढत्वमिति—नानार्थकोऽयं शब्दः । यथा मण्डप-

रथन्तरशब्दाद्रथिकस्यापि प्रत्ययः किन्न स्यादिति चेन्नैवम् । 'रूढिर्योगमपहरति' इति न्यायात् । ननु विशिष्टशक्तिस्वीकारे पङ्कजपदादवयवार्थ

तच्छब्दार्थ तृतीयविशेष्यविशेषणभावस्य प्रवेशात् वृत्तिविग्रहयोः समानविशेष्यविशेषणक एव बोधः । एवम्—यत्कर्तृकपाकः सः = अर्थात्—पाककर्ता, यत्कर्मक प्राप्तिकर्तृभिन्नोदकः सः, अर्थादुदककर्तृकप्राप्तिकर्म यत्स्वामिकचित्राऽभिन्नगव्यः सः, अर्थात्—चित्राऽभिन्नगवीस्वामीत्यादिरेव विग्रहार्थो वृत्त्यर्थश्च । 'प्राप्ता भार्या य स प्राप्तभार्य' इत्यादौ वृत्तौ पुंवद्भावश्च विग्रहावस्थाकालिकैकधर्मिबोधकत्वरूपसामानाधिकरण्यमादाय भूतपूर्वगत्याऽऽरम्भसामर्थ्यात् । पूर्वोत्तरपदयोरेकधर्मिबोधकत्वरूपसामानाधिकरण्यस्य बहुव्रीह्युपजीव्यस्य प्राप्तोदकादौ भङ्गापत्तिस्त्वेकार्थीभावे नान्तरीयकतया सह्या एव । राजपुरुषादौ 'राज्ञः पुरुषः' इत्यादिरेव विग्रहः । कृद्धितान्तबहुव्रीहिषु तु यत्तच्छब्दयोर्विग्रहे प्रवेशाद्वृत्तिविग्रहयोः समानार्थत्वमिति निष्कर्षः । "आख्यातं तद्धितकृतोरि"ति कारिकाऽपि—तद्धितकृदन्तयोराख्यातमात्रं विशेष्यविशेषणभावविपर्यासान्न पूर्णं विवरणम्, किन्तु यत्किञ्चिदंशस्य विवरणम्, यत्तदोरध्याहारात्तु तत्पूर्णं विवरणमितिभाव-इत्येवमेव व्याख्येया । एवञ्च विग्रहस्थतच्छब्दार्थेन तु दृष्टविशेष्यविशेषणभावस्य लाभात् वृत्तिविग्रहयोर्विशेष्यविशेषणभावव्यत्यासकल्पनाप्रयुक्तं नैव गौरवम्, नाऽपि 'क्रियाप्रधानमाख्यातमि'ति भाष्य "भावप्रधानमाख्यातमि"तिनिरुक्ते च विग्रहस्यातिरिक्तत्वेन शक्त्यन्तरकल्पना, नाऽपि प्राप्तिकर्तृभिन्नोदककर्मेति वृत्तिविग्रहयोर्बोधं स्वीकृत्य कर्मत्वनिरूपकत्वस्याङ्के आरोपकल्पनागौरवम् इति सुधिया विभावयन्निवत्याचक्ष्महे ।

ननु एकार्थीभावे स्वीकृतेऽपि व्युत्पत्तिकालिकधातुप्रत्ययगतार्थस्य रथन्तरमित्यादौ कुतस्त्याग इत्याशयेनाशङ्कते—नन्विति । रथिकस्यापीति—रथेन तरतीति विग्रहे "संज्ञायां भृतॄवृजिधारिसहितपिदमः" इति सूत्रेण रथशब्दात् "कर्तरि कृदिति" सहकारेण कर्तरि खच्प्रत्यय इति साधनबलात् रथकरणकतरणकर्तुरपि बोधोऽस्तु, एकार्थीभावाच्च सामान्यविशेषस्यापि बोधोऽस्तु, धातुप्रत्ययार्थस्य त्यागे किं मानम् ? इति भावः । समाधत्ते—नैवमिति—न्यायादिति—"समर्थः पदविधि"रिति सूत्रबलाद्व्युत्पत्तिकालिकधातुप्रत्ययाद्यर्थस्य त्यागोऽप्यन्तरबोधश्च । "संज्ञायां भृ" इत्यनेन "कर्तरि कृत्" इत्यनेन च साधनन्तु साम

प्रतीतिर्माभूत् समुदायशक्त्यैव कमलपदात्पुष्पविशेषप्रत्ययः स्यादिति चेन्न—

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी ।

इत्यभियुक्तोक्ते' अवयवार्थसंवलितसमुदायार्थे पद्मे शक्तिस्वीकारात् ।

अत एव चतुर्विधः शब्दः । यथा—रूढ, योगरूढ, यौगिक', योगिकरूढश्चेति । अवयवार्थमनपेक्ष्य समुदायशक्तिमात्रेणार्थबोधकत्वं रूढत्वम्, रथन्तरमित्यादौ । अवयवार्थसंवलितसमुदायशक्त्याऽर्थबोधकत्वं योगरूढत्वम्, पङ्कजमित्यत्र । अवयवशक्त्यैवार्थबोधकत्वं यौगिकत्वम्, पाचिकापाठिकेत्यादौ । अवयवशक्त्या समुदायशक्त्या चार्थबोधकत्वं यौगिकरूढत्वम्, मण्डपानकर्तृपरोऽपि गृहविशेषपरोऽपि मण्डपशब्दः उदाहरण

---

विशेषे रथकरणकतरणकर्तृत्वारोपात्सङ्गच्छते । अत एव च वृत्तिविग्रहयोः समार्थत्वमपि सङ्गच्छत इति भावः । ननु एकार्थीभावे पङ्कजपदे पङ्कजनिकर्तृपद्मस्य बोधस्य स्थाने कमलपद इव 'पद्म' इत्येतमात्रस्यैव बोधो जायताम्, अत्र वृत्तेर्जहत्स्वार्थत्वादित्याशयेनाऽऽशङ्कते—नन्विति । समाधत्ते—नेति । अभियुक्तोक्तेरिति—शब्दशक्तिस्वभावात् पङ्कजनिकर्तृपद्मत्वेनैव बोधः । अत एव 'कुजनमुखपङ्कजनिशाकरोऽहम्' इत्यादौ 'कुजनमुखपद्मनिशाकरोऽहम्' इत्यपेक्षया विलक्षणविच्छित्तिविशेषो ध्वनिविशेषः, पूर्वत्र कुजनमुखानां पङ्कजातित्वध्वनिः, उत्तरत्र तु तद्विपरीतः सौन्दर्यध्वनिरिति । एवञ्चाऽत्र रूढेर्विरोधिनीत्वाऽभावाद्वृत्तेर्जहत्स्वार्थत्वं नास्ति, किन्तु अवयवार्थसम्वलितसमुदायार्थबोधादजहत्स्वार्थत्वमेव । रूढेर्विरोधिनीत्वे जहत्स्वार्था, तस्या अविरोधिनीत्वे त्वजहत्स्वार्थेति वृद्धानां भेदव्यवहारादिति भावः ।

अत एवेति—अवयवार्थसम्वलितसमुदायार्थे शक्तिस्वीकारादेवेत्यर्थः । इयमेव शक्तिर्योगरूढिरिति बोध्यम् । एतदस्वीकारे योगरूढशब्दस्याऽभावात् शब्दस्य त्रैविध्यापत्तौ चतुर्विधत्वं न स्यादिति भावः । चतुर्विध इति—अत्र सर्वत्र शक्तित्रयम्—रूढशब्दे रूढिरिति, योगरूढशब्दे योगरूढिरिति, यौगिकशब्दे योग इति, यौगिकरूढशब्दे चार्थभेदेन शक्तिद्वयम्—योगो रूढिश्चेति । क्रमेण तल्लक्षणमाह—अवयवार्थेति । यौगिकरूढत्वमिति—नानार्थकोऽयं शब्दः । यथा मण्डप-

रथन्तरशब्दाद्रथिकस्यापि प्रत्यय किन्नस्यादिति चेन्नैवम्। 'रूढियोंगा थमपहरति' इति न्यायात्। ननु विशिष्टशक्तिस्वीकारे पङ्कजपदादवयवार्थ

तच्छब्दार्थे वृत्तीयविशेष्यविशेषणभावस्य प्रवेशात् वृत्तिविग्रहयोः समानविशेष्य विशेषणक एव बोध । एवम्—यत्कर्तृकपाक स =श्रर्थात्—पाककर्ता, यत्कर्मक प्राप्तिकर्मभिन्नादक तद् श्रर्थादुदककर्तृकप्राप्तिकम यत्स्वामिकचित्राऽभिन्नगव्य स, अर्थात्—चित्राऽभिन्नगवीस्वामीत्यादिरेव विग्रहार्थो वृत्त्यर्थश्च। 'प्राप्ता भार्या यं स प्राप्तभार्य' इत्यादौ वृत्तौ पुवद्भावश्च विग्रहास्थाकालिकैकधर्मिबोधकत्वरूपसामा नाधिकरण्यमादाय भूतपूर्वगत्यारम्भसामर्थ्यात्। पूर्वोत्तरपदयोरैकधर्मिबोधकत्वरूप सामानाधिकरण्यस्य बहुव्रीह्युपजीव्यस्य प्राप्तोदकादौ मङ्गापत्तिस्त्वेकार्थीभावे नान्तरीयकतया सह्या एव। राजपुरुषादौ 'राज्ञः पुरुष' इत्यादिरेव विग्रह । कृत द्धितान्तबहुव्रीहिषु तु यत्तच्छब्दयोर्विग्रहे प्रवेशाद्वृत्तिविग्रहयो समानार्थत्वमिति निष्कर्ष । "आख्यातं तद्धितकृतोरिति कारिकाऽपि—तद्धितकृदन्तयोराख्यातमात्र विशेष्यविशेषणभावविपर्ययान्न पूर्ण' विवरणम्, किन्तु यत्किञ्चिदशस्य विवरणम्, यत्तदोरध्याहारात्तु तत्पूर्णं विवरणमितिभाव–इत्येवमेव व्याख्येया। एवञ्च विग्रह स्थतच्छब्दार्थेतु दृष्टविशेष्यविशेषणभावस्य लाभात् वृत्तिविग्रहयोर्विशेष्यविशेषणभा वव्यत्यासकल्पनाप्रयुक्त नैव गौरवम्, नाऽपि क्रियाप्रधानमाख्यातमि ति भाष्ये "भावप्रधानमाख्यातमि"तिनिरुक्ते च विग्रहस्यातिरिक्तत्वेन सङ्कोचकल्पना, नाऽपि प्राप्तिकर्मभिन्नोदककर्मेति वृत्तिविग्रहयोर्बोध स्वीकृत्य कर्मत्वनिरूपकत्वस्योदके श्रारोपकल्पनागौरवम् इति सुधिया विभावयन्त्वित्याचक्ष्महे।

ननु एकार्थीभावे स्वीकृतेऽपि व्युत्पत्तिकालिकधातुप्रत्ययगतार्थस्य रथन्तर मित्यादौ कुतस्त्याग इत्याशयेनाशङ्कते—नन्विति। रथिकस्यापीति—रथेन तरतीति विग्रहे "सञ्ज्ञायां भृतृवृजिधारिसहितपिदम" इति सूत्रेण रथशब्दात् "कर्तरि कृदिति" सहकारेण कर्तरि खच्प्रत्यय इति साधनवलात् रथकरणकतरण कर्तुरपि बोधोऽस्तु, एकार्थीभावाच्च सामविशेषस्यापि बोधोऽस्तु, धातुप्रत्ययो यार्थस्य त्यागे किं मानम्?, इति भाव । समाधत्ते—नैवमिति—न्यायादिति— "समथ पदविधि"रिति सूत्रबलाद्व्युत्पत्तिकालिकधातुप्रत्ययार्थस्य त्यागोऽथा न्तरबोधश्च। "सञ्ज्ञायां भृ" इत्यनेन "कर्तरि कृत्" इत्यनेन च साधनन्तु साम

प्रतीतिर्माभूत् समुदायशक्त्यैव कमलपदवत्पुष्पविशेषप्रत्यय स्यादिति चेन्न—

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी ।

इत्यभियुक्तोक्ते अवयवार्थसवलितसमुदायार्थे पद्मे शक्तिस्वीकारात् । अत एव चतुर्विध शब्द । यथा-रूढ, योगरूढ, यौगिक, योगिकरूढश्चेति । अवयवार्थमनपेक्ष्य समुदायशक्तिमात्रेणार्थबोधकत्वं रूढत्वम्, रथन्तरमित्यादौ । अवयवार्थसवलितसमुदायशक्त्याऽर्थबोधकत्व योगरूढत्वम्, पङ्कजमित्यत्र । अवयवशक्त्यैवार्थबोधकत्व यौगिकत्वम्, पाचिकापाठिकेत्यादौ । अवयवशक्त्या समुदायशक्त्या चार्थबोधकत्व यौगिकरूढत्वम्, मण्डपानकर्तृपरोऽपि गृहविशेषपरोऽपि मण्डपशब्द उदाहरण

विशेषे रथकरणकतरणकर्तृत्वारोपात्सङ्गच्छते । अत एव च वृत्तिविग्रहयो समार्थत्वमपि सङ्गच्छत इति भाव । ननु एकार्थीभावे पङ्कजपदे पङ्कजनिकर्तृपद्मस्य बोधस्य स्थाने कमलपद इव 'पद्म' इत्येतमात्रस्यैव बोधो जायताम्, अत्र वृत्ते जहत्स्वार्थात्वादित्याशयेनाऽऽशङ्कते—ननु विशिष्टेति । समाधत्ते—नेति । अभियुक्तोक्तेरिति—शब्दशक्तिस्वभावादत्र पङ्कजनिकर्तृपद्मत्वेनैव बोध । अत एव 'कुजनमुखपङ्कजनिशाकराऽहम्' इत्यादौ 'कुजनमुखपद्मनिशाकराहम्' इत्यपेक्षया विलक्षणविच्छित्तिविशेषो ध्वनिविदाम्, पूर्वत्र कुजनमुखाना पङ्कलित्वध्वनि, उत्तरत्र तु तद्विपरीत सौष्ठवध्वनिरिति । एवञ्चात्र रूढेर्विरोधिनीत्वाऽभावाद्वृत्तेर्जहत्स्वार्थात्व नास्ति, किन्तु अवयवार्थसम्वलितसमुदायार्थबोधाज्जहत्स्वार्थात्वमेव । रूढेर्विरोधिनीत्वे जहत्स्वार्था, तस्या अविरोधिनीत्वे त्वजहत्स्वार्थेति वृद्धानां मेदव्यवहारादिति भाव ।

अत एवेति—अवयवार्थसम्वलितसमुदायार्थे शक्तिस्वीकारादेवेत्यर्थ । इयमेव शक्तिर्योगरूढिरिति बोध्यम् । एतदस्वीकारे योगरूढशब्दस्याऽभावात् शब्दस्य त्रैविध्यापत्तौ चतुर्विधत्व न स्यादिति भाव । चतुर्विध इति—अत्र सर्वत्र शक्तित्रयम्—रूढशब्दे रूढिरिति, योगरूढशब्दे योगरूढिरिति, यौगिकशब्दे योग इति, यौगिकरूढशब्दे चार्थभेदेन शक्तिद्वयम्—योगो रूढिश्चेति । क्रमेण तल्लक्षणमाह—अवयवार्थेति । यौगिकरूढत्वमिति—नानार्थकोऽय शब्द । यथा मण्डप-

मिति विवेक । व्यपेक्षापक्षे दूषण शक्तिसाधकम् । हरिरप्याह—

समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ॥
बहूना वृत्तिधर्माणा वचनैरेव साधने ।
स्यान्महद्गौरव तस्मादेकार्थीभाव आश्रित ॥ इति ।

पङ्कजशब्दे योगार्थस्वीकारे शैवालादेरपि प्रत्यय स्यात् । वृत्तिधर्मा-

---

शब्द । प्रकरणविशेषे । योगशक्त्या मण्डपानकर्तृबोधक, प्रकरणविशेषे च रूढिशक्त्या गृहविशेषबोधक । यथा वा अश्वगन्धशब्द । ओषधिविशेषे रूढोऽयम्, अश्वगन्धवत्तया वाजिशालाविशेषे च यौगिक इति ।

सिंहावलोकनन्यायात्, द्विबद्धं सुबद्धमिति न्यायाच्च पुनरपि वृत्तावेकार्थीभाव निर्णीतमपि द्रढयितुमारभते—व्यपेक्षापक्ष इति । हरिरप्याह—समासे खलु भिन्नैवेति—एतेन भूषणसारे व्याख्यातेय कारिका हरेरेवेति स्पष्टम् । एतेन "फणिभाषितभाष्याब्धे शब्दकौस्तुभ उद्धृत" इति भूषणसारीयकारिकाव्या ख्याने 'उद्धृत' इत्यत्र अस्माभिरिति शेष', इति सारोक्ते 'अस्माभिः = भट्टो- जिदीक्षितै, एतेन वैयाकरणसिद्धान्तकारिका भट्टोजिदीक्षितकृता इति सूचित मि'ति कस्याऽपि व्याख्यान परास्तम्, "संक्षेपेणेह कथ्यते" इति कारिकायां— 'कथ्यते इति—हर्यादिनिबद्धकारिकाभिरितिशेष' इति दर्पणेन विरोधाच्च ।

समासे इति—इद वृत्तिमात्रोपलक्षणम्, तद्ध्वनयन्नवदति—वृत्तिधर्मा णामिति । भिन्नैव शक्तिरिति—एकार्थीभावरूपेतिशेष । तद्ध्वनयन्नवदति— तस्मादेकार्थीभाव आश्रित इति । तत्र दृष्टान्तमाह—पङ्कजशब्दवदिति— 'लौकिकपरीक्षकाणां तस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त' इति कृत्वा पङ्कजशब्दे वादिप्रतिवादिनोरुभयोरपि अवयवशक्ति विहाय समुदायशक्तिस्वीकारे बुद्धिसाम्यम् । अन्यथा तत्र शैवालादेरपि पङ्कजनिकर्तृत्वेन प्रत्ययापत्ति । समुदायशक्त्यभिन्ने कार्थीभावे तु पङ्कजनिकर्तृपद्मत्वेन बोधोऽभीष्ट ससिद्ध्यति । वृत्तिविशेषे पङ्कज शब्दे समुदायशक्तिस्वीकारस्तथापि चेत् वृत्तिसामान्ये समुदायशक्तिरपि स्वीक्रियताम्, अर्धजरतीयस्याऽनौचित्यादितिभाव । ननु शब्दस्वाभाव्यात्पङ्कजपदे एकार्थीभाव स्वीकार्ये अन्यत्राऽपि तत्स्वीकारे किं विनिगमकमित्यत आह—बहूना वृत्तिधर्मा

विशेषणलिङ्गसख्याद्ययोगादयः, "सविशेषणानां वृत्तिर्न्न" इत्यादिवचनै-रेव साध्या, इति तत्तद्वचनास्वीकार एव गौरवम्। मम तु एकार्थीभावस्वी-कारात् अवयवार्थाभावाद्विशेषणाद्ययोगो न्यायसिद्ध, वचनं च न कर्त्तव्य न्यायसिद्ध चेति लाघवम्। व्यपेक्षाया दूपणान्तरमाह—

चकारादिनिपेधोऽथ बहुव्युत्पत्तिभञ्जनम्।
कर्त्तव्यन्तन्न्यायसिद्ध त्वस्माकन्तदिति स्थिति ॥

घटपटावित्ति द्वन्द्वे साहित्यद्योतकचकारनिपेधस्त्वया कर्त्तव्य। आदिना घनश्याम इत्यादौ इवशब्दस्य। मम तु साहित्याद्यवच्छिन्ने

---

णामिति—तद्विवरणमाह—विशेषणलिङ्गेति—तत्र विशेषणम् योगो राज पुरुष इत्यादौ। अथ ऋद्धस्य राज्ञ पुरुष इति वाक्यवत् समासे ऋद्धस्य राजपुरुष इति न। लिङ्गाऽयोग —'कुक्कुटाण्डम्' मृगक्षीरमित्यादौ क्वचिद्द्रष्टव्य, न तु सर्वत्र 'कुमारीपुत्र' इत्यादौ दर्शनात्। सख्याऽयोग —"समर्थानामि"ति सूत्रे भाष्ये स्पष्टमुक्तेः—"राज्ञो राज्ञा वा पुरुष इति वाक्ये उपसर्जनपदानि सङ्ख्या विशेषयुक्त स्वार्थमभिदधति, समासे त्वन्तर्भूतस्वार्थं प्रधानार्थमभिदधती"त्यादि भाष्योक्ते। सङ्ख्यादीत्यादिपदात्—'अजानिधनी देवदत्तयज्ञदत्ता'वित्यादौ क्रमिकान्वयाऽयोगस्य, 'अमुक्ता मनता नार्ये'त्यादौ विधेयभावाद्योगस्याऽन्यस्यैव विधाऽयोगस्य च संग्रह। सविशेषणानां वृत्तिर्नेत्यादिवचनैरिति—आदि-शब्दात् 'वृत्तस्य च विशेषणयोगो न' 'कुक्कुट्यादीनामण्डादिषु' 'वृत्तौ सङ्ख्या द्ययोगश्चे'त्यादीनां सग्रह। तत्राद्यवचनद्वय वार्त्तिककृदुक्तमेव, अन्यत्तु व्याख्या नादुक्तमेवेति बोध्यम्। दूपणान्तरमाहेति—अस्य हरिरितिशेष प्रतिभाति। सारेऽपि कारिकेय विस्तृता। चकारनिपेध इति—'घटश्च पटश्चेति' वाक्यवत् व्यपक्षावादे घटपटाविनिवृत्तावपि साहित्यद्योतनार्थं चकारप्रयोग प्राप्तस्तस्य निपेध = लोपो विधेय। एकार्थीभावपक्षे तु पृथगुपस्थित्यभावात्पृथगुपस्थितिनिबन्धनसमुच्चयाऽप्रतीते समुच्चयविशिष्टस्यैव समुदायशक्त्या प्रतीतेर्न चकारप्रयोग प्राप्नोतीति भाव। तदाह—मम तु साहित्येति। इवशब्दस्येति—सादृश्यद्योतकस्येवशब्दस्य 'घन इव श्याम' इति वाक्यवत्समासेऽपि प्रयोग प्राप्तस्तस्यापि लोपो विधेय।

शक्तिस्वीकाराद् "उक्तार्थानामप्रयोग" इति न्यायात्तेषामप्रयोग । बहुव्यु त्पत्तिभञ्जनमिति—अपप्रत्ययर्थबहुव्रीहौ प्राप्तोदक इत्यादौ पृथक्शक्त्यादिना मते प्राप्तिकर्त्रभिन्नमुदकमित्यादिबोधोत्तरं तत्सम्बन्धिग्रामलक्षणाया मपि उदककर्तृकप्राप्तिकर्म ग्राम इत्यर्थलाभे प्राप्ते प्राप्तेतिक्तप्रत्ययस्य कर्त्रर्थकस्य कर्मार्थे लक्षणा, ततोऽपि समानविभक्तिकनामार्थयोरभेद सम्बन्ध इति व्युत्पत्त्या उदकाभिन्न प्राप्तिकर्मेति स्यात् । उदकस्य कर्तृत्व प्राप्तावन्वये तु नामार्थयोरभेदान्वयव्युत्पत्तिभञ्जन स्यादिति तात्पर्यं

एकार्थीभावपक्षे तु इवार्थस्य समुदायार्थेऽन्तर्भूतत्वादप्रयोग सिद्ध एवेति भाव इत्यादिबोधोत्तरमिति—इदंशबोधात्पूर्वमेवोदकपदे उदकसम्बन्धिलक्षणा मुदकस्यैकदेशतया प्राप्तपदार्थप्राप्तिकर्तुरन्वयो न स्यादत उक्तम्—बोधोत्तरमिति लक्षणायामपीति—लक्षणाऽभावे तु व्यपेक्षावादे सुतरामुदककर्तृकप्राप्तिकर्मत्वार्था लाभ इतिभाव इत्यपिना सूच्यते । इदञ्चाऽपि 'स्वबोध्यसम्बन्धो लक्षणे'ति मीमांसकमतेन । नैयायिकमते तु लक्षणाया असम्भव एवेत्यपि अपिना सूचयति इत्यर्थाऽलाभ इति--सम्बन्धिलक्षणाया प्राप्तिकर्त्रभिन्नोदकसम्बन्धीत्यर्थलाभेऽ अनुभूयमानोक्तार्थाऽलाभ इत्यर्थ । यद्यपि स्वकर्तृकप्राप्तिकर्मत्वमेव सम्बन्धित्वमि प्राप्तिकर्मत्वेन बोधो जातस्तथापि सम्बन्धत्वेनैव कर्मत्वादिभान स्यान्नतु विवक्षि तेन कर्मत्वत्वादिनेति तात्पर्यमिति द्रष्टव्यम् । अभेद एवेति—अन्यथा 'राजा पुरुष इत्यादावपि भेदबोधापत्ति । उदकाऽभिन्न प्राप्तिकर्मेति—प्राप्तिकर्माऽभिन्न मुदकमितिबोध स्यादित्यर्थ प्राप्तपदस्य क्रियाशब्दत्वेनोदकशब्दस्य जातिशब्दत्वेन चोदकस्यैव विशेष्यताया औचित्यात्, जातिद्रव्यप्रवृत्तिनिमित्तकशब्दसमवाये जातिप्रवृत्तिनिमित्तकस्यैव शब्दस्य विशेष्यता प्रयोजकत्वमिति व्युत्पत्ते । अत एव 'नीलपीत' 'पीतनील' इत्यादौ विशेष्यविशेषणभावे कामचारेऽपि 'नीलघट' इत्यादौ घटस्य विशेष्यत्वमेवेति विशेषणवाचकस्य नीलशब्दस्यैव "विशेषण विशेष्येण' तिसूत्रे प्रथमानिर्दिष्टत्वेन पूर्वनिपातनियमः । उदकस्य प्राप्तौ कर्तृतयेष्टोऽन्वयो न स्यादपित्वभेदेनैव प्राप्तिकर्मणीतिसूचयितु तथाऽभिहितम्, श्रूयमाणे न्यायाऽनादरात् । तथाचेष्टाऽन्वयो न स्यादित्यत्रैव तात्पर्यम्, नत्वत्र बोधाकारेऽपीति बोध्यम् । नामार्थयोरभेदान्वयेति—समानविभक्तिकप्रातिपदिकार्थयोरभेदान्वय

'नामार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति विभक्त्यर्थोपस्थितेः कारणत्वात्' इति व्युत्पत्तिभञ्जनं च। मम तु पृथक्शक्त्यनङ्गीकारात् विशिष्टस्यैव विशिष्टार्थवाचकत्वात् नामार्थद्वयाभावात् न क्वचिदनुपपत्तिरित्यलम् ॥

श्रीशिवभट्टसुतसतीदेवीगर्भजनागेशभट्टकृता
परमलघुमञ्जूषा समाप्ता ॥

---

व्युत्पत्तीत्यर्थः। व्युत्पत्तिभञ्जनं स्यादिति—इदमुपलक्षणम्—प्रातिपदिकार्थतयोदकस्य नामार्थस्य तत्र कर्तृतासम्बन्धेन भेदेनान्वये 'नामार्थयोर्भेदेन साक्षादन्वयोऽव्युत्पन्न' इति व्युत्पत्तेश्च भञ्जनं स्यादिति बोध्यम्। अन्यथा तण्डुलं पचतीत्यर्थे तण्डुल पचतीति वाक्यस्याऽपि प्रामाण्यापत्तिः, कर्मत्वेन तण्डुलस्य पाकेऽन्वयसम्भवात्। इतिव्युत्पत्तिभञ्जनञ्चेति—नामार्थनिष्ठभेदससर्गाऽवच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वाऽवच्छिन्नं प्रति विशेष्यतासम्बन्धेन विभक्तिजन्योपस्थितेः कारणत्वमिति व्युत्पत्तेश्च भञ्जनापत्तिरित्यर्थः। अन्यथा राज्ञः पुरुष इत्यर्थे 'राजा पुरुषः' इत्यस्याऽपि प्रामाण्यापत्तिरितिबोध्यम्। ममत्विति = एकार्थीभाववादिनस्त्वित्यर्थः। अत्रेदं बोध्यम्—'यत्तु व्यपेक्षावादिनो नैयायिकमीमांसकादयः' इत्यारभ्य ग्रन्थोऽत्र प्रायो भूषणसारीयसमानाकारक एवास्तीति।

अत्राऽयञ्च निष्कर्षः—"समर्थः पदविधिः" रितिसूत्रभाष्यात्कृत्तद्धितान्तसमासैकशेषसनाद्यन्तधातुरूपासु पञ्चसु वृत्तिष्वेकार्थीभावो नाम सामर्थ्यम्। सूत्रे पदविधित्वञ्च पदसंज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसंज्ञाशास्त्रीयोद्देश्यताऽवच्छेदकसम्पादकविधित्वम्। पदसंज्ञाप्रयोजकप्रत्ययः—सुप्तिङ् च, तदुत्पत्तिप्रयोजकसंज्ञा प्रातिपदिकसंज्ञा धातुसंज्ञा च, तदुद्देश्यताऽवच्छेदकः—कृत् तद्धितः समासत्वञ्च, सनादि च, तत्सम्पादकत्वम् कृद्विधौ, तद्धितविधौ, समासविधौ, सनादिविधौ चेति समन्वयः। एकशेषस्योक्तपदविधित्वाऽभावेऽपि—"अपवाद एकशेषो द्वन्द्वं बाधिष्यते" इति भाष्येण द्वन्द्वसमाससदृशत्वबोधनात् समाससदृशविधायकस्याऽपि लक्षणया समासविधायकत्वेन पदविधित्वसिद्धिरिति शिवम्। इति समासादिवृत्त्यर्थवादः।

काशीस्थसर्वतन्त्रेशश्रीसभापतिशास्त्रिवः।
स्वसगोत्रसुधीन्द्रश्रीदामोदरविपश्चितः ॥

किञ्चिद्वस्वमनःस्थश्रीसच्चिदानन्दशङ्करात् ।
गृहीताऽशेषतन्त्रोऽपि महाभाष्ये विशेषधी ॥
भूतिवर्णजटायोगैर्गङ्गाधर इव स्वयम् ।
नाम्नाऽपि यस्ततो लब्धहठयोगक्रियावलि ॥
'शब्दानुशासनाथाय—'पद्ये प्राथम्यलब्धित ।
सम्राजा स्वर्णपत्रेण डिम्समित्या समर्चित ॥
व्रजभूषणविप्रर्षि प्रतिष्ठापित उत्तमे ।
गयास्थैकमहाविद्यापीठेऽध्यापक उत्तम ॥
गयाप्रान्ते पुरीचैका चन्द्रवत्यभिधानिका ।
भरद्वाजकुले जातैर्मगैर्यत्र समुच्यते ॥
यत्राऽभूद्रामरूपर्षिरिष्ट श्रीनन्दनन्दन ।
विदेहेषु विशेषेण य शिष्यैरचितोऽभवत् ॥
यत्र चाऽभूत्सुधीवृन्दवन्दिताङ्घ्री रमापति ।
यस्याऽऽस्येऽध्ययने शिष्यावास्तां सुप्रथिताविमौ ॥
काश्यां विद्वद्गुरुः श्रीमद्हेमनारायण सुधी ।
गयायां विदुषाम्मान्यो देवदत्ताभिध सुधी ॥
नाऽविश्वास्यमिदं धीरा, प्रष्टव्यास्तत्कुटुम्बिन ।
अहं त्वश्रृणवं साक्षात्तयोरेव मुखादपि ॥
एकदा काशिकायां स्वनामधन्यो महासुधी ।
मां प्रति स्वगुरोश्चर्यां कुर्वन्नश्रूण्यपातयत् ॥
अहन्तु तस्य शिष्यस्य शिष्य शिष्य-पदे स्थित ।
गर्वं न यामि, किन्त्वेतत्सत्य केवलमीरितम् ॥
तस्यामेव कुले तस्मिन् श्रीशालग्रामशर्मण ।
जात श्रीमङ्गलानन्दस्तस्माद्बुद्धया बभूव य ॥
सोऽयं 'वशीधरः' शिष्य शतार्चितपदो युवा ।
व्याख्यामेतां समुत्पाद्य शिवयोर्मुदमापयत् ॥
वेदव्योमनभोद्वन्द्वप्रमाणे वैक्रमे शुचौ ।
आश्विने विजया शुक्रे वशीयं व्यरमच्छिवम् ॥

श्रीवशीधरमिश्रविरचिता परमलघुमञ्जूषाया "वशी" व्याख्या समाप्ता ।

# परमलघुमञ्जूषा

## हिन्दी अनुवाद

मैं, नागेश, निश्चयपूर्वक शिव को प्रणाम कर, निन्दा के अयोग्य, अत्यन्त लघु, इस वैयाकरण सिद्धान्त मञ्जूषा की रचना करता हूँ।

वैयाकरण सिद्धान्तों में वर्ण, पद और वाक्य इन भेदों से स्फोट ( बोधक शब्द ) तीन प्रकार का है। उनमें भी पुन जाति और व्यक्ति का भेद होने से (स्फोट) छ प्रकार का है। अखण्डपदस्फोट और अखण्डवाक्यस्फोट भी होते हैं, इनका संकलन (योग) करने से स्फोट आठ हो जाते हैं। उनमें वाक्यस्फोट मुख्य है, क्योंकि लोक में वही अर्थ का बोध कराता है, और उसीसे अर्थ की समाप्ति भी होती है। जैसा कि गौतममुनि कृत न्यायदर्शन के भाष्यकार वात्स्यायन कहते हैं– "अर्थ की पूर्णता में समर्थ पद समूह वाक्य है"। इसका 'समर्थ' यह अन्त है, उनमें ( निर्धारणे सप्तमी ) प्रत्येक वाक्य का शक्तिज्ञान अशक्य होने और सरल उपाय से वाक्य का ज्ञापन अशक्य होने के कारण, पाणिनि आदि आचार्यों ने कल्पना से पदों का विभाग और पदों में प्रकृति प्रत्ययों का विभाग कर, कल्पित अन्वय-व्यतिरेकों द्वारा केवल शास्त्रीय प्रक्रिया के लिये उनके ( प्रकृति प्रत्यय के ) अर्थ के विभाग की कल्पना की। ( लोक में बोधक होने के कारण ) वास्तव में वाक्य ही यद्यपि 'वाचक' हैं, तथापि वाक्यों का सरल उपाय से ज्ञान कराने के लिये ही आचार्यों ने असत्य होने पर भी पद, प्रकृति, प्रत्यय तथा इनके अर्थों के विभाग की कल्पना कर ली। 'घट नय' 'पट नय' इत्यादि असंख्य वाक्यों का ज्ञापन अन्य उपायों से दुष्कर है, इस कारण 'घटम्' 'नय' इन दो

पदों की कल्पना की गई। पुन 'घट + अम्' 'नी + लोट्' इन प्रकृति प्रत्ययों के विभाग की कल्पना की गई। पुन कल्पित अन्वय सहचार ( यत्सत्वे यत्सत्त्वमन्वयसहचार ) और व्यतिरेकसहचार ( यदभावे यदभावो व्यतिरेकसहचार ) के द्वारा प्रकृति प्रत्यय के अर्थों की कल्पना की गई। जैसे—'घट' शब्द रहने से 'घड़े' का ज्ञान होता है, 'घट' शब्द के न रहने पर 'पटं नय' में 'घड़े' का ज्ञान नहीं होता है, इसलिये 'घट' का अर्थ 'घड़ा' है। एवम् 'अम्' के रहने से 'कमत्व' (को) का ज्ञान होता है, उसके न रहने से 'कर्मत्व' (को) का ज्ञान नहीं होता है, इसलिये 'अम्' का अर्थ 'कर्मत्व' ( को ) है। इसी प्रकार अन्यत्र भी अर्थविभाग समझना चाहिये। ये अन्वय-व्यतिरेक सहचार भी कल्पित ही हैं, क्योंकि वास्तव में अखण्ड वाक्य ही अर्थ का बोधक है, तथा वास्तव में वाक्य नित्य है। इनमें अखण्डता के कारण अन्वयसहचार और नित्यता के कारण व्यतिरेकसहचार नहीं हो सकता है।

उन ( स्फोटों ) में व्याकरण-शास्त्र की प्रक्रिया का निर्वाह करानेवाला वर्णस्फोट है। प्रकृति प्रत्यय ही उन उन अर्थों के 'वाचक' हैं, यह उसका ( वर्णस्फोट का ) अर्थ है। उपसर्ग, निपात, धातु आदि ( आगम, आदेश, विकरण आदि ) का विभाग भी कल्पित है। स्थानी—लट् आदि, आदेश—तिप् आदि भी कल्पित ही हैं। उनमें ऋषियों ने लट् आदि स्थानियों का कल्पित अर्थ तो अपने कण्ठ ( के शब्द ) से ही कहा है ( यथा—'ल कर्मणि च भावे चाकर्मकेभ्य' इति )। आदेशों के वे अर्थ 'स्थानी के अर्थ का ज्ञापन करने में समर्थ ही आदेश होता है' इस भाष्य से होते हैं, ( 'पदन्नो' इस सूत्र पर यह भाष्य है )। इस प्रकार स्थानी वाचक हैं अथवा आदेश, यह विचार व्यर्थ ही है, क्योंकि दोनों में ही कल्पित वाचकता है। वास्तविक वाचकता तो कल्पना से ज्ञापित ( प्रकृति प्रत्यय के ) समूहस्वरूप पद या वाक्य में ही है। क्योंकि लोगों को पद अथवा वाक्य से ही अर्थ का ज्ञान होता है। 'ज्ञातव्य के ज्ञान के लिये बहुत से उपाय हो सकते हैं' इस न्याय के अनुसार व्याकरण के भेद से स्थानी का भेद होने में भी हानि नहीं है, जैसे—देशभेद से [illegible] हो जाता है। ( किसी व्याकरण में 'सि' स्थानी है, पाणिनीय व्या[illegible] है,

तथापि कोई क्षति नहीं है।) तात्पर्य यह कि, नाम अर्थ का प्रकृति प्रत्ययों का वृत्तियों में जो एकार्थीभाव है उसका यह दिग्दर्शनमात्र है (अधिक विषय अ य आकर-ग्रन्थों से जानना चाहिये)।

लोक और वेद में यथासम्भव (वेद में सिर्फ शब्द ही प्रमाण है) 'प्रत्यक्ष, अनुमान, उपमान और शब्द प्रमाण हैं' इस (न्याय सूत्रकार) गौतम (मुनि) के सूत्र में शब्द 'आप्त' का उपदेश अथवा आप्त उपदेशस्वरूप (ही) प्रमाण (यथार्थज्ञान का जनक) है। अनुभव से वस्तु के वास्तविक रूप का पूर्ण तया निश्चयात्मक ज्ञान रखनेवाला, "रागद्वेषादि के वशीभूत होने पर भी जो असत्य नहीं बोलता वही पुरुष 'आप्त' है" यह 'चरक' में पतञ्जलि का कथन है।

तद्धर्मविशेषित (घटत्व आदि विशेषण के विशेष्य घट आदि) के शाब्दबोध (शब्द से उत्पाद्य ज्ञान) में तद्धर्मविशेषित (घटत्व आदि विशेषण के विशेष्य घट आदि) से निरूपित वृत्ति का, सम्यग्ज्ञान कारण है (अर्थ से निरूपित वृत्ति शब्द में रहती है, यह आचार्यों का नियम है)। इस प्रकार का कार्यकारणभाव न रहने से ही जिस शब्द की वृत्ति का ज्ञान नहीं है उस शब्द से अर्थज्ञान नहीं होता है और इसीलिये 'गुड' यह कहने पर मधुरत्व (मीठा पन) का ज्ञान विशेषण रूप से नहीं होता (क्योंकि मधुरत्व (मीठापन) अर्थ से निरूपित वृत्ति 'गुड' पद में है ही नहीं)।" यह समर्थश्लोक भाष्य सगत होता है। 'गुड' शब्द से 'गुडत्वजातिविशिष्ट गुड' गुडपद का अर्थ है, यही ज्ञान जातिविशेषणवाला होता है (शाब्दबोध म शब्द का भी विशे पणरूप से प्रवेश होता है, इस आशय से 'गुड पद का अर्थ' यह कहा गया है)। मधुरत्व तो 'गुड मधुर होता है, इख से उत्पन्न होने के कारण' इस अनुमान रूप अन्य प्रमाण से ज्ञात होता है। विशेष्य को विशेषणरूप से, और विशेषण को विशेष्यरूप से शक्ति जानने वाले पुरुष को घटपद से घटत्वविशेषित का ज्ञान रोकने के लिये 'तद्धर्मविशेषित' यह पद उक्त कार्यकारणभाव में दिया गया है। ज्ञान में वृत्ति के—अपने जगे हुए संस्कार (भावना) के साथ रहना, अपने आधारभूत पद का होना—ये दो सम्बन्ध हैं। इसलिये वृत्तिज्ञान-रहित, वृत्ति का विस्मरण करनेवाले, तद्वाचक पद को न जाननेवाले पुरुष को शब्द-

जन्य ज्ञान नहीं होता है। और घटपद के आश्रय होने से स्मृत आकाश व तथा उच्चारयिता होने से स्मृत चैत्र आदि का भी शाब्दजन्यज्ञान में भान न होता है। संस्कार ( भावना ) की सत्ता का अनुमान, स्मृति-स्मरण से अथ शाब्दबोध से किया जाता है। इस अंश में कोई विशेष बात नहीं है।

वह ( कार्यकारणभाव की घटकीभूत ) वृत्ति तीन प्रकार की है—शक्ति लक्षणा और व्यञ्जना। उनमें 'शक्ति' कौन सा पदार्थ है ? यह प्रश्न है।

इस पर तार्किक लोग कहते हैं—'इस शब्द से यह अर्थ समझना अथवा 'यह पद इस अर्थ का ज्ञापन करे' इस आकार की ईश्वर की इच्छा ही शक्ति है, क्योंकि ( इच्छात्मक सङ्केत और शक्ति दोनों को एक स्वीकार करने में लाघव है (दोनों को भिन्न भिन्न मानने में दो पदार्थों की कल्पना करनी पड़ती है अतः गौरव है )। यही संकेत ( और) सम्बन्ध है। यद्यपि शक्ति का विषयत्व नामक सम्बन्ध पद, अर्थ और बोध तीनों में है, तथापि बोध (ज्ञान) में रहनेवाली जन्यता से निरूपित और जनकता से उपलक्षित शक्ति का विषय वाचक है, पदजन्य ज्ञान के विषयत्व से उपलक्षित शक्ति का विषय वाच्य है, इसलिये ( वाच्य वाचक लक्षण में ) अतिव्याप्ति नहीं है। यद्यपि पहले शक्ति का ज्ञान वाक्य में ही होता है, तथापि शास्त्रकारों से कल्पित आवाप ( पदसमावेश ) और उद्वाप (पदापसारण) के द्वारा उन उन पदों का शक्तिज्ञान होता है।"

( तार्किकों का ) यह कथन ठीक नहीं है। क्योंकि आधाराधेयभाव के परिचायक किसी सम्बन्ध के न रहने से आधाराधेयभाव परिचायक सम्बन्ध से दो सम्बन्धियों में न रहने के कारण इच्छा, सम्बन्ध नहीं हो सकती है, ( और सम्बन्ध ही शक्ति है, इसलिये इच्छा, शक्ति नहीं है )। क्योंकि सम्बन्ध, दो सम्बन्धियों से भिन्न होते हुए, तथा आधाराधेय परिचायक सम्बन्ध से दोनों सम्बन्धियों में रहता हुआ विशेष्य, विशेषण और तत्सम्बन्धविषयक ज्ञान का परिचायक होता है, यह आचार्यों का व्यवहार है। जैसे—'घटयुक्त भूतल' इत्यादि स्थानों में 'संयोग' नामक सम्बन्ध दो सम्बन्धियों (घट, भूतल) से भिन्न है, दोनों ( घट, भूतल ) में रहता है, और 'घट के संयोग का आधार भूतल' इस विशिष्ट ( विशेष्य, विशेषण, तत्सम्बन्ध सहित ) ज्ञान का जनक है। यहाँ ( पदार्थों में

सम्बन्धरूप से कथित इच्छा के विषय में ) उस प्रकार 'घटशब्द इच्छायुक्त है,' अथवा 'घट शब्द का अर्थ (घड़ा) इच्छायुक्त है' यह व्यवहार नहीं होता है।

इसलिये ( इच्छा को ही सम्बन्ध न मानने के कारण ) पद और पदार्थ का ( कोई ) दूसरा सम्बन्ध ही 'शक्ति' है, जिसका दूसरा पर्याय वाच्यवाचकभाव है ( अर्थात् वाच्यवाचकभावसम्बन्ध ही 'शक्ति' है )।

शक्ति का द्योतक, शब्द, अर्थ के अध्यास ( परस्पर ऐक्यज्ञान ) से साधित 'तादात्म्य' है, वही शक्तिरूप सम्बन्ध का द्योतक है ( 'द्विबद्ध सुबद्ध' न्याय से द्विरुक्ति है )। क्योंकि दोनों ( शब्द, अर्थ ) के तादात्म्य से युक्त दोनों ( शब्द, अर्थ ) हैं, यह व्यवहार होता है ( इस व्यवहार से द्विप्रसिद्ध होने के कारण तादात्म्य अर्थ निरूपित शब्दगतवाच्यवाचकभावरूप शक्ति का द्योतक होता है )। ( यहाँ "स्मृतिरूप" से 'व्यभिचरति' पर्यन्त कुछ पाठ खण्डित है, जो संस्कृत व्याख्या में दिया गया है )। क्योंकि सामर्थ्यरूप शक्ति के प्रकाश आदि कार्य करने में भी सम्बन्ध ही सहकारी है। दीप आदि में वर्तमान प्रकाशक स्वसामर्थ्य भी तेज और वस्तु के संयोग होने पर ही वस्तु का प्रकाशक होता है, अन्यथा नहीं, यह देखा गया है। जैसा कि भर्तृहरि कहते हैं—'वह उपकार जहाँ है, वहाँ धर्म का अनुमान किया जाता है। वह शक्तियों की भी शक्ति है, गुणों का भी गुण है।' हेलाराज ने इसकी यह व्याख्या की है—ज्ञान और ज्ञानजनकत्व सामर्थ्य का सहकारी वाच्यवाचकभाव, संयोग, समवाय आदि सम्बन्ध जिस पद, दीपादि और गुणी में रहता है, वहाँ कार्य ( शाब्द, प्रत्यक्षादि ज्ञान ) देखकर ( कारण ) शाब्द, प्रत्यक्षादिज्ञानजनकत्वसामर्थ्य का अनुमान किया जाता है। यह ( वाच्यवाचकभाव, संयोग, समवायादि ) सम्बन्ध ज्ञानजनकत्वसामर्थ्यों का भी ज्ञान उत्पन्न करने और (रूपादि) गुणों के भी द्रव्य में रहने का सहकारी है।

यह ( वाच्यवाचकभाव ) सम्बन्ध पद और वाक्य में रहता है। जैसा कि न्यायभाष्यकार कहते हैं—"संकेतज्ञान के लिये यह पदात्मक शब्द का ज्ञापक व्याकरण है, वाक्यात्मक शब्द का ज्ञापक मीमांसा आदि है।" इस वचन से पदों के समान वाक्यों में भी ईश्वर का संकेत है, यह स्पष्ट ही कहा गया है। इस

